Vol. XLX.
Nos. 1-4
५०तम-वर्षस्य
१-४र्थं -संख्याः




May-August
1967
१८८९ शकीये
वैशाखात् श्रावणं यावत्।

१३७४ वङ्गाब्दीये

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

# संस्कृत साहित्य परिषत्

[ Monthly Organ of the Sanskrit Sahitya Parishat, Galcutta]

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

श्रीगोपिकामोहनन्यायतीर्थश्च

संस्कृत-साहित्य-परिषत्
१६८/१ राजा दीनेन्द्र ष्ट्रीट

वार्षिकमूल्यम्—रूप्यकद्वादशकम्

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1 .

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushana. Re 1·25; (Out of stock).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 P (fo members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt Janakinath Sahityashastri. ·25 P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 P ·62 P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 P ; P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re. 1·25 ( for members ).

14. **Nala-damayantiyam** (a new Drama ) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( out of stock )

15. **Prashastapada-bhashyam**—Edited by MM. Kalipaad Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

इयं सास्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्


| Vol. XLX. | १८८९ शकीये वैशाखात् श्रावण यावत् | May-Aug. |
| --- | --- | --- |
| Nos. 1—4. | ५० तम वर्षस्य १—४ संख्याः | 1967 |


## सुरभारतीवन्दनम्

[ निबन्धकः—श्रीविश्वेश्वरविद्याभूषणकाव्यतीर्थः ]

मातर्भारतवाणि विश्वजननि प्रज्ञानसन्दायिनि
त्वामद्य प्रणमामि वेदमहिते स्वर्गौकसां नन्दिनीम् ।
मा विश्वप्रथिताऽमला मधुमयैर्मन्त्रैश्चिरालङ्कृता
सा त्वं जीव युगान्तकालमखिले मर्त्यैं स्तुता वन्दिता ॥

( २ )

त्वां मातः संभजन्ते हरिहरविधयो यज्ञभाजोऽमृतज्ञा
हव्यं यच्छन्ति मर्त्या हुतवहवदने वाङ्मयं त्वत्तनूत्थम्।
मन्त्रं प्रोच्चार्य्य रम्यं ललितपदमयं ध्यानमाश्रित्य विप्राः
स्वात्मारामं प्रकामं प्रमुदितमनसो योगिनः संस्तुवन्ति ॥

( ३ )

त्वं माता वेदरूपा मधुरपदमयी काव्यपद्मप्रकाशा
संमूर्त्ता शास्त्रसारा श्रुतिसुखविमला पूजिता तत्त्वनिष्ठैः।
अध्यात्मज्ञानरम्यं परमविभवदं ब्रह्मविद्याप्रमोदं
शुद्धा विज्ञाश्च भक्ताः सुरनरमुनयो भुञ्जते त्वत्प्रसादात् ॥

( ४ )

स्मारं स्मारं तव गुणचयं याज्ञवल्क्यादिमुख्या
जाताः पूज्या व्रतियतिवरा व्यासवाल्मीकयश्च।
ज्ञानोद्दीप्ताः सुखविलसिताः कालिदासाश्च माघा
वाशिष्ठाद्यास्तव करुणया ब्रह्मविद्यां प्रपन्नाः ॥

( ५ )

त्वं वै स्तोत्रैः सुरम्यैर्विलससि नियतं तीर्थदेवालयेषु
पुण्या मन्त्राभिरामा प्रचरसि परमा निःसृता विप्रकण्ठात्।
तीर्थे शैले गुहायां वनसुगहने मन्दिरे मर्त्त्यगेहे
नद्यां पुण्याश्रमे च प्रभवसि नितरां क्षेमदानन्ददात्रि ॥

( ६ )

इत्थं भारतवर्ष-चित्तकमले रम्यासने भारति
आ सृष्टेः प्रलयान्तकालमनिशं विभ्राजसे गौरवैः।
त्वत्प्रेमामृतपानमुग्धभुवनं चासिन्धुहैमाचलं
भाति श्रीमहिमोज्ज्वलं च परमे सान्द्रै रसैर्मोदते ॥

( ७ )

त्वं पुण्या देवभाषा विमलरसयुता मञ्जुला विश्ववन्द्या
छन्दोऽलंकारदीप्ता रमयसि निखिलं मानसं सौख्यदानैः।
ब्रह्मोद्भूता प्रकामं वितरसि नियतं योगिनेऽध्यात्मविद्यां
शुद्धां तत्त्वादयोढ्यां विमलसुखमयि श्रेयसे नस्तनोषि ॥

( ८ )

वन्दे संस्कृतभारतीं च महतीं स्वर्लोकपुण्योद्भवां,
वाणीं ब्रह्ममुखारविन्दनिलयां भूलोकसन्तारिणीम्।
दिव्यानन्दमधुद्रवैकपरमां पीयूषनिस्यन्दिनीं
देवीं ब्रह्ममयीं नमामि वरदां शब्दात्मिकां मातरम् ॥

( ९ )

शश्वत् सुजीवा सुरभारतीयं
को वक्ति हा सा विलयं गतेति।
चिरं निबद्धा हृदि मानवानां
सा पुण्यदीप्त्या तनुते शुभानि ॥

( १० )

मातस्त्वत्पादपद्मामृतमधु विमलं हन्ति चेतःप्रमोहं
रम्यं त्वच्छन्दजातं श्रुतिपुटनिलये गीतिराशिं तनोति।
संयोगे विप्रयोगे त्वमसि शुभमयी मर्मणो भावमूर्त्ति—
र्दीप्यस्वैवं वराढ्ये तव पदकमले संनतोऽहं प्रयाचे ॥

( ११ )

कण्ठे कण्ठे ध्वनतु नितरां भारते देवभाषा
राष्ट्रे चास्मिन् विलसतु हि सा राजराजेश्वरीव।
यज्ञे पुण्ये स्वजनमिलने राष्ट्रकार्य्ये विषादे
दीव्याद् रम्या महिमविभवैः सा हि सौख्यप्रदात्री ॥

( १२ )

मध्ये व्योममहार्णवान्ततटकं चोद्धृत् स्वतः प्रसृता
रम्यां ब्रह्ममनोऽभिस्पन्दनभवामोङ्कारनादात्मिकाम् ।
दिव्यां शब्दपदात्मविग्रहमयीं ज्योतिर्मयीं शाश्वतीं
वन्दे तां रसमञ्जुलामलतनुं वाचं सुरैर्वन्दिताम् ॥

( १३ )

या वेदग्रथितामरैः स्तुतपदा धर्म्मार्थसंभाविनी
मन्त्रैर्मङ्गलदायिनी च वरदा विद्वज्जनोल्लासिनी ।
छन्दोऽलंकृति-गद्यपद्यरुचिरा ज्योतिषकाव्यालया
यायुर्दर्शन-नीतिशास्त्रललिता तां देवभाषां भजे ॥

( १४ )

वन्दे त्वां सुरभारतीं सुरपतेः पुण्यप्रभास्पर्द्धिनी
साक्षात् श्रीकमलालयां च परमां स्वाहास्वधोदीरिताम् ।
मूर्त्तां भारतसंहतीं च सुखदां प्राणैकग्रन्थि परां
धर्मप्रेमसुखात्ममेलनकरीं विश्वेश्वरीमाश्रये ॥

( १५ )

वेदोपनिषदां सूर्ति भारतीं मन्त्रमालिनीम् ।
शब्दब्रह्ममयीं देवीं वन्देऽहं सुरनन्दिनीम् ॥

---

# कालिदासदृष्ट्या काव्यस्य स्वरूपम् *

[ निबन्धकः—श्रीप्रतापचन्द्रवन्द्योपाध्यायः ]

"चतुर्मुखमुखाम्भोज—वनहंसवधूर्मम।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती॥"

किं तावत् काव्यस्य स्वरूपमिति गुरौ विचारविषये प्रतियुगमालङ्कारिकाणां मध्ये बहुधा वाचोयुक्तिरुपलभ्यते। काव्यस्य लक्षणविधाने नैकमत्यमलंकारशास्त्रप्रणेतॄणाम्। तैः खलु कविकृतेर्विविधं स्वरूपसूत्रमुपनिबद्धम्। वितर्कोऽपि तदुपरि प्राज्यं प्रसृतः। सुविस्तृतेऽस्मिन् विवादजाले सुदूरमपास्तो राद्धान्तः। अस्मिन् विषये स्वयं कविसम्प्रदायस्य किमासीदभिमतमित्यस्मिन् विचारे तु प्रायशः पराङ्मुखा वयमिति चित्रम्। अतः सम्प्रति कविकुलदृष्ट्या काव्यस्वरूपं विचार्यमित्यनुभूय प्रयतितमस्माभिः। समेषां परीक्षणमेकत्र दुष्करम्। तत्र खलु भारतीयकविषु शिरोमणिर्महाकविः कालिदास इत्यतः सन्दर्भेऽस्मिन् स एव विषयीकृतः। काव्यस्य स्वरूपमधिकृत्य तदीयमभिमतमत्र किञ्चिदालोच्यते।

अलंकारशास्त्रेतिहासपर्यालोचनप्रसंगे नाट्यशास्त्रप्रणेतुर्भरताचार्यादन्यत्र भामहस्य दण्डिनो वा नाम प्रथममापतति। भामहदण्ड्याचार्ययोः कतरः प्राचीनतर इत्ययं यद्यपि विपश्चितामद्यापि विवादविषयस्तथापि भामह एव प्राचीनतर इत्यधिकैरेवोररीक्रियते। तथा सति साहित्यपाथोनिधिमन्थने स हि ज्येष्ठ आचार्य इति वक्तुं नानुचितम्। (इतः पूर्वमपि केचिदाचार्याः स्युस्ते तु न विदितनामान इत्यत एतदुक्तम्। भरताचार्यस्तु प्राधान्येन नाट्यतत्त्वस्य समीक्षको न तु साधारण्येन साहित्यतत्त्वमात्रस्येत्यवधेयम्।) सोऽसौ भामहः -

---

* महाकविकालिदासप्रबन्धान् समीक्ष्य तदीयदृष्ट्या आलङ्कारिकपद्धत्या काव्यस्य लक्षणमेकं सन्दर्भेऽस्मिन्नुपस्थाप्यते।

वेङ्गलोरनगरे १९६६ संवत्सरे अनुष्ठिते "संस्कृतविश्वपरिषदोऽष्टमे" अधिवेशने पठितोऽयं सन्दर्भः।

काव्यस्य शब्दार्थोभयात्मकत्वमङ्गीकृत्याह—"शब्दार्थौ सहितौ काव्यमि"ति ( काव्यालंकारः, १।१६ )। एतदेवानुसृत्योत्तरकालागतैरपि साहित्यमीमांसकैः शब्दार्थाविव काव्यशरीरमुक्तम्। तत्र कैश्चिच्छब्दांशे गुरुत्वमारोपितं कैश्चिदर्थांशे कैश्चिदुभयत्र। ये खलु तत्रोभयतः प्राधान्यवादिनस्ते विशेषेण भामहानुयायिनः। स हि न केवल "शब्दार्थौ"विति द्वन्द्वसमासबद्ध पदमुच्चारयामास, अपि तु "सहितौ"वित्युभयोः संहतिद्योतकमपि पदं योजयामास।

किं नु तावत् सूत्रमिदं भामहस्य स्वकपोलकल्पितमुतान्यत आहृतम्? अलंकारशास्त्रेतिहासे भरतभामहयोरन्तरा परिलक्ष्यते सुमहान् कालभेदः। नूनमस्मिन्नन्तरेऽपरेऽपि केचिदालंकारिकाः प्रादुरासन् येषां नामापि सम्प्रति न ज्ञायते का कथा तदीयग्रन्थानाम्। तत्त्वानां हि क्रमशो विकाशो जायते न तु सहसा प्रकाशः। भामहसूत्रस्यापि किमपि मूलं स्याद् यद्धि सम्प्रति निश्चयेन न शक्यते निर्णेतुम्। किं नु तावन्महाकविः कालिदासोऽस्मिन् विषये तस्य पूर्वसूरिर्भवितुमर्हति? कालिदासस्याविर्भावकाल इदानीमपि विदुषां महावितर्कविषयः। तथापि भूयसां भारतीयविपश्चितामेतदेवाभिमत यत् प्रथमे खूीष्टीय-पूर्वशतके साहित्यनभोमण्डले भास्वरमिदं नक्षत्रं प्रादुर्बभूव। समीचीनं चैतदिति मन्यामहे। प्रसंगविच्युतिभिया न तदत्र पर्यालोच्यते। यद्येवं तर्हि भामहाद् बहु प्राचीनतरः कालिदासोऽतस्तदीयसन्दर्भान्मतमिदं भामहेन ग्रहीतुं शक्यते। न तु कालिदासोऽलंकारशास्त्रप्रणेता येनासौ सूत्रकरणे प्रवृत्तः स्यात्। किन्तु प्रसंगान्तरक्रमेण तेन यदबोचि तत एव काव्यस्वरूपविषये तदीयमभिमतमवगम्यते। तथाहि रघुवंशमहाकाव्यप्रारम्भे नमस्क्रियावसर उक्तम्—

"वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।" इति।

काव्यप्रणयनकाले जगत्पित्रोर्वन्दनविधौ कविर्वागर्थप्रतिपत्तिमेव काम्यत्वेन गणयति। जगत्पित्रोरुपमोपन्यासमपि वागर्थाभ्यामेव विदधाति। व्यक्तमेव वागर्थौ महाकविना काव्यघटकतया परिगण्येते। उत्तरकालीनैरालंकारिकैरेतदेव सूत्रेणोपनिबद्धं "शब्दार्थौ सहितौ—", "तददोषौ शब्दार्थौ—"

( इत्यादिना । भामहसूत्रे "सहिता" विति पदस्य यत् तात्पर्यं कालिदासेन तदेव पार्वतीपरमेश्वरयोः 'सम्पर्कौ' वागर्थाविवेत्युपमोपन्यासेनाभिव्यक्तम् । वाङ्मये शब्दार्थयोर्यथा नित्यः संश्लेषः पार्वतीपरमेश्वरयोरपि तथेति कथयता कविना भामहसूत्रस्यैवार्थः कविजनोचितया भंग्या प्रकाशितः ।)

इमौ तु शब्दार्थौ काव्यस्य शरीरघटकौ । यदाह विद्याधरः—"शब्दार्थौ वपुरस्ये"ति ( एकावली, १। १३ )। आत्मा त्वस्यान्यत् किमपि वस्तु । किं नाम तदित्यप्यपरो वितर्कविषयः । काव्यविषये "आत्मे"ति पदं प्रथमं तावत् खीष्टीयेऽष्टमे शतके वामनेन व्यवहृतमुक्तञ्च तेन—"रीतिरात्मा काव्यस्ये"ति ( काव्यालकारसूत्रवृत्तिः, १।२।६ )। अनन्तरं ध्वनिकारेण "काव्यस्यात्मा ध्वनि" रिति ( ध्वन्यालोकः, १।१ ) मतं स्फुटीकृतम् । ( ध्वन्यालोकग्रन्थादनुमीयते ध्वनिवादस्योद्भवस्ततोऽपि बहु प्राचीनतर इति । ) ध्वन्यालोकग्रन्थे ध्वनेर्यद्यपि वस्त्वलकाररसभेदेन त्रैविध्यमुपपादितं तथापि रसध्वनिरेव प्राधान्येन 'ध्वनि'पदवाच्यः (suggestion par excellence) काव्यस्यात्मेति तेनाभिव्यक्तीकृतम् । यतः "काव्यस्यात्मा स एवार्थः—" इति प्रक्रम्य तेन वाल्मीकेः क्रौञ्चद्वन्द्ववियोगोत्थस्य शोकस्य श्लोकरूपेण रस-परिणतिरेव ध्वनेरुदाहरणत्वेनोपन्यस्ता—

"—तथा चादिकवेः पुरा ।

क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥"

( ध्वन्यालोकः १।५ ) इत्यनेन । व्यक्तमुक्तमत्र लोचनकृता—"स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यमितिहासबलात् प्रक्रान्तवृत्तिग्रन्थार्थबलाच्च । तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तमि"ति[१] । एवं स्थिते, समीचिते कालिदास-प्रबन्धे तस्याप्येवमासीदभिमतमिति बोद्धुं शक्यम् । तथा हि "काव्यस्यात्मा स एवार्थः—" इत्यादिध्वन्यालोककारिका रघुवंशमहाकाव्यस्य—

---

[१] ध्वन्यालोकः, चौखम्बा (=वाराणसी ) प्रकाशनम्, १९४०; पृ० ८४-८५

"तामभ्यगच्छद्रुदितानुसारी
कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डज-दर्शनोत्थः
श्लोकत्वमापद्यत यस्य शोकः"॥ (१४।७०)

इत्यस्याः पद्यसूक्तेरेवानुरणनरूपा। अपि च यत्र श्लोके शब्दार्थयोः साहित्यमुक्तं कविना तत्रैव पार्वतीपरमेश्वरयोः सम्पृक्तताभिहिता। एतद्धि गूढस्यार्थस्याभिव्यञ्जकम्।

वन्दनविधौ तयोर्दैवत्वेऽपि काव्यदृष्ट्या पार्वतीति नायिकायाः प्रतिरूपकं परमेश्वर इति च नायकस्य। तयोरन्योन्यरतेः शृङ्गाराभिव्यक्तिरिति व्यङ्ग्योऽर्थः काव्यपक्षे। शृङ्गार इत्युपलक्षणमादिरसत्वात् प्रकृते हि रसमात्रस्य परिग्रहः। तस्माद् रसाभिव्यञ्जकौ शब्दार्थौ काव्यमिति महाकवेर्मतमुपलभ्यते। एतच्चावश्यमङ्गीकार्यम्। सर्वत्रैव हि कालिदासि सन्दर्भे रसपुष्टिरेवोपलभ्यते। तत्र च प्राधान्यं शृङ्गारस्य। तदीय काव्य-नाटकेषु शृङ्गारोऽङ्गितया परिपुष्यते। यद्यपि तत्र तत्र रसवर्जितान्यपि स्थलानि केवलवर्णनात्मकानि दृश्यन्ते तथापि सर्वत्र तत्र पौर्वापर्यविचारेण रसात्मकत्वं स्वीकार्यम्। अतएव यदुक्तं जगन्नाथेन—"यत्तु रसवदेव काव्यमिति साहित्यदर्पणे निर्णीतं तन्न, वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापत्तेः। न चेष्टापत्तिः महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात्। तथा च जलप्रवाह-वेगनिपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि, कपिबालादिविलसितानि चे"ति (रसगङ्गाधरः, १)२। तच्चिन्त्यम्। पौर्वापर्यविचारेण समग्रस्यैव महाकवि-प्रबन्धस्य रसात्मकत्वसिद्धेः। कालिदासस्य स्वकीयो निबन्धः स्वाभिमतस्य प्रमाणम्। उत्तरस्मिन् काले 'वाक्यं रसात्मकं काव्यमि'ति (साहित्यदर्पणः, १।३) यत् सूत्रं विश्वनाथ उपनिबद्धवान् कालिदासेन पूर्वत एव तस्य सूचना विहिता।

उक्तं हि केनाप्यालंकारिकेण—"काव्यस्य शब्दार्थौ शरीरं रसादिश्चा-

---

२ चौखम्बा (वाराणसी) प्रकाशनम्, १९५५, पृ० २३—२४

त्मे''ति[3] आविष्कृतमिदं तथ्यमस्माभिः कालिदासरचनायाम्। उक्तञ्च तेनैवालङ्कारिकेण—"गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलंकाराः कटककुण्डलादिवदि''ति। एतान् पदार्थान् परिगृह्य मम्मटेन काव्यस्येदं लक्षणं विहितम्—"तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापी''ति (काव्यप्रकाशः, १।१)। रीतेर्गुणात्मकपदरचनात्वात् सूत्रे सा पृथक्तो नोक्ता। काव्यविषये पदार्था इमे कालिदासस्यापि ज्ञानगोचरतां जग्मुः। एतेषां हानादानाभ्यामुत्कृष्ट काव्यमुपजायत इति तथ्यमपि कालिदासवचनाज् ज्ञायते। तथा हि शकुन्तले दुष्यन्तं प्रति काश्यपसन्देशः—

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया।
समानयं स्तुल्यगुण बधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः॥ (५।१५)

इति। काव्यस्वरूपप्रतिपादनपक्षे श्लोकस्यास्यानुपदमेवं व्याख्यानं शक्यते कर्त्तुम्—

"त्वमिति" सर्वनाम्ना दुषन्तस्य परामर्शः। तस्य पुंस्त्वात् काव्यपक्षे पदमिदं पुंलिङ्ग"मर्थ"पदमभिव्यनक्ति। शकुन्तलेति स्त्रीलिङ्गपदं काव्यपक्षे स्त्रीलिङ्गं "वाक्"पदमभिव्यनक्ति। एतौ वार्थौ संहत्य काव्यं घटयतः। तत्र दुष्यन्तस्य विशेषणमुपात्त "मर्हतां प्राग्रसर" इति। तस्य काव्यपक्षेऽयमर्थः-काव्येऽर्हतामादृतानां विशेषाणां मध्य अर्थ एव प्राग्रसरः प्रधानमिति यावत्। काव्ये चारुणोऽर्थविशेषस्य प्रतिपादनं प्राधान्येनावश्यकम्। अन्यथा संवादपत्रिका प्रभृतितस्तस्य को भेदः स्यात्? अतएवोक्तं जगन्नाथेन—"रमणीयार्थप्रतिपादकः शब्दः काव्यमि''ति (रसगङ्गाधरः, १)।[4] अत्रेदमवधेयम्। शब्दः काव्यमिति कथयता जगन्नाथेन शब्दांशे गुरुत्वमाहितम्। "त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः" इति कथयता कालिदासेन तु प्रत्युतार्थांशे गुरुत्वमा-

३ साहित्यदर्पणस्य प्रथमे परिच्छेदे विश्वनाथेनोद्धृतमिदम्। हरिदाससिद्धान्तवागीशकृतं पञ्चमं प्रकाशनम्, १८७५ शकाब्दीयम्, पृ० १३।

४ चौखम्बा (—वाराणसी—) प्रकाशनम्, १९५५; पृ ९।

हितम्। अथचानेनव कविना "वागर्थाविव सम्पृक्ता" विति कथयता भामहानुयायिना शब्दार्थयोः समप्रधानयोः संहतिः काव्यत्वेन स्वीकृता। तेन स्ववचनव्याघात इति चेन्न। अय हि कवेरभिप्रायः। यद्यपि शब्दार्थयुगलमेव काव्यमुभयोश्च समानमावश्यकत्वम्, तथापि यदि क्वचिदेकतरस्य गौरवं भवति तर्हि तदर्थस्यैव न तु शब्दस्य। अनेनार्थगौरवमपि सत्कविप्रबन्धस्य वैशिष्ट्यमिति फलितम्। अर्थगौरवं नाम शब्दापेक्षयार्थस्य गौरवं भूयस्त्वमिति यावत्। तद्धि स्वल्पशब्दप्रयोगेण भूयोऽर्थप्रतिपादनं ध्वनिसमपर्यायभूतम्। "भारवेरर्थगौरव" मिति वचन प्रसिध्यति।

वयन्तु कालिदाससन्दर्भेऽप्येतत् प्राज्यमुपलभामहे। विस्तरभिया प्रकृतमनुसरामः। शकुन्तलाया विशेषणमुपात्तं "मूर्तिमती सत्क्रिये"ति। क्रिया नामार्थप्रतिपादको व्यापारः। सा च क्रियाऽभिधा लक्षणा व्यञ्जना चेति त्रिधा। तत्र साहित्यमीमांसकानां मते व्यञ्जनैव वरिष्ठा मता। शकुन्तलेत्यनेन शब्दस्य बोध्येऽपि तदुपलक्षितोर्थोप्यत्र बोद्धव्यः। अर्थस्यापि व्यञ्जनासम्भवात्। तथा हि प्रकाशकृत्—"सर्वेषा प्रायशोऽर्थानां व्यञ्जकत्वमीष्यत" इति (काव्यप्रकाशः, ३।८)। सा च व्यञ्जना रसस्य चेत् तर्हि साधिष्ठेति पूर्वमेव रघुवंशीयश्लोकप्रामाण्येन प्रतिपादितम्। शकुन्तला दुष्यन्तश्च कविना बधूवरमित्युल्लिखिते। बधूश्च वरश्चेति समाहारद्वन्द्वः संहतिसूचकः। काव्यपक्षे बधूवरं नाम शब्दार्थयुगलम्। बधूवरयोरिव तयोः संश्लेषात्। तस्येह विशेषणं तुल्यगुणमिति। तुल्याः समाना गुणाः काव्यपक्षे शब्दगुणा अर्थगुणाश्च यथाक्रमं यस्य तादृशं बधूवरं समानयन् घटयन्। प्रजापतिः काव्यजगत्याः स्रष्टा कविरिति यावत्। तथा हि—

"अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते"॥

इति (ध्वन्यालोकः, ३। वृत्तिः)।[१] चिरस्य चिरकालेन वाच्यं निन्दां न गतः। दोषपरिहारादिति भावः। दोषत एव जायते निन्दा। तथा हि दण्डी—

---

१. चौखम्बा (वाराणसी) प्रकाशितः, १९४०, पृ. ४९८।

"तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ।।"

( काव्यादर्शः, १।७ ) इति। यद्वा वाच्यं वाच्यार्थं न गत आश्रितः। व्यंग्यार्थप्रधानो हि सत्कविप्रबन्ध इति भावः। अथ निर्गलितोऽर्थः—शब्दार्थौ सगुणावदोषौ काव्यम्। तत्रार्थगौरवमादर्त्तव्यम्। शब्दार्थयोश्च व्यञ्जनैव वरिष्ठा वृत्तिः। सा च प्राधान्येन रसस्य। अलंकाराश्चलस्थितयो मनुष्यदेहे कटककुण्डलादिवद् न तथावश्यका इत्यतो नोल्लिखिताः। तेषां ह्युत्कर्षमात्राधायकत्वादसत्त्वेऽपि न कापि हानिः। दृश्यते हि महाकविप्रबन्धेषु बहुत्रालंकाररराहित्येऽपि चमत्कारित्वम्। यद्यपि गुणानामपि काव्य उत्कर्षमात्राधायकत्वं तथापि रसात्मकं शब्दार्थ-युगलं सम्यग् गुणरहितं न भवतीत्यतो गुणवत्ता स्वीकृता।

अतएवोक्तं, प्रकाशकृता—"अचलस्थितयो गुणा" इति

(काव्यप्रकाशः, ८।८७)।

समासतस्तावत्—**रसाभिव्यञ्जकौ सगुणावदोषौ शब्दार्थौ काव्यमिति** कालिदासानुसारेण काव्यलक्षणसूत्रमुपनिबन्धुं शक्यते। एवं तर्हि साहित्यमीमांसाशास्त्रप्रणेतृभिर्यानि प्रधानानि तत्त्वानि स्वीकृतानि तेषां समीक्षणं महाकविकृतित एव भवितुमर्हतीति स्पष्टम्। वस्तुगत्या हि कविकृतिनिचयं समीक्ष्यैवालकारिकाः प्रवर्तन्ते यथा भाषाप्रयोगानुपलभ्य वैयाकरणाः। न हि तैः स्वकपोलकल्पितं किमप्युद्घोष्यते। अतः शास्त्रपर्यालोचनकाल आदौ लक्ष्याण्यन्वेक्षणीयानि सर्वत्रेति कृतं भूरिपरिजल्पितेन।

---

# सरस्वती श्रुतिमहतां महीय्यताम्

[ निबन्धकः—श्रीहरिपदकाव्यस्मृतिमीमांसातीर्थः ]

अहो पुरापतत्यर्यममन्दानन्दसन्दोहो भारतीयविदग्धधुरीणानां सारस्वतरसनिर्झरस्निग्धासूनां विपश्चितां यद् विगते वर्षे संस्कृतसाहित्यपरिषदः पञ्चाशद्वर्षपरिपूर्त्तिमुपलक्ष्य "सुवर्णजयन्ती" श्रद्धेयसभापतिप्रमुखैः सरसहृदयैः सभ्यनिवहैरनुष्ठिता उत्सवोऽयं पुण्यभारतवासिसुरभारतीसेवकानां तथा वङ्गदेशेषु सारस्वतरसपिपासूनां सर्वेषामेव हृदये परमां मुदं जनयामासेत्येवात्र नास्त्येव सन्देहावकाशः। परमस्मिन् महोत्सवेऽनेके विदग्धाः समवेताः सभ्याः सुनिपुणसभ्यैः प्रयुक्त श्रव्यपेयदृश्यनृत्यादिकं दृष्ट्वा श्रुत्वा लब्धवन्तश्च परं प्रमोदभरम्, ततः प्रत्यावृत्य च केचित् स्वगृहं यथापूर्वं भोगं भुञ्जाना न चिरादेव सर्वं विस्मरिष्यन्ति, अयमेव नैसर्गिको नियमः। सन्तु नाम सहस्रशः सभ्या अगणिता श्रोतारश्च तेन किमायातं सुरभारत्याः? यदि पुनस्ते सत्पुत्रा इव मातरं, मनसा च अनुदिनमेनां परिचरेयुस्तदाशरणा क्षीणा विवर्णच्छविरियं पुनरपि स्वान् सुतानङ्कपालीमारोप्य पालयिष्यन्ति इत्यत्र नास्त्येव शिरःकल्पनम्। किन्तु कलिकालविलासप्राबल्यात् अस्माकं दुष्टदिष्टपरिपाकात् भूयसामेवाढ्यानां वणिग्वृत्तिषु लौल्यात्, बहव एव रजस्तमोपहतचेतसः कृत्याकृत्यविवेकविधुरा धर्म्यां वृत्तिं परिहाय, आपातसुरसे भोगे न केवलं वाक्कायमनांस्यर्पयन्ति परं स्वमपि ते पण्यमिव विक्रीणन्ति। क्वास्माक भाषासीत् जन्मन्यस्मिन् किमस्माकं लक्ष्यं, किं करणीयं, किं वा हेयं, किं वा कुप्यमिवोपादेयं, को वाचारः? कः सम्प्रदायः? के वा गुरवः? को नैत्यिकः नैमित्तिको वा श्रुतिस्मृतिविहितः सदाचार इत्येतेषामवश्यकर्त्तव्यानामपि कर्म्मणां सम्यग् विस्मृतिरापतिता। सुरगिरामनादरादेव चातुर्वर्ण्यविभागव्यवस्थापि सर्वतो विपर्य्यस्ता इति मन्यामहे किमतः परं विधुरं भवेत्-यत् महाकुलीनवंश्यानामपि द्विजाग्र्याणां वसूपमानानामपि कुले उपनयनकालमतिपतन्ति तत्पुत्राः। केचन वा युरोपात् स्थापत्ये,

भैषज्यविज्ञाने, गणिते लब्धवर्णाः स्वदेशमागत्य ब्राह्मणत्वरक्षणाय प्रौढ़तां गता उपनीता भवन्ति। वेदोपदेशकाले सम्यग् वेदसारमाचार्य्येणोपदिष्टा अप्येते सावित्रीमातरं विस्मरन्ति, पृष्टा अप्यानुपूर्व्या तन्नामाक्षराणि नेशते व्याहर्त्तुम्।

संविहिते च जातिभेदराहित्ये दृश्यते तेषां बहुमानः। भोजनादिषु च यथेच्छता तेषामहोपुरुषिकामभिव्यनक्ति। किं बहुना,—अलन्तावत् सामाजिकव्यवहारविपर्य्यासघोषणया। नास्ति तादृशः कश्चन नेता यः खल्वेतत् प्रतिक्षणं बहुलीभवत् समाजशृङ्खलशैथिल्यं नियन्तुमलंभूष्णुः। काल एव सर्व्वं नियन्त्रणं शिथिलयत्येतदेव नः समाश्वासनं चेतसः। परं यदैवास्माकं स्मरणपदवीमधिरोहति यत् यूरोपदेशवास्तव्याः सारस्वता मनीषिणः श्रुतिस्मृतिपुराणेतिहासादीनि आजीवन पठितानि इव पठन्तस्तेषां सम्यक् लक्ष्यमुद्घाटयन्ति, नवां नवां सरणिं रचयन्तः सर्व्वतन्त्राणां रहस्यमाविष्कुर्व्वन्ति, तदैव तेषामवदानं हृदयेनाभिनन्दामहे वयं तेषां प्रतिभां सहृदयचित्तविस्मापिकां स्तोतुमुपक्रमामहे। भारते तथान्येष्वपि प्रदेशेषु तेषां संस्कृतभाषायां नैसर्गिकं प्रेम, तन्निदानममितमुज्ज्वलं वैदग्ध्यञ्च संस्कृतभाषानिष्णाताः सर्वेऽनुदिनमेव जानन्ति। तैः प्रातिभेन चक्षुषा समुचितं तत्त्वं निधिवन्निगदन्ति। अस्मद्देशेषु श्रुतौ कृतप्रयत्ना ये वेदज्ञाः सन्ति, ते जानन्त्येव यत् 'शर्म्मन्' देशीयाः कोविदा वेदेषु पदपाठादीना स्वराणाञ्च प्रयोगे समुच्चारणे च अस्माकं साहाय्यमनल्पं व्यदधुः। संस्कृतभाषानिबद्धान् इतस्ततो विक्षिप्तान् लुप्तान् ग्रन्थान् समुद्धर्त्तुं तेषां प्राणान्तकरः श्रमोऽस्माकं श्रद्धामावहति। पुरास्मिन् भारते राज्ञां दिग्विजये शैलसानुषु सुरगिरा समुत्कीर्णा याः शिलालिपयोऽद्यतनैरज्ञाता वातातपवर्षाविच्छाया दुर्गमेषु गिरिगुहागात्रेषु सन्ति ते भूरिवित्तश्रमव्ययमुररीकृत्य ताः संग्रहीतुमविरतं यतन्तेऽनेकधा मोघीकृतप्रयासा अपि न विरमन्त्युत्तमगुणाः पुरुषा इव प्रारब्धात् कर्मणः। तेषां युरोपवासिसुधियां ज्ञानप्रवृत्तिर्दूराधिरोहिणी, भूयोज्ञानेन, नानातन्त्रविचारणया, चिरमध्यापनमहिम्ना च नैव लभतेऽलंबुद्धिम्। नवतिं गतोऽपि वर्षिष्ठोऽन्तेवसन्निव निरतमध्ययनरतो ज्ञानपिपासाहुत्यै यतमानो दृश्यते। विज्ञान-

विजृम्भणञ्च तेषां चन्द्रलोकमाक्रामति, वायुमार्गश्च तेषां भूतलायते। अम्भोनिधेरन्तरपि तेषां रणतर्यः नौयुद्धेषु शत्रुपक्षादात्मानं प्रच्छाद्य परपक्षचमूषु नलिकास्त्रैर्नालिकान्, सधूमम् उदगिरन्ति। उषरेऽनलकणवर्षिणि मरुक्षेत्रे लोचनासेचनकं श्यामलमुद्यानं रचयन्ति त तस्याञ्च मरुभुवि स्थापत्य-कौशलेन द्रुतगतियानानां सारसम्भारं तैलसागरमाविष्कुर्व्वन्ति। 'रेडिओ' माध्यमेन बहुशतयोजनदूरवर्त्तिभिरपि सहाधानस्थितैरिव संलापोऽस्माकं प्रतिदिनव्यवहारमध्ये परिगणित इव। चन्द्रलोकं गत्वा तस्य प्रतिच्छविं तत्क्षणमेव मुद्राप्य प्रेरयन्तो मर्त्तवासिनां मनांसि विस्मापयन्ति इत्यपि सर्व्वेषामेव विदितमास्ते।

यातु तावत् तेषां पौरुषाध्यवसायकीर्त्तनम्। वयमपि भारतीया मानवा भारताध्ययनविदितनिखिलवृत्तान्ता यदि ज्ञानविज्ञानेतिहासराजनीतिषु बद्धादरा वर्त्तमानकालोपयोगिसम्भारनिर्मितौ परमोत्साहेन यत्नं विदधीम तदा प्राच्या अपि वयं कथं न्यक्कृता भवेम प्रतीच्यैरधमा इव यापयामः कालमनिर्विण्णाः ?

पुरेयमेव देवगिरा देवगवीव नः कामदुघासीत्, सैव शुश्रूषिता सकल-तन्त्रसारभूतं क्षीरं प्रकाममदात्—तदेव पायं पायं सर्व्वे सारस्वताः कवयोऽध्यात्मादिकं ज्ञानवीर्यमवाप्य ज्ञानज्योतिषामुद्भावयाम्बभूवुर्दिशां मुखानि।

अहो गतास्ते ज्ञानविज्ञानमूर्त्तयः स्मरणीयपूतचरिता दर्शनस्मृति-संहिताकारा भारतजननीकण्ठहारनायका इव दिव्यचक्षुषो मुनय आचार्याश्च, अस्मिन् एव भारते व्यासगोतमबद्धकणादजैमिनिकपिलपतञ्जलीनामाचार्य-वर्याणामुद्भवः, अत्रैव तेषां जगदन्धंकरणाज्ञानतिमिरविध्वंसीनि न्याय-सांख्यमीमांसापातञ्जलादीनि शास्त्राणि लोकक्षेमाय तेषां तपःसम्भृताज ज्ञानादुद्बभूवुः। क्व गतास्ते न्यायसिन्धुमन्थनमन्दरायमाना गङ्गेशादयः। क्व वा भट्टप्रभाकरप्रमुखा जैमिनितन्त्रेषु स्वतन्त्रप्रज्ञाः कर्मकाण्डरसिका धीराः ? कापिले च लब्धकीर्तयः पञ्चशिखादयः प्रकृतिपुरुषतत्त्वज्ञा विचक्षणाः, क्व गतोऽसौ वाग्देवीप्रियपुत्रो रसनिर्झरः कालिदासः ? क्व यातास्ते स्वनाम-

विश्रुताः कवितावनितास्वयंवृताः पण्डितराजा जगन्नाथाः ? क्व चिराया-स्तमितास्ते शब्दानुशासनाचार्य्याः पाणिनिमुख्या शब्दाम्बुधिरत्नपरीक्षकाः ? क्व वासतेऽधुना ते ध्वननव्यक्तिकारा आनन्दवर्द्धनादयः ? ये तत्तद्विषयक-ग्रन्थान् प्रणीयास्मिन् भारते पराद्धर्यासनं लेभिरे।

हन्त हताः स्म वराका वयम्, यद् बहोः कालात् परं स्वतन्त्रशासन-कर्तृत्वं लब्ध्वापि सयतकरचरणा संयमितवाचः परतन्त्रा एव अन्वहमधो गच्छाम इति सर्व्वे जानीमः, कोऽत्रोपालम्भनयोग्य इति जानन्तोऽपि नपुंसं इव तूष्णीं तिष्ठामः। परं दैवं निजार्जितं कर्म्म वा क्षिपामः ?

यदि वयम् असशयं स्वतन्त्रास्तदा यास्माकं सुरभारती प्राग् वचन-व्यवहारादिषु सर्वैरेव समादृता, वर्त्तमानेऽपि सैवास्माकं पठनपाठनादिषु कामम् अवश्यं नियन्त्रिका भवितुमर्हति। केन्द्रीयशिक्षासचिवमहोदयास्तथा प्रदेशशिक्षामन्त्रिणश्च विषयमेकं सुनिपुणं सावधानमनसा सम्यक् विविच्य सुरभारत्याः पाठन सर्व्वेष्वेव शिक्षायतनेष्ववश्यमेव निर्द्धारयेयुस्तदैवास्या मुक्तिर्भवेत्। ये तावत् महाकरणिकसौधेषु समुच्चपदमलङ्कुर्व्वन्ति, ते सर्व्वे एव भारतीयाः तेषु चानेके संस्कृतभाषा जननीमिव शुश्रूषन्ते बहुमन्यन्ते च ; अतस्ते यदि शिक्षासचिवैः सह सन्मन्त्र्यार्थदानेन आनुकूल्यं विदधीरंस्तदा मुमूर्षोरस्या रक्षणम्भवेदेव। तेषाञ्च भारतमातुः सत्पुत्रकृत्यमवश्यसम्पाद्य-मनायासेनैव सम्पादितं स्यात्। सस्कृतसाहित्यपरिषदः सभ्यैरनुष्ठितेयं सुवर्णजयन्ती न केवलं वर्णतः परमर्थतोऽपीयं सुवर्णसिंहासन—सन्निविष्टा गुणालङ्कारयुता सर्वान् सुतान् धाराभिराशिषां स्नपयिष्यतीति मनसि नः शुभाशा वरीवर्त्ति।

इदञ्चास्माकं प्रकृतोपसंहारे अवश्यवक्तव्यतयावशिष्यते—ये तावदस्याः संस्कृतसाहित्यपरिषदो मातुरिव सेवने रक्षणे च महान्त क्लेशं महता गौरवेणाङ्गी-कृत्य स्नेहाभावाद्दीपदशामिव निष्प्रभामेनां प्रेमस्नेहबिन्दुनिषेकेण पुनरपयेनां प्रभाभास्वतीमकुर्वन् ते निःस्वार्थं सुरभारतीसेवका जरामाक्रान्ता अपि मनसा सरसा वयसा गौरवेण च नमस्यास्तेऽद्य सर्व्वथा धन्यवादार्हा इत्यलं पल्लवितेन।

---

# रससमीक्षा

[ निबन्धकः—श्रीनृत्यगोपालपञ्चतीर्थः ]

नालङ्कारो न रीतिर्न च गुणगरिमा नैव वक्रोक्तिभङ्गी
वैदग्ध्यं नापि वाचो न च रसविहृतिर्नापि लालित्यमिष्टम् ।
दोषाभावो न भावस्फुरणमपि कियद् वर्तते न ध्वनिर्नो
केनोपायेन तुष्यत्वतिगहनमतिः संसदेषा बुधानाम् ॥१॥

कश्चिच्छब्दच्छटाभी रमयति हृदयं कश्चनार्थैश्च मुग्धैः
अन्यः प्रोच्छ्वासवद्भिर्हितवचनशतैः श्रौतपौराणसिद्धैः ।
यस्यै तेषां न कश्चिद् रतविभवकणो रञ्जयत्वेष केन
दारिद्र्यं हन्त हीनं परिभवपदवीं याति विद्वत्समाजे ॥२॥

मातर्विद्येऽनवद्ये ! श्रय मम रसनां वच्मि तत्त्वं रसानां
लेशात् प्राचीनविद्भिर्यदिह निगदितं सारतस्तद् गृहीत्वा ।
क्षुद्रैः क्षौद्रं विचाय भ्रमदलिभिरपि स्थापितं पुष्पराशि
को वा नाच्छिद्य रिक्थं भजति धनिपदं शंसनीयं परेभ्यः ॥३॥

नाट्याचार्येण सूत्रं भरतमुनिवरेणोक्तमादौ विभावः
सञ्चारी चानुभावो मिलिततनुरसो भाति निष्पन्नरूपः ।
निष्पत्तेरर्थभेदं प्रति विविधमतिः प्रोल्लसन्ती विदान्त-
न्निर्णेयं बाधते याह्यलघुवरवचो युक्तिभिर्निश्चलात्मा ॥४॥

आह श्रीशङ्कुकस्तामनुमितिरिति सद्धेतुतः साध्यसिद्धेः
रामोऽयं रागयुक्तो जनकभुवि यतस्तान् कटाक्षेण पश्यन् ।
एवं रत्याः प्रबोधे सहृदयपरिषत् तां निजामाकलय्य
स्वादं स्वादं प्रतिष्ठां रचयति च रसस्यानुभूतिप्रसादात् ॥५॥

भट्टश्रीलोल्लटोऽस्या जननपरतया व्याख्यया यद्व्यधात्तद्
भावोरत्यादिभावो रस इति जनितः सात्त्विकालम्बनाद्यैः ।
सञ्चार्यैश्च प्रभावात् कविकृतिविषयैर्नायकस्थोऽप्यभेद-
ज्ञानात् सामाजिकानां स्फुरति मनसि स प्राणदः स्वाद्यतायाः ॥६॥

भट्टानां नायकस्याभिमतमिदमयं यः प्रतीतो रसात्मा
नो नाटस्थ्येन नो वा स्वगत इव भवेज् जन्यतां नैति काले ।
नो व्यक्तः किन्तु साधारणकरणवशाद् भावकत्वाख्यवृत्त्या
भोग्यत्वं याति सत्त्वप्रचुरसहृदयैर्भाव्यमानः सरागः ॥७॥

काव्ये ये वै विभावाः शशिमलयमरुत्कोकिलध्वानकान्ताः
स्तम्भः स्वेदः कटाक्षप्रहितनयनभाक् कौतुकञ्चानुभावाः ।
लज्जानिर्वेदभीतिप्रमुखचलतरा ये च सञ्चारिणः स्यु-
स्तांल्लोको हेतुशब्दैर्व्यपदिशति पुनः कार्य्यनाम्ना सहायान् ॥८॥

आचार्य्यो गुप्तपादो मनुत इह रती रामसीतादिनिष्ठा
सभ्यैः सा स्वात्मवृत्तिः क्रियत इव पुनश्चर्व्वनाद् वासनात्मा ।
साधारण्येन रूढा सुपरिहृतविशेषास्वांशतो व्यज्यते च
निष्पत्तिः स्वादनाम्नी सहृदयहृदयेऽलौकिकैर्भावनैः सा ॥९॥

एवं निष्पत्तिरुक्ता फलत इयमभिज्ञातृभेदेन भिन्ना-
प्यास्तेऽभेदं प्रपन्ना भवतु तदपि स स्वाद्यमानो विचारे ।
नो ज्ञाप्यः प्रागसिद्धेर्न च जननपदं कार्य्यहेत्वोः समान-
कालीनत्वान्न नित्यो विषयविहरणादस्थितेः पूर्व्वमेषः ॥१०॥

स्यादेतन्निर्विकल्पोऽनुभव इति न तद् यद्विभावानुभाव-
सञ्चार्य्याणां प्रतीतेर्विषयविषयकत्वेन भोः स प्रतीतः ।
शृङ्गारं स्वादयामीत्यनुभवविरहान्नो विकल्पैर्युतोऽपि
दृश्ये श्रव्ये च काव्ये ह्यसममभिहिता व्यापृतिर्लौकिकेभ्यः ॥११॥

किं रागो रामनिष्ठो नहि नहि सुधियि स्वाद्यमानः कथं स्यात्
तिष्ठन् किंवा नटे नो अनुकृतिवशतो नो रसं सोऽपि भुङ्क्ते ।
साधारण्या च कृत्यानुभवति रसिके स्वात्मवृत्त्या रतादीन्
तस्माल्लोकाद्विभिन्नः सुखमयसकलज्ञानमूर्त्तो रसोऽसौ ॥१२॥

---

# दरिद्र-दुर्दैवम्

( प्रहसनम् )

[ निबन्धकः—श्रीश्रीजीवन्यायतीर्थः ]

## प्रस्तावना

गजवदनषडाननादयो यन्
निकटमटन्ति बुभुक्षया कुटुम्बाः ।
करपुटकलिताल्पभिक्षयासौ
दिशतु शिवं स ललाटलोचनो वः ॥

(नान्द्यन्ते) सूत्रधारः । अलं पल्लवितेन । आज्ञप्तोऽस्मि गुरुभिर्यदद्य ऋषि-वङ्किमचन्द्र-महाविद्यालयस्य वार्षिकदेवभाषापरिषदुत्सवो हर्षोत्सनिदानेन केनचिन्नवेन रूपकेण निवर्त्यतामिति । न च निरूपयितुं शक्यते तथाविधं वस्तु । तद् विदूषकमाहूय स्वदूषणमपनयामि । भो वयस्य ! भो वयस्य !

(प्रविश्य) विदूषकः । भाव ! किं णिमित्तं मारिसजणं आआरेसि ? किं ण आणासि ?

शिआलपुच्छो जइ कज्जआरी लुक्काइदो चिठ्ठदि पव्वदग्गे ।
अहं अकम्मा, णिअणामसद्दं शुणिअ णो दुल्लभतं प्पआमि ?

[ भाव ! किं निमित्तं मादृशजनम् आकारयसि ? किं न जानासि ?

श्रृगालपुच्छो यदि कार्य्यकारी लुकायितस्तिष्ठति पर्वताग्रे ।
अहम् अकर्मा निजनामशब्दं श्रुत्वा नो दुर्लभतां प्रयामि ? ]

सूत्र । ( विदूषकस्य हस्तौ धृत्वा ) वयस्य ! न तावदात्मान गोपय, प्रकाश-मेहि । पश्य—

धातुर्हि सृष्टिवैचित्र्यं कार्य्यं द्वाभ्यां हि मेलनात् ।
नैकेन वस्तुना भाव्यं मुषलोदूखले यथा ॥

विदू । भाव ! किं मं उदूहल खलं वा कदुअ सअं अ कुसलो मुसलो भविअ खेलिदुं कामेसि ?

[ भाव ! किं माम् उदूखलं खलं वा कृत्वा स्वयं च क्रशलो मुषलो भूत्वा खेलयितुं कामयसे ? ]

सूत्र। वयस्य ! सम्यक् खेलनं सम्भवति तदैव, यदा जठरभरणाय पर्य्याप्तस्तण्डुलो लभ्येत।

( नेपथ्ये ) अरे ! कुतः पर्य्याप्तस्तण्डुलः ? यावदस्ति मे दरिद्रस्य दुर्दैवम्।

विदू। भाव ! को एसो सद्दाअदि—कुदो पय्यत्तो तण्डुलेत्ति।

[ भाव ! क एष शब्दायते—कुतो पर्य्याप्तस्तण्डुल इति ]

सूत्र। वयस्य ! दिष्ट्या वर्द्धसे। नवरूपकचिन्ताश्रमाद् रक्षितोऽसि। एष खलु निःस्वः खलस्वभावो वक्रेश्वरशर्मा दरिद्र-दुर्दैवमित्युच्चारयन् स्मारयति मां किञ्चन तन्नामकं नवं प्रहसनम्। तथाहि

यो वङ्गप्रभवोऽपि भारतीय-
प्राज्ञानां परमादरस्य पात्रम्।
तत् पञ्चाननशर्म्मणोऽग्रयसूनुः
श्रीजीवः प्रणिनाय रूपकं तत् ॥

स चात्रत्यविद्यालयस्य प्राध्यापक इति प्रतीदति मे चेतः।

विदू। भो पेक्ख पेक्ख से एषो बुड्ढो छिण्णकप्पडो छिण्णपादुओ छिण्णादपत्तो इदो जेव आअच्छदि।

[ भो ! पश्य पश्य स एष वृद्धश्छिन्नकर्पटश्छिन्नपादुकश्छिन्नातपत्र इत एवागच्छति। ]

सूत्र। भिक्षार्थं बहु पर्य्यटन्नपि पर्याप्ततण्डुलमलभमानो मन्दं मन्दं स्वकुटीरं गच्छत्ययं वक्रेश्वरशर्मा। न जानामि—बुभुक्षितः किं न करोति पापम्। तद् गच्छाव आवाम्।

विदू। एसो आअच्छदि ता पलाएह्म।

[ एष आगच्छति, तत् पलायावहे। ]                                        ( निष्क्रान्तौ )

( इति प्रस्तावना )

[ दृश्यम्—कुटीरसम्मुखस्थ-ग्राम्यपथः ]

( ततः प्रविशति स्कन्धे भिक्षापात्रं वहन् यथोक्तो वक्रेश्वरशर्म्मा )

वक्रे । अरे ! कुतः पर्य्याप्तस्तण्डुलः ? यावदस्ति मे दरिद्रस्य दुर्दैवम् ! पुरवासिनां धनिनां प्रतिगृहं पर्य्यटन्नपि न लभेऽभिलाषानुरूपां भिक्षाम् । धिग् धनिगृहस्थान् । हरे राम !

लौहस्वभावो दृढबद्धमुष्टिः कोषस्थितिं कामयते प्रकामम् ।
कृपाणरूपः कृपणो धनाढ्यः कृपाविहीनो नृषु तीक्ष्णवृत्तिः ॥

अहो कठोरो निदाघः ! छिन्नं छत्रं छिन्ने पादुके, भूतलं ज्वलदग्नितुल्यं चरणौ मे निपीडयति ।

छत्रं छिन्नावरणमुभये पादुके चर्मदीने
मूर्ध्ना तीव्रं तपनकिरणं दुःसहं मर्षयामि ।
पद्भ्यां दग्धं क्षितितलमिदं मर्दयन् यामि—मन्ये
सर्वं सह्यं जठरदहनाद्दारुणं नास्ति किञ्चित् ।

उदरस्य कृते सर्वं सह्यवेदनं भवति । हरे राम ! ( भिक्षापात्रम् आलोक्य ) एतावन्मात्रास्तण्डुलाः । किमेतैर्भवितव्यम् ? एका गृहिणी मन्दोदरी सार्थकनाम्नी राक्षसीव वचने भोजने च परमनिपुणा । पुत्रयोर्लम्बोदरषडाननयोर्बालयोरपि वयःकालमतिक्रम्य भोजनशक्तिरतिमात्रं वृद्धिं गता । इयन्मात्रास्तण्डुलाः कस्योदरभरणाय पर्याप्ता भविष्यन्ति ? हा हतविधे !

प्रातरारभ्य कष्टेन कृतभिक्षाटनस्य मे ।
उपवासो ललाटेऽस्ति दुरन्ता हि विधेर्लिपिः ।

( इतस्ततो निरीक्ष्य ) पथि नास्ति कोऽपि मनुष्यः इदानीं स्वशरीररक्षार्थं कांश्चन तण्डुलान् पृथक् कृत्वा स्थापयामि । हरे राम ! ( इति कच्छवस्त्रमाकृष्य तण्डलान् बध्नाति ) मन्ये गृहिणी तनयौ च कुटीराद् बहिरेव ममागमनं प्रतीक्षमाणास्तिष्ठन्ति । यावत् पश्यामि तेषामाचरणम् । ( इति परिक्रम्य वृक्षान्तराले तिष्ठति )

( ततः प्रविशति लम्बोदरः षडाननश्च )

लम्बो। कथं चिरयति पिता। उदरज्वालया भृशं कातरोऽस्मि।

षडा। इदानीमेव मह्यमदत्त्वा त्वया तानि भक्षितानि, तथापि ते जठरज्वाला ?

लम्बो। पुनरपि रक्षितानि यथावसरं भक्षयिष्यामि।

वक्रे। मन्ये कुतोऽपि लाजमोदकादीनि लब्धानि भवेयुः। तर्हि किमेते तण्डुला मदुपयोगाय कल्प्यन्ताम्। हरे राम! किं तादृशं सौभाग्यं भवेत् ?

षडा। पितरि प्रत्यागते भिक्षालब्धं सर्वम् अहमेवाददीय, न तुभ्यं किञ्चिदपि दास्यामि।

वक्रे। अहो!

यदि लम्बोदरात् पारो न निस्तारः षडाननात्।
कटाहाद् यदि वा त्राणं पतनं चुल्लिकानले॥

लम्बो। भो भ्रातः! किं कथयसि पुनरुच्यताम्।

षडा। पितरि प्रत्यागते भिक्षालब्धं सर्वम् अहमेवाददीय, न तुभ्यं किञ्चिदपि दास्यामि।

लम्बो। तर्हि चटचटाकृत्य ते चपेटाशतं दास्यामि।

षडा। अहमपि नखदन्ताघातेन त्वां रुधिराक्तं करिष्यामि।

लम्बो। हुम्, एवम् ? आत्मानमिदानीं रक्ष।

( लम्बोदरश्चपेटां ददाति, षडाननो रुदित्वा नखेन तमाक्रामति )

( ततः प्रविशति माता मन्दोदरी )

मन्दो। आ हतभाग्यौ! कुक्कुरशावकाविव कथं मिथो युध्यतम् ? मूर्खौ विरमतम्। अन्यथा युवयोर्गोष्ठीपालक आगत्य दण्डेन द्वावेव युवां ताडयिष्यति।

षडा। ( रुदित्वा ) मातः, मां चपेटाभिः प्रहरति निष्ठुरो ज्येष्ठः।

वक्रे। ( सहसोपसृत्य ) आः गर्दभीतनयौ तिष्ठतं यावदेतेन छत्रदण्डेन युवयोः शासनं करोमि।

पुत्रौ । पितः पितः ! छिन्नं छत्रं पुनर्भग्नं भविष्यति । इदानीं दर्शय किं किमानीतम् ।

षडा । सर्वं मह्यं दीयताम् । मां वञ्चयमानस्य लम्बोदरस्य चिरं हनुचालनं पश्यामि । अयं भक्षयन् पुनरिच्छति भोक्तुम् ।

वक्रे । वत्स लम्बोदर ! सत्य कथय किं भक्षितवानसि ? (तस्योदरं परामृश्य) हुम् , उदरं ते पूर्णमिव प्रतिभाति । हरे राम !

लम्बो । यद् भक्षितं तत् किञ्चित् तदर्थं रक्षितम् । मातरं पृच्छ ।

वक्रे । ( गृहिणीं प्रति ) गृहिणि ! सत्यं वद किञ्चिद् भक्ष्यं सञ्चितं वर्त्तते ?

मन्दो । ( हस्तौ प्रसार्य ) त्वं भूरितरं दत्त्वा वहिर्गतः, वयमपि पूरयित्वोदरं तिष्ठामः । वत्सो लम्बोदरः कानिचिद् आम्रातकपत्राणि चर्वयन् स्थितः । त्वदर्थं तेन कियन्ति पत्राणि रक्षितानि ।

वक्रे । हरे राम ! आम्रातकपत्राणि ? हा हतविधे !

चलद्दन्तस्य मे पत्रचर्वणे नास्ति योग्यता ।
वधिरस्य यथा गीतश्रवणे न प्रवर्त्तना ॥

गृहिणि, गृह्यतां मे भिक्षालब्धं यत्किञ्चिदन्नम् ।

मन्दो । ( गृहीत्वा ) एतेन कस्य क्षुधानिवृत्तिर्भविष्यति ?

षडा । ( भिक्षापात्रं परामृशन् ) केवलास्तण्डुलाः । न गुडं न शक्तुं लड्डुकम् ?

वक्रे । नान्यत् किमपि । किमहं हतभाग्यः करोमि ?

द्वारि द्वारि निवारितोऽपि विचरन् हा ! सारमेयो यथा
दत्तं कुत्र च तण्डुलं किल लभे मुष्ट्या मितं कष्टतः ।
प्रत्याख्यानपरं गृहस्थनिकरं दुःश्रव्यशापाक्षरै-
रुच्चैर्वं करवैः करोमि विधुरं त्वास्फालनं निष्फलम् ।

मन्दो । अहो बुद्धिः ! शापं ददानो भिक्षुकः केन सत्क्रियताम् । एवमभाग्याहं यदेकस्यापि दिनस्य कृते तृप्तिपूर्वकं भोजनं नाप्नोमि । इयद्भिस्तण्डुलैः कस्योदरं पूरयामि ? देवी षष्ठी मर्षयतु वत्सो लम्बोदर-

स्त्रिप्रसृतिमितान् षडाननो द्विप्रसृतीन् तण्डुलान् भक्षयति, त्वमपि पक्वं त्रिप्रसृतिमितान्नम् उदरसात् करोषि। मदीया कथा तु दूर आस्ताम्।

वक्रे। त्वं चतुःप्रसृतपारकारिणी। हरे राम!

मन्दो। हा दुर्भाग्यम्! कदाचित् तिन्तिडीपत्रझोलेन क्वचिदाम्रातकपत्र-क्वाथेन वा कथञ्चिन् मे भोजनं परिसमाप्यते, न लभ्यते व्यञ्जनलेशोऽपि। तथापि कीदृशोऽपवादः।

वक्रे। तिन्तिडीपत्रझोलेन भक्तं चलति पक्ववत्।
यदि स्याद्व्यञ्जनं तत्र न जानेऽन्नगिरिं गिलेः॥

हरे राम! तादृशान्नपर्वतायोजनं वक्रेश्वरशर्मणा दुःशकम्।

मन्दो। हा मम स्वामिभाग्यम्! अर्द्धाशनेन यस्या दिनं याति सा पर्वत-प्रमाणमन्नं गिलतीति कथयति स्वामी। सत्यं मद्भरणाशक्तश्चेत् कथं कुटीरमात्रावलम्बनो द्वितीयवारं दारपरिग्रहं कृतवानसि?

वक्रे। अन्यथा त्वमजातसंस्कारा मम श्वशुरकुलं नरकपतितमकरिष्यः।

मन्दो। कथं विपरीतं भाषसे? मां परिणीय मम लम्बोदर-षडाननाभ्यां तव पितृकुलं नरकात् त्रातवानसि। तथापि ब्रवीमि—किं त्वां विना नान्यः पतिर्मे समभविष्यत्?

वक्रे। एवमेव कश्चिद् वृद्धो दरिद्रो द्वितीयपत्नीयो वर आव्रजिष्यत्।
हरे राम! स्त्रीभाग्येन भवेल्लक्ष्मीः पत्युरित्युच्यते जनैः।
अहो! तद्भाग्ययोगेन दुर्भिक्षं न जहाति माम्।

मन्दो। एवञ्चेदलक्षणाहं परित्यज माम्। परगृहे पाचिकावृत्तिमास्थाय स्वोदरं पूरयिष्यामि।

वक्रे। यस्य गृहे यास्यसि स एव दुष्पूरोदरगर्त्तं ज्ञात्वैव ते रुष्टो भविष्यति। वरं त्वमेव पुत्रद्वयं गृहीत्वा गृहे तिष्ठ, अहमन्यत्र प्रस्थास्ये। एकस्य ममोदरस्य कृते पर्याप्ता भिक्षा लभ्येत।

मन्दो। अहो मधुरोपदेशः! तनयौ किं मया पितृगृहादानीतौ? यदेतयोर्भरण-भारमहम् अङ्गीकरोमि?

वक्रे। हरे राम! किमेतौ ममोदरान्निष्क्रान्तौ रे दुर्विनीते! तिष्ठ! गच्छाम्यहमन्यत्र। (इति गन्तुमुपक्रमते)

मन्दो। यस्य वंशरक्षाकरः पुत्रस्तस्यैव पाल्यः। कुत्र गच्छसि? विरम। कच्छवस्त्रेणैतौ बद्ध्वा रक्षामि। यत्र गमिष्यसि तावपि तव सहचरीभविष्यतः। (इति यावत् कच्छवस्त्रमाकर्षति, तावत्तण्डुलग्रन्थिमाविष्करोति)

वक्र। हरे राम! आः किं क्रियते पापराक्षस्या।

मन्दो। अहो! किमेते तण्डुलाः? अहं राक्षसी, यो निजपुत्रान् पतिव्रता स्त्रियश्च वञ्चयते स न भवति राक्षसः। भिक्षान्नं गोपयसि कच्छवस्त्रप्रान्ते? यावत् पल्लीवासिनो भद्रमहोदयान् आह्वयामि त्वदाचरणविचाराय। (इति परिक्रामति)

वक्र। भोः पतिव्रते! प्रियतमे! हृदयवल्लभे! सुगृहिणि! क्व यासि? अलं पतिकलङ्कमुद्घाट्य। वरं सर्वे वयम् अधिकार्जनाय भिक्षां चरामः। आगच्छ गृहमिदानीं हृदयेश्वरि! (इति निष्क्रान्ताः सर्वे)

॥ इति प्रथममुखसन्धिः ॥

अथ द्वितीयमुखसन्धिः

[ दृश्यम्—जीर्णोद्यानम् ]

( ततः प्रविशति मन्दोदरी, लम्बोदरः षडाननश्च भिक्षापात्रकराः )

लम्बो। मातः! पिपासाकातरोऽस्मि। नाहं पुनर्भिक्षार्थमटामि।

षडा। अहमपि तृष्णातुरोऽवसीदामि।

मन्दो। अत्र क्व तावज्जलं पिपासाशान्त्यै लभे। वृक्षा लताश्च शुष्कतां गताः। न दृश्यते कोऽपि सरोवरः सरिद्वा कापि। हे महेश्वर! संकटं मे दूरीकुरु। पुत्रौ! देवदेवं महादेवं गीतेन भजतम्।

लम्बोदरषडाननौ। ( गायतः )

देव दयामय शमय पिपासां
सफलय बालकयुगलहृदाशाम्।
कातरपितरौ जीवय कृपया
स्नेहवारिकणवितरणविधया
मतिमपि कुरु नः पूर्णविकाशाम्।

शिरसि विराजति तव जलधारा
हिमगिरितनया भवति च दारा
हर हर हर नस्तापविलासान् ॥

(प्रविशति) वक्रेश्वरः। मृत्युर्मृत्युरेरावशिष्यते, न भिक्षां लभे परन्तु प्रचण्डातपतापाद्दग्धप्रायोऽस्मि। पिपासार्त्तोऽपि न जलाशयं पश्यामि।

मन्दो। पुत्रयोरपि महती पिपासा तौ पीडयति।

वक्रे। अयि सुखविलासिनि! साम्प्रतं भिक्षाटनक्लेशः स्वयमनुभूयताम्। एवंविधः क्लेशः प्रतिदिनं मया सोढः सह्यते च।

लम्बो-षडा। पितः! बलवती पिपासा मां बाधते। पश्य कम्पते शरीरम्।

वक्रे। अरे पात्रसमितौ! केवलं जानीतं भोजनम्, साम्प्रतम् अर्जन-क्लेशमनुभवतम्। हरे राम!

मन्दो। वत्सौ! पादपच्छायायामस्यां क्षण विश्रम्यताम्।

वक्रे। सर्वेषां श्रमो भवति, घर्मः क्षरति, शरीरं कम्पते। केवलं वक्रेश्वर-शर्मणो नास्ति क्लेशलेशोऽपि। यूयं विश्रामं लभध्वम्। अहं तु सर्वदा पर्यटामि। हरे राम!

मन्दो। त्वमपि क्षणमुपविश। का ते विश्रामं निषेधति?

वक्रे। जानाति भगवानेव मे क्लेशम्। अपरः को जानातु। भवतु वृक्ष-तलेऽस्मिन् क्षणं स्वपिमि। (इति शयनं नाटयन् स्वपिति)

(ततः प्रविशति क्षुद्रामनामा कश्चिद् वणिक्)

क्षुद्रामः। हं हो! जनहीनेऽस्मिन् प्रान्तरे स्वकीयभाग्योदयं गोप्यमपि न कथं चिन्तयामि? को मम वाचं शृणुयात्—न कोऽपि। वर्षमध्ये शतगुणं वर्द्धिष्यते मम सञ्चितं मुद्रालक्षम् अर्थात् कोटिसंख्यकं धनं भविष्यतीति विश्वविश्रुतज्योतिर्ज्ञस्य सुदर्शनशास्त्रिणो भविष्यद्वाणी। किं सत्यमेव कोटीश्वरो भवामि स्वल्पेन कालेन? जय राधे! यदि ज्यौतिषिकवाक्यं सफलं स्यात् तर्हि किं न तस्मै मुद्रालक्षं पारितोषिकं दास्यामि? अथवा मनोरथसिद्धेः पूर्वं बहुधा प्रवर्त्तते प्रतिज्ञावाक्यम्। पश्चात्तु— आशासाफल्यसंस्फीतं चित्तमन्यादृशं भवेत्।
अङ्गुष्ठदर्शनं कुर्याद्देवाय च द्विजाय च ॥

अतो न किञ्चिद्देयमित्येव सिद्धान्तः ।

लक्षाधिपोऽहं यदि कोटिनाथः कोटीश्वरोऽप्यर्वुदखर्वमानम् ।
शङ्खञ्च पद्मं निधिमर्जयित्वा कुवेरगर्वं किल खर्वयामि ॥

अहो ! तदानी नूनं सुतदुहितृभार्यादिकुटुम्बानां प्रियोऽहं भविष्यामि । परन्तु मया सर्वदा व्ययेऽमुक्तहस्तता रक्षणीया । अन्यथा क्वापि विद्रुता विलीना उड्डीना वा भविष्यन्ति मे कोटिमुद्राः ।

मन्दो । (श्रुत्वा) कोटिमुद्राः ! भाग्यादयं महाजनः समापतति । सर्व एव वयमेनं धनं याचामहे । कथं कर्त्ता सुखं स्वपिति । बालकौ च मुद्रितलोचनौ गभीरनिद्रामग्नौ वर्त्तेते । कर्त्तः, कर्त्तः, उत्तिष्ठ, दृश्यतामयं याति कश्चित् कोटीश्वरः । तत् सत्वरमुपसर्पाम एनम् । बालकौ (आकृष्य) चलतं चलतम् । (सर्वे द्रुतमागम्य वणिजं वेष्टयति)

वक्रे । महाजन ! सपुत्रकलत्रः खाद्याभावान् मुमूर्षुदशां गतोऽस्मि । तद्देहि नः काञ्चन भिक्षाम् । हरे राम !

क्षुद्र । आः प्रान्तरेऽपि भिक्षुकाणामुपद्रवः । (स्वगतम्) काञ्चन भिक्षां न रजतं न ताम्रं न तण्डुलं याचतेऽयम् । हा धिक्, चतुर्भिर्भिक्षा-जीविभिः परिवृतोऽस्मि ! किं करोमि ? ममापि नाम क्षुद्ररामः प्राप्तकाल-माचरितुं जानामि । (प्रकाशम्) भोः पथि भिक्षादानं मे पित्रा पितामहेन च निषिद्धम् । जय राधे ! गृहं गतेभ्यो याचकेभ्यो दीयते यथाशक्ति धनादिकम् ।

वक्रे । कुत्र भवतो गृहम्, तत्रैव गच्छामः ।

क्षुद्र । आरादेव । इतः पश्चिममुखो भूत्वा यत्किञ्चित् क्रोशत्रय यदि गच्छेः, तदनन्तरं दक्षिणमुखो योजनद्वयमात्रं ततश्चोत्तरमुखो नयनसुभगं श्यामलं क्षेत्रमेकमुत्तीर्य मदीयग्रामं प्रविशेः । ग्रामस्यापि सीमान्तदेशे किञ्चिदुद्यानं द्रक्ष्यसि, तदतिक्रम्य लप्स्यसे सलिलपूर्णां नदीमेकाम् । तां नौकया तरपण्य-दानेन तीर्त्वा देवमन्दिरमेकं पश्येः । तन्मन्दिरं दक्षिणे रक्षन् सरलो मार्गोऽवलम्ब्यताम् । ततश्च नासाग्रन्यस्तदृष्टिः क्रोशमात्रमुल्लंघ्य मदीयं गृहं प्राप्स्यसि । जय राधे ।

वक्रे । हरे राम ! यदि गच्छेयं भवद्भवनं कीदृशं दानं भवतो लभ्येत ।

क्षुद्र। सर्वेभ्यो यथाशक्ति यावद् दीयते, तुभ्यमपि तावद्दानं न हीयेत।

वक्रे। तस्य परिमाणं कियत्?

क्षुद्र। पूर्वपुरुषक्रमादेषा रीतिर्वर्त्तते यदा कदाप्यतिथिर्न विमुखीकर्त्तव्यः। जय राधे!

वक्रे। पूर्वपुरुषाणामादेशः कीदृशः? हरे राम!

क्षुद्र। ताम्रपणार्धं देयमिति। जय राधे!

वक्रे। हरे राम! तत्पण्यमपि न लब्धव्यम्। धन्योऽसि कोटिपते!

क्षुद्र। अरे भिक्षुक! किं मामुपहससि? न जानासि पणार्धदानेनापि प्रत्यहं मे कियान् व्ययो भवति। त्वं पुनः स्त्रीपुत्रानपि भिक्षावृत्तिं शिक्षयसि। धिक् त्वाम्! (प्रस्थातुमुपक्रमते)

वक्रे। अरे श्रूयताम्—

तृणेषु वंशः खचरेषु हंसः शूरेषु कंसो मशकेषु दंशः।
विप्रेषु वक्रेश्वरशर्मनामा संसारचक्रे विदितो न केन?

(क्षुद्रामो निष्क्रान्तः)

वक्रे। मादृशं याचकं प्रत्याख्याय त्वमपि मत्सदृशदशां लभस्व। अरे मन्दोदरि! पतिनिद्राविघ्नमुत्पाद्य किं फलं लब्धं त्वया?

मन्दो। मां सर्वदोषास्पदं विधाय गोपयसि निजामयोग्यताम्। हा विधे!

वक्रे। दुर्भगे! किं न जानासि?

लक्ष्मीभ्रष्टा हि सा नारी या लोके कलहप्रिया।
तस्याः सन्निधिमात्रेण निधिर्दूरे पलायते॥ हरे राम!

मन्दो। पुरुषस्य वाक्पारुष्यं गुणायैव। हा विधे! ममापि नास्ति मरणम्।

(इति रोदिति)

(ततः प्रविशति कश्चित् सिद्धः कमण्डलुं धारयन्)

सिद्धः। अहो प्रमोदः! (तिस्रः पाशकशलाकाः प्रदर्शयन्) एते खलु दिव्य-पाशकाः स्वर्लोकात् पृथिवीभ्रमणसौकर्याय स्वयं देवदेवेन सेवकाय मह्यमर्पिताः।

अघटनघटनपटीयस्त्रयमेतत् करशोभिशलाकानाम्।
क्षिपामि किं सङ्कल्प्य प्रथमपरीक्षाफलाकांक्षी॥

भवतु मत्प्रियामाह्वयामि। भोः प्राणाधिके दयिते! कथं विलम्बसे? सत्वरमवतर मर्त्यभूमिम्। (आकाशे) किमात्थ—नाद्यापि प्रसाधनं परिसमाप्तमिति? अहो! स्वर्भोगिनीनामपि प्रसाधनप्रियता! मर्त्यलोकदर्शनकौतूहलापेक्षया गरीयसी प्रसाधनप्रवृत्तिः। भवतु तत्र घटयामि कामपि बाधाम्। प्राप्तः पाशकक्षेपस्य विषयः। (पाशकान् क्षिप्त्वा) अयं क्षिपामि पाशकान् कोमले मत्प्रियामुखे प्रौढगुम्फोदयो भवतु। इदानीं पाशकशक्तिः परीक्षिता भवतु। (आकाशे) किं कथयसि? किमिदं किमिदमिति। (नेपथ्ये—उच्चहास्यध्वनिः) दर्पणसम्मुखे प्रसाधनं कुर्वत्याः सिद्धाया वदनं सगुम्फमिव लक्ष्यत इति!

(प्रविश्य सिद्धा करेणाच्छादितौष्ठा)

सिद्धा। प्रियतम! त्रायस्व माम्। समाधिमग्नस्य शिवस्य पुरतः सहसा शिवपार्षदस्त्रीणां तथा ममापि गुम्फोदयात् प्रमथानां विकटहास्यः समुद्भूतः। ललनास्तु क्वापि लज्जया पलायन्ते स्म। स्वयमहञ्च दर्पणे मुखं तथैव दृष्टवती। अहो! वैरूप्यम्! तत् त्रायस्व माम्।

सिद्धः। किं श्मश्रुकर्मकरणाय नापितमाह्वयामि? इदानीं प्रसाधनकर्म समाप्तम्। (हसति)

सिद्धा। कथं त्वमपि परिहससि?

सिद्धः। श्रूयताम्—वाञ्छन्ति या हि ललनाः पुरुषाधिकारं
तासां मुखे यदि न वा घनगुम्फशोभा।
स्थूलस्य तुन्दिलजनस्य यथा च नृत्यं
दृश्येत चेत् स्फुरति कस्य मुखे न हास्यम्?॥

सिद्धा। अहो विडम्बरसिक! तवैव किमियं कृतिः कुकीर्तिर्वा?

सिद्धः। प्रिये! श्रीमहेश्वरप्रदत्तानां कामपूरकाणां पाशकानामेषां महिमा, न मम। यथेच्छं त्वमपि क्षिप पाशकान्, तत्फलं च सङ्कल्पानुरूपं लभस्व। तन्मुञ्च करावरणं गृहाण पाशकान्।

(इति सिद्धायाः करावरणमपसारयितुं यतते)

सिद्धा। आः किं परिहासस्य कालविचारोऽपि नास्ति? मदीयदक्षिणहस्ते पाशकान् रक्ष।

सिद्धः । करकृतमवगुण्ठनं विहातुं
ननु दयिते ! तव कुण्ठनं न युक्तम् ।
जगति पुरुषतुल्यता स्त्रियां चे-
दभिलषितास्ति न चासि किं कृतार्था ॥

अतो न ते गुम्फद्वेषः शोभते ।

सिद्धा । तर्हि वीरत्वादिगुणकांक्षिणां पुरुषाणां कथं न लाङ्गूलयोगः सम्भवतु ।

सिद्धः । भवतु नाम । तत्र वर्त्तते ममेष्टापत्तिः ।

सिद्धा । तर्हि त्वयैव क्रियतां पाशकक्षेपः, मया सङ्कल्पो विधीयते ।

सिद्धः । भवतु, पाशकान् क्षिपामि । ( इति पाशकक्षेपं नाटयति )

सिद्धा । भवतु मे गुम्फलोपः, तवास्तु लाङ्गलयोगः ।

सिद्धः । तथैव भवतु, नाहमुत्तिष्ठामि । ( नेपथ्ये स्त्रीणां हास्यध्वनिः )

सिद्धा । मन्ये शिवपार्षदपुरुषाणां सर्वेषां लाङ्गलोदयेन सम्प्रति लुप्तगुम्फाः स्त्रियो हसन्ति ।

सिद्धः । अथ किम् ? इदानीं करमपसारय पश्यामि गुम्फलोपो जातो नवेति ।

सिद्धा । अहं तावद्दर्पणे स्वमुखं पश्यामि । ( निष्क्रान्ता )

सिद्धः । अत्र प्रान्तरे क्व लभ्येत दर्पणः ? अयमेवावसरः पुनः पाशकक्षेपेण लाङ्गूलापनयनस्य । ( इति पाशकक्षेपं नाटयति )

सिद्धा ( प्रविश्य ) । अहो मे प्रमादः ! पाशकास्तवैव हस्तगता आसन् । तेषां यथेच्छव्यवहारेण लाङ्गूलापगमः कृतो भवेत् । नाथ ! त्वमुत्तिष्ठ, पश्यामि ।

सिद्धः । प्रिये ! न खलु पुरुषाणां लाङ्गूलयोगः क्वापि निन्दितः ।

लाङ्गलं चिरमङ्गलं हि पुरुषस्योपाधिसंज्ञां दधन्
मर्य्यादाबलवीर्य्यवित्तयशसां संसूचनासुन्दरम् ।
यावद्दीर्घतरं भवेच्च तदिदं तावन् महत्त्वं नयेन्
निष्पुच्छस्य च तुच्छता बुधसमाजान्तर्मुधा जीवनम् ।

अतो नास्ति मे लाङ्गूलयोगाद् भयम् । तद्ग्रहीतुं हातुञ्च क्षणेन शक्नोमि ।
प्रिये लाङ्गूललोलनयने ! इतः परिवर्त्तय मुखं पश्य पृथिवी-व्यापारम् ।
शृणु करुणो ध्वनिः ।

मन्दो । नाथ ! पश्य पश्य लम्बोदरो जलाभावान् मूर्च्छापन्नः ।

वक्रे । समन्तादन्वेषयामि जलम् । देहि मे किञ्चन पात्रम्

मन्दो । इदं भिक्षापात्रमेव गृहाण । ( तथा नाटयति )

( वक्रेश्वरः पात्रहस्तो निष्क्रान्तः )

मन्दो । हा वत्स ! कथमिदानीमपि न चेतयसे ?

सिद्धः । इयं पृथिवी । मातुः पुरतो जलाभावात् सुतो म्रियते, नास्ति प्रतीकारः ।

सिद्धा । नाहमीदृशं दृश्यं सोढुं क्षमाऽस्मि । नाथ ! पाशकक्षेपेण शीतल-जलमुत्पाद्यताम् ।

सिद्धः । तथा भवतु ( पाशकक्षेपं नाटयन् ) । अहो ! क्षणेन मे कमण्डलु-र्जलभरितो जातः ! तत् सिद्धे ! त्वमेव तत्र गत्वा शिशुं वारि पायय ।

सिद्धा । तथास्तु । ( परिक्रम्य ) अयि ललने ! मा रोदीः । एतेन कमण्डलु-जलेनोज्जीवय बालकम् । ( इति कमण्डलुं समर्पयति )

( मन्दोदरी लम्बोदरमुखे जलं प्रयच्छति )

लम्बो । ( समाश्वस्य ) मातः ! सुधाशीतलमपूर्वं जलं पीतं मया । आः ! तृप्तोऽस्मि ।

षडा । मातः ! अहमपि तृष्णाकातरोऽस्मि । जलं पातुमिच्छामि ।

( मन्दोदरी तन्मुखे जलं क्षिपति ) अहो ! मधुरं जलम् । मातः केयम् ?

मन्दो । कापि देवी दयापरवशा युवयोरुज्जीवनाय समागता ।

( कमण्डलुं प्रत्यर्पयति )

( ततः प्रविशति वक्रेश्वरः )

वक्रे । गृहिणि ! क्वापि न लब्धं सलिलम् । चित्रमिदं यन् मध्येमार्गं सहसा पात्रमिदं जलपूर्णं जातम् । (वक्रेश्वरं दृष्ट्वा सिद्धा किञ्चिदपसरति)

मन्दो । अस्या देव्या कृपया शीतलं मधुरं च जलं लब्धम् । लम्बोदरः षडाननश्च परितृप्तौ हसतः । इदानीं भिक्षार्थं व्रजतम् ।

( उभौ बालकौ निष्क्रान्तौ )

वक्रे । तर्हि किं मम करस्थितभिक्षापात्रम् अस्या एव देव्या महिम्ना जल-पूर्णं जातम् ? गृहिणि ! सत्वरं पदयोरस्याः पत ।

( उभौ सिद्धायाः पदप्रान्ते पततः )

सिद्धा। उत्तिष्ठतं। नाहं देवी। देवयोनिषु सिद्धवर्गे निवेशो मे।

मन्दो। मातः! जीवयास्मान् भोज्यदानेन। दरिद्राणामस्माकं भिक्षावृत्तिं विना नास्त्युपायः।

वक्रे।
भिक्षापि दुर्लभा जाता शिक्षा धर्ममयी गता।
सर्वत्र तु तिरस्कारः पुरस्कारोऽर्थिनामहो!॥

सिद्धा। क्षणमपेक्षस्व, यावदागच्छामि।

(परिक्रम्य सिद्धसमीपं गत्वा कर्णे एवमेवम्)

सिद्धः। तवाग्रहातिशयाद्दिव्यं वस्तु दीयतेऽयोग्याय पात्राय। न खलु परिणामः शुभो भवितेति शङ्कते मे हृदयम्। (उभौ परिक्रम्य वक्रेश्वरसमीपमागम्य)

सिद्धः। भोः! गृह्यन्तामेते दिव्याः पाशकाः। कामनाविशेषं मनसिकृत्य पाशकानां क्षेपणेन सर्वं सङ्कल्पितं वस्तु निमेषादुत्पत्स्यते। न केवलं भवतः प्रतिवेशिनामपि सर्वेषां तथा भविष्यति।

वक्रे। किमेतेनास्माकं भिक्षादैन्यमपगतं भवेत्! हरे राम।

सिद्धः। अथ किम्? सर्वसम्पदागमो भविष्यति भवतः स्वजनानां प्रतिवेशिनामपि। विश्वजनीना वृत्तिर्हि देवमहिम्नः।

वक्रे। भवतु परीक्षे। लम्बोदर-षडाननयोर्भिक्षापात्रद्वयं तण्डुलपूर्णं भवतु।

(सिद्धः पाशकान् क्षिपति)

सिद्धः। इदानीमेतान् रक्ष। साधुव्यवहाराय यतस्व। अन्यथा प्रत्यर्पणीया भवन्तु। (सिद्धौ निष्क्रान्तौ)

लम्बो-षडा। (सानन्दं प्रत्यावृत्य) मातर्मातः, पितः पितः! दृश्यतामावयोर्भिक्षापात्रं तण्डुलपूर्णं संवृत्तम्। अहो! दुर्वहो भारः! गृह्यतामर्द्धं येनावयोर्भारलाघवं भवेत्।

वक्रे। केनेयं महती भिक्षा दत्ता?

लम्बो। न केनापि। शून्यं भिक्षापात्रं गृहीत्वा प्रत्यावर्त्तमानौ पश्यावः सहसा भिक्षापात्रे परिपूर्णे जाते।

वक्रे। कथं ममापि भिक्षापात्रं पूर्णं झटिति संवृत्तम्। (नेपथ्ये कोलाहलः) सर्वे भिक्षुका वय न भारं वोढुं समर्थाः। कथं कथमेतेषां तण्डुलानामागमः सम्भवति? चित्रम्! हा हा हा!

मन्दो। अहो! पाशकानां कीदृशमहिमा! अन्येऽपि भिक्षुकाः सर्वे प्राप्त-पर्याप्त-तण्डुला हसन्ति।

वक्रे। गृहिणि! नाहं तथा सहे। पाशकक्षेपः सर्वथा रोद्धव्यः। सर्वेषां तण्डुलागमो मम कर्मफलेन समानो यदि स्यात् तदा वरं मे दारिद्र्यम्।

मन्दो। भवन्तु सर्वेऽपि लाभवन्तः। का नो हानिः।

वक्रे। न हि न हि, तथा न कदापि भवितुमर्हति। वरं सर्वेषां प्रतिवेशिनां दुःखवृद्धिर्भवतु।

अन्धः कुष्ठी दरिद्रो वा प्रतिवेशी वरं भवेत्।
समानधनगर्वेण स्पर्द्धमानो हि दुःसहः॥

अतः पाशकान् वह्निसात् कुरु। हरे राम!

मन्दो। हा धिक्! यदि कथञ्चिद् भगवत्कृपया दारिद्र्यात् परित्राणं सम्भवेत्, तव बुद्धिदोषेण दुर्दैवेन वा तदपि अपहारितम्।

वक्रे। गृहिणि! सत्वरं ज्वलय वह्निम्, पाशकास्तत्र नूनं क्षिपामि। अन्यथा न मे शान्तिरस्ति। अथवा क्षणं तिष्ठ, यावत् पाशकान् क्षिपामि—सर्वे प्रतिवेशिनो मे दरिद्रा भवन्तु। क्षुद्रामनामा च वणिक् निर्धनो भवतु।

(इति यावत् पाशकान् क्षेप्तुमिच्छति, तावत् सिद्धः प्रविश्य पाशकान् आच्छिद्य गृह्णाति)

सिद्धः। अलमेतेषां दुर्व्यवहारेण।

वक्रे। अहो! स्थाने किल भवदागमनं जातम्। पाशकानां दाहं वा प्रत्यावर्त्तनं वा विना नासीन्मे मनसः शान्तिः। अहो निर्वृतोऽस्मि। किमतःपरमपि प्रियमस्ति।

प्रतिवेशिसुखं रुद्धं कृतं मे शीतलं मनः।
भवतो निधिरेषोऽपि भवते पुनरर्पितः॥

सिद्धः। तथापीदमस्तु— (भरतवाक्यम्)

खलता खलता•समाखिलं
नरचित्तं परिहाय खेलतु।
प्रतिवेशिसुखाभिलाषिता
लसताल्लोक-मनःसु सन्ततम्॥

॥इति दरिद्र-दुर्दैवं नाम प्रहसनं समाप्तम्॥

---

# भाषापरिच्छेदे पदार्थनिरूपणम्

[ निबन्धकः—श्रीदीननाथत्रिपाठी महाचार्यः ]

अथ पदार्थान् विभजते—द्रव्यं गुण इत्यादि। तत्र के पदार्थाः किंवा पदार्थस्य लक्षणम्, तन्निरूपणस्यात्र शास्त्रे किं प्रयोजनम् इति शिष्याणां श्रोतुर्वा जिज्ञासा भवति। के पदार्था इति प्रश्नस्य उत्तरं मूले एव प्रदत्तम् 'द्रव्यमि'त्यारभ्य 'पदार्थाः सप्त कीर्तिता' इत्यन्तेन। पदार्थनिरूपणस्य किं प्रयोजनम् इति प्रश्नस्योत्तरस्वरूपतया भाषापरिच्छेदे मुक्तावल्यां चाभिधानं नास्ति। न च

सर्वस्यापि हि शास्त्रस्य कर्मणो वापि कस्यचित्।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते॥

[ श्लोकवार्त्तिकम् १।१ ]

इति शिष्टवाक्यप्रामाण्यात् मूले मुक्तावल्यां च प्रयोजनानभिधानादस्य ग्रन्थस्य प्रेक्षावद्भिरनुपादित्सितत्वं ग्रन्थकारस्य न्यूनता चेति वाच्यम्। 'एते च पदार्था वैशेषिकनये प्रसिद्धा नैयायिकानामप्यविरुद्धाः, प्रतिपादितं चेवमेव भाष्ये' इति मुक्तावल्यामुपरिष्टात् कीर्तनात्, न्यायवैशेषिकशास्त्रप्रतिपादित-सिद्धान्तानामेवात्र सर्वथा निरूपणसूचनादस्य ग्रन्थस्य न्यायवैशेषिकशास्त्रप्रकरण-तया तन्मूलशास्त्रानुबन्धेनैवास्य तद्वत्तया नात्रोक्तदोषद्वयाशङ्का।

अथ पदार्थनिरूपणस्य किं प्रयोजनं मूलशास्त्र उक्तमिति चेच्छृणु—"द्रव्य-गुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः" [प्रशस्तपादभाष्यम्]। "धर्मविशेषप्रसूताद् द्रव्यगुणकर्म-सामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निः-श्रेयसम्।" [वैशेषिकसूत्रम् १।१।४] "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-

सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" [न्यायसूत्रम् १।१।१ ] इत्यादिषु द्रव्यादीनां तत्त्वज्ञानान्निःश्रेयसप्रयोजनमुक्तम् । न च न्यायसूत्रे प्रमाणादीनां षोड़शानां पदार्थाना तत्त्वज्ञानान्निःश्रेयसप्राप्तिरुक्ता न तु द्रव्यादीनां तत्त्वज्ञानादिति वाच्यम् ।

न्यायभाष्ये च "द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः, षोड़शानामत्रैवान्तर्भावादिति प्रतिपादनेन सप्तानां पदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमस्य नैयायिकैरपि स्वीकृतत्वात् ।

ननु प्रशस्तपादभाष्ये अभावातिरिक्तानां द्रव्यादीनां षण्णां पदार्थानामेव निर्देशात् कथं मुक्तावलीकाराणाम् "एते च पदार्था वैशेषिकनये प्रसिद्धाः" इत्युक्तिः सङ्गच्छते ? इति चेन्न, तन्मतेऽभावस्यातिरिक्तपदार्थत्वं किरणावलीकारैः प्रतिपादितम् । तद्यथाः—"अभावस्तु स्वरूपवानपि पृथङ्नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वात्, न तु तुच्छत्वात्" [किरणावली] इत्यादि । तदेवं सप्तानां पदार्थानां साधर्म्यवैधर्म्याभ्यां निःश्रेयसोपयोगितया तत्-प्रतिपादकस्यास्य ग्रन्थस्य प्रेक्षावतामुपादेयत्वं सिद्धम् ।

ननु पदार्थस्य सामान्यतो लक्षणमनुक्त्वा कथं तद्विभागः प्रतिपादितः सामान्यलक्षणकथनानन्तरमेव विभागस्य कर्तव्यत्वात् इति चेत् । न । 'पदार्थाः सप्त कीर्तिताः' इत्यत्र पदार्था इत्यनेन पदार्थलक्षणस्योक्तत्वात् । तथाहि— पदस्यार्थः इति व्युत्पत्त्या पदाभिधेयत्वं पदार्थसामान्यलक्षणमिति ग्रन्थकाराणामाशयः । अत्र पदाभिधेयत्वमित्यस्य पदसम्बन्ध्यभिधाविषयत्वमर्थः । तत्र पदसम्बन्ध्यंशस्य व्यावर्तकत्वाभावान्न लक्षणघटकत्वं, अभिधाविषयत्वमभिधेयत्वापरनामकमेव **पदार्थस्य लक्षणम्** ।

न च मूले 'पदार्था' इत्युल्लेखेऽपि कथं ततोऽभिधेयत्वस्य लाभ इति वाच्यम् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्विति' अमरकोशादौ अर्थशब्दस्य

अभिधेयार्थकत्वोक्तेः। तस्मादभिधेयत्वं पदार्थस्य लक्षणम्। लक्षणान्तरञ्च ज्ञेयत्वमिति। ज्ञेयत्वं ज्ञानविषयत्वमित्यर्थः। नन्वत्र मूले "पदार्थाः सप्त कीर्तिता" इत्येवोक्ते ज्ञेयत्वं पदार्थस्य लक्षणमित्यत्र ग्रन्थकारस्वारस्याभाव इति चेन्न। ऋगतौ इत्यस्माद्धातोस्थप्रत्ययेन अर्थशब्दस्य निष्पन्नत्वात्, गत्यर्थकधातूनां च ज्ञानार्थकत्वनियमात्, थप्रत्ययस्य च विषयार्थकत्वात् ज्ञानविषयत्वस्य पदार्थलक्षणस्य मूलकाराभिप्रेतत्वमविरुद्धम्। शुक्तिरजतादेरपि ज्ञानविषयत्वसत्त्वात् पदार्थत्वं नाव्यवस्थितम्। असतो ज्ञानविषयत्वाभावात् खपुष्पादौ न पदार्थलक्षणस्यातिव्याप्तिः। ननु अभिधेयत्वस्य ज्ञेयत्वस्य वा पदार्थलक्षणत्वेऽपि किं तावल्लक्ष्यतावच्छेदकम्? लक्ष्यतावच्छेदकसमनियतधर्मस्य लक्षणपदवाच्यत्वात् इति चेत्। उच्यते—प्रतिपाद्यतासम्बन्धेन पदार्थशब्दवत्त्वं लक्ष्यतावच्छेदकम्। प्रतिपाद्यत्वञ्चात्र शाब्दबोधविषयत्वं न तु वाच्यत्वम्। पदार्थशब्दस्य वाक्यात्मकत्वात्, वाक्यस्य च वाचकत्वाभावात्। न्यायलीलावतीकण्ठाभरणकारैस्तु 'अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छया तज्ज्ञानेन वा विषयविषयिभावलक्षणसम्बन्धः पदार्थत्वमिति प्रतिपादयद्भिः फलत ईश्वरेच्छाविषयत्वम् ईश्वरज्ञानविषयत्वं वा पदार्थलक्षणमुक्तम्। न्यायलीलावतीप्रकाशकारैरपि "अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरज्ञानरूपसङ्केतात्मकत्वात्तस्य, तच्च ज्ञानमनादिनिधनरूपं सर्वगोचरमेकमेव, तत्सम्बन्धश्चार्थैर्विषयत्वलक्षणः" इति ब्रुवद्भिर्ज्ञानविषयत्वस्य पदार्थलक्षणत्वमुक्तप्रायम्।

अत्र अभावपदं द्रव्यत्वाद्यन्यतमवत्परम्। तत्रैवाभावपदस्य लक्षणा। द्रव्यमित्यादिपदं तात्पर्यग्राहकम्। सप्तपदार्थस्याभेदसम्बन्धेनान्यतमत्वावच्छिन्नेऽन्वयः। एवं सति पदार्थाः सप्तत्वाश्रयद्रव्यत्वाद्यन्यतमवन्त इत्यन्वयलाभः। सप्तपदार्थस्य पदार्थेऽन्वयो न सम्भवति। पदार्थानामसंख्येयत्वात्। अथवा पदार्था इत्यस्य पदार्थ इत्येकवचनविपरिणामेन द्रव्यादिषु प्रत्येकमन्वयेन द्रव्यं पदार्थः गुणः पदार्थ इत्यादिक्रमेण इति सप्त कीर्तिता इत्यन्वयः। केचित्तु पदार्था इत्यस्य पदार्थतावच्छेदका इत्यर्थं द्रव्यम् इत्यादीनां भाव-

प्रधाननिर्देशेन द्रव्यत्वादीन् अर्थान् प्राहुः। तथाच द्रव्यत्व—गुणत्वादयः पदार्थतावच्छेदकाः सप्तत्वाश्रयाः इति कारिकाया अर्थः सिध्यति इत्याहुः।

ननु विशेषेण सह वर्तमानं सविशेषकमिति व्युत्पत्त्या सविशेषकं सामान्यमिति विशेषसहितसामान्यस्य लाभात् कथं सप्तत्वस्य पदार्थान्वयः सम्भवति इति चेत्। न। घटवत्कपालं द्रव्यमित्यत्र द्रव्यत्वस्य विशेष्यभूतकपाले अन्वयेऽपि बाधकाभावेन यथा विशेषणीभूते घटेऽन्वयः तथा पदार्थत्वस्य सामान्येऽन्वितत्वेऽपि विशेषणीभूते विशेष्येऽन्वयः प्रसरं लभते इति न कश्चिद्दोषः। संयोगातिरिक्तं कर्म नास्तीति भूषणकारमतं निरसितुं 'तथा' इत्याह। यथा गुणः पदार्थस्तथा कर्मापि पदार्थ इत्यर्थः। अभावोऽधिकरणात्मक इति सांख्यमतं प्राभाकरमतं च निराकर्तुं पुनः 'तथा' इत्युक्तम्। यथा द्रव्यादयः पदार्थाः तथा अभावोऽपि अतिरिक्तः पदार्थः इत्यर्थः। द्रव्यं गुण इत्यारभ्य कीर्तिता इत्यन्तेन मूलेन पदार्थानां विभागो निरूपित इत्याह मुक्तावल्यां 'पदार्थान् विभजते' इति। ननु सामान्यलक्षणमनुक्त्वा कथं पदार्थानां विभागः कृतः, सामान्यधर्मव्याप्यपरस्परासमानाधिकरणयावद्धर्मप्रकारेण ज्ञानानुकूलव्यापारस्य विभागपदार्थत्वात् इति चेन्न। पदस्यार्थः पदार्थ इति व्युत्पत्त्या अभिधेयत्वं ज्ञेयत्वं वा पदार्थसामान्यलक्षणमिति लभ्यते इत्यनेन विभागवाक्यघटकपदार्थपदेनैव पदार्थसामान्यलक्षणलाभः। विपूर्वकभजधातोः सामान्यधर्मव्याप्यावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारोऽर्थः। आख्यातार्थश्च कृतिः। पदार्थान् इत्यत्र द्वितीयायाः सविषयकधातुसम्बन्धाद् विशेष्यताख्यविषयत्वमर्थः। तस्य च धात्वर्थैकदेशे ज्ञानेऽन्वयः। कृतेश्चाश्रयतासम्बन्धेन कर्तरि अन्वयः। तथाच पदार्थविशेष्यकपदार्थत्वव्याप्यावान्तरधर्मप्रकारकज्ञानानुकूलव्यापारानुकूलकृतिमान् मूलकार इति शाब्दबोधः। ननु पदार्थो द्विविधो भावोऽभावश्च। भावः षड्विध इत्येवमनिरूप्य कथं 'द्रव्यं गुण' इत्यादिक्रमेण निर्देश इत्यत आह मुक्तावल्यामत्र सप्तमस्येत्यादिना।

अत्र 'द्रव्यं गुण' इत्यादिवाक्यं इत्यर्थः। सप्तम्यर्थो घटकत्वम्। एवं सति 'द्रव्यं गुण' इत्यादिवाक्यघटकीभूताभावपदार्थस्य सप्तमस्याभावत्वकथनादेव इत्येवमन्वयः।

"षण्णां भावत्वं प्राप्तम्"—अनुमानप्रमाणेन षण्णां भावत्वं सिध्यति। अनुमानं च—द्रव्यादयो भावा अभावत्वासमानाधिकरणधर्मवत्त्वात् इत्येवं रूपम्।

ननु कथमेते एव पदार्था उक्ता, अन्ये पदार्थाः कथं नोक्ताः, न्यायदर्शने षोडश पदार्था उक्ता इति चेत्तत्राह—"एते च पदार्था" इति। न्यायभाष्ये षोडशानां पदार्थानां सप्तस्वन्तर्भावः प्रदर्शितः। ननु कथं षोडश पदार्थाः सप्तस्वन्तर्भूता इति चेत् उच्यते। प्रमाणेषु प्रत्यक्षस्य इन्द्रियादेर्मनसश्च द्रव्येऽन्तर्भावः, अनुमानस्य व्याप्तिज्ञानात्मकस्य गुणे, उपमानस्य सादृश्यज्ञानादेर्गुणे, शब्दस्यापि गुणे, प्रमेयेषु आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य गन्धरसरूपस्पर्शशब्दात्मकस्य गुणे, 'गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः' [न्याः सूः १।१।१४] इत्युक्तत्वात्। बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्धर्माधर्मस्वरूपस्य गुणे, यद्यपि न्यायसूत्रे "प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः" [न्याः सूः १।१।१७] इत्यनेन वागिन्द्रियस्य वचनानुकूलो यत्नो वागारम्भः, बुद्धेर्मनस आरम्भः दयाश्रद्धास्पृहा चेति, शरीरगोचरो यत्नः शरीरारम्भः इति वाग्बुद्धिशरीरारम्भस्य धर्माधर्मानात्मकस्यापि गुणात्मकत्वं तथापि एतादृश्याः प्रवृत्तेः क्षणिकत्वेन जन्मकारणत्वानुपपत्त्या प्रवृत्तिफले धर्माधर्मात्मके प्रवृत्त्युपचारात्तथानिर्देशः। दोषाणां रागद्वेषमोहानामिच्छाद्वेषमिथ्याज्ञानस्वरूपाणां गुणे। "पुनरुत्पत्तिः प्रेत्यभावः" [न्याः सूः १।१।१६] प्रेत्य मृत्वाभावोजननं प्रेत्यभावः। मरणोत्तरजन्म प्रेत्यभावशब्दस्यार्थः। मरणं नाम चरमप्राणशरीरसंयोगध्वंसः। जन्म च आद्यशरीरप्राणसंयोगः। तस्माच्चरमप्राणशरीरसंयोगध्वंसोत्तराद्यशरीरप्राणसंयोगात्मकस्य प्रेत्यभावस्य गुणेऽन्तर्भावः। सुखदुःखसंवेदनात्मकस्य मुख्यफलस्य गुणे, देहेन्द्रियविषयबुद्ध्यादीनां गौणफलानां द्रव्यादिष्वन्तर्भावः। बाधनालक्षणस्य दुःखस्य गुणे, "बाधनालक्षणंदुःखम्"

[न्याय सूः १।१।२१] इति न्यायसूत्रम् । "तदत्यन्तविमोक्षोऽपवर्गः" [न्याः सूः १।१।२२] तस्य दुःखस्यात्यन्तविमोक्षोऽपवर्गः । आत्यन्तिको दुःखध्वंस एव मुक्तिरित्यर्थः । दुःखध्वंसे आत्यन्तिकत्वं नाम स्वसमानाधिकरणदुःखासमानकालीनत्वम् । तथाच दुःखवदन्यदुःखध्वंसो मुक्तिः । दुःखवत्त्वं च स्वसामानाधिकरण्यस्वसमानकालीनत्वैतदुभयसम्बन्धेन । तस्मादपवर्गस्याभावेऽन्र्भावः ।

संशयस्य गुणेऽन्तर्भावः । "यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम् ।" [न्याः सूः १।१।२४] इच्छाविषयत्वं प्रयोजनत्वमिति इच्छाविषयत्वस्य यथायथं द्रव्यादीनां सम्भवात् प्रयोजनस्य द्रव्यादिष्वन्तर्भावः । "तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः" [न्याः सूः १।१।२६] 'शास्त्रितार्थनिश्चयः सिद्धान्त' इति वृत्तिकृद्भिः प्रतिपादितत्वात् शास्त्रसिद्धानामर्थानां सिद्धान्तत्वेन यथायथं सिद्धान्तस्य द्रव्यादिष्वन्तर्भावो बोध्यः ।

"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः" [न्याः सूः १।१।३२] इति प्रतिज्ञादीनां शब्दस्वरूपत्वादवयवस्य गुणे, "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" [न्याः सूः १।१।४०] इति सूत्रेण आरोपात्मकस्य ऊहापरपर्यायस्य तर्कस्य गुणे, निर्णयस्य ज्ञानात्मकस्य च गुणेऽन्तर्भावः । तत्त्वजिज्ञासोः कथारूपस्य वादस्य गुणे, विजिगीषुकथारूपस्य जल्पस्य गुणे, स्वपक्षस्थापनशून्यपरपक्षनिराकरणात्मकवितण्डायाः गुणेऽन्तर्भावः ।

( क्रमशः )

# शब्दार्थोभयालङ्कार-विचारः

[ निबन्धकः—श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री पञ्चतीर्थः
एम्, ए. पि, आर, एस् ]

यत्र सम्पाद्यते श्रुतिमाधुर्यं शब्दानामेव सन्निवेश-विशेषेण, तत्र स्वीक्रियते शब्दालङ्कारता, अर्थचमत्कृतिमवलम्ब्य च स्वीक्रियते सुधीभिरर्थालङ्कारता। एवं रसभावादीनां वैचित्र्यवशाद् रसालङ्कारतापि नितरामङ्गीक्रियते तत्रभवद्भिरालङ्कारिकपादैः। क्वचित्तु दृश्यते चमत्कृतिः शब्दार्थयोरुभयोरेव सन्निवेशविशेषवैचित्र्येण। तादृशस्थलेषु शब्दार्थयोरुभयोरेव चमत्कृतिविधायकत्वात् शब्दर्थोभयालङ्कारतापि स्वीक्रियते सुधीभिः। एवंविधस्तु अलङ्कारो नितरा विरल एव काव्यमार्गे। पुनरुक्तवदाभासनाम्ना एक एव तादृशोऽलङ्कारो दृश्यते।

पुरातनेषु कालेषु अलङ्कारोऽयं शब्दालङ्कारमध्ये एव गणितो बभूव। उक्तञ्च तत्रभवता विश्वनाथेन—"शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वाच्छब्दालङ्कारेषु वक्तव्येषु शब्दार्थोभयालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह" इति। तत्रभवान् मन्मटभट्टो विभिन्नाकारशब्दगमेकार्थवत् प्रतिभासमेव पुनरुक्तवदाभासनाम्ना स्वीकृत्य क्वचित्तस्य केवलशब्दनिष्ठत्वं क्वचिच्च शब्दार्थोभयनिष्ठत्वमङ्गीकृत्य भेदद्वयमस्मिन् कल्पितवान्। दर्पणकारस्तु केवलशब्दनिष्ठस्य केवलार्थनिष्ठस्य वा तस्य भेदं न प्रदर्शितवान्। शब्दार्थोभयनिष्ठत्वरूपेण एक एव प्रकारोऽस्य प्रदर्शितः साहित्यदर्पणे।

अलङ्कारेऽस्मिन् शब्दविशेषा अपुनरुक्ता अपि पुनरुक्तवदाभासन्ते इति विलोक्य एतस्य 'पुनरुक्तवदाभास' इति नाम कृतं तत्रभवद्भिरालङ्कारिकपादैः। एतल्लक्षणमुक्तं साहित्यदर्पणस्य दशम-परिच्छेदे, यथा—

"आपाततो यदर्थस्य पौनरुक्त्यावभासनम्।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥" इति।

अयमर्थः—यस्मिन्नलङ्कारे वस्तुतो भिन्नार्था अपि शब्दा अभिन्नार्था इव स्थिताः आपाततः पुनरुक्तशब्दवत् प्रतीयन्ते, भिन्नाकारशब्दैः रचितस्तादृशोऽलङ्कारः पुनरुक्तवदाभासनाम्ना व्यपदिश्यते इति।

एतदुदाहरणमुक्तन्तत्रैव यथा—

"भुजङ्गकुण्डली व्यक्तशशि-शुभ्रांशु-शीतगुः।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः॥" इति।

भुजङ्गशब्दो हि सर्पार्थकः। कुण्डलीतिशब्दोऽपि सर्पवाचक एव। अतएव आपाततो 'भुजङ्गकुण्डली' इत्यत्र पुनरुक्तिदोषः प्रतीयते। पर्य्यवसाने तु "भुजङ्गरूपं कुण्डलं विद्यते यस्य सः "इत्येवं व्याख्याने स दोषोऽपनोद्यते। तेन च दोषाभावो वैचित्र्यवशाच्चालङ्कारावस्थितिरेवात्र प्रतीयते। एवमत्र आपातदृष्ट्या पुनरुक्तत्वं वास्तवदृष्ट्या तु पुनरलङ्कारत्वमिति विचार्य्य सार्थकमेव नाम कृतं 'पुनरुक्तवदाभास' इति।

शशि-शुभ्रांशु-शीतगुरित्यत्र त्रयाणामेव शब्दानामापाततः एकार्थतावत्-प्रतिभासः। पर्यवसाने तु 'व्यक्तो शशचिह्नयुक्तः श्वेतकिरणविभूषितः शीतगुः (चन्द्रः) यस्मिन्' इति व्याख्याने शिवविशेषणतया पुनरुक्ति-परिहारः। एवं सदापायादव्यादित्यत्र 'पायादव्यात्' इत्यंशे आपातपुनरुक्ति-प्रतिभासः, पश्चात्तु 'अपायादव्यात्' इति यथार्थावगमे पुनरुक्तता-परिहारः। 'हरः शिवः' इत्यत्रापि उभयोरेव शब्दयोः शिवार्थतया प्रथमं पुनरुक्तिधारणा। पश्चात्तु 'चेतोहरः शिवः' इति समग्रस्य ग्रहणे परिह्रियते पुनरुक्तिः। एवमेकस्मिन्नेव श्लोके विभिन्नानां पुनरुक्तवदाभासानामवस्थितिरिह स्पष्टा। एतावता अलङ्कारस्यास्य—'पुनरुक्तवदाभास' इति नाम्नः सार्थकत्वमवगम्यते।

ननु कथमस्य शब्दार्थोभयालङ्कारत्वमित्युच्यते—अन्वय-व्यतिरेकाभ्यामेव गुण-दोषालङ्काराणां शाब्दत्वस्य, आर्थत्वस्य च व्यवस्था। यत्र शब्दानां परिवर्त्तने अलङ्कारोऽपगच्छति, शब्दानामपरिवर्त्तने एव स तिष्ठति, तत्रैव तस्य शब्दालङ्कारता। अनुप्रासादीनामुदाहरणेषु दृष्टमस्माभिः शब्दपरिवर्त्तने अलङ्कारो न तिष्ठतीति। अतः शब्दालङ्कारत्वमनुप्रासादीनाम्। अर्था-

लङ्कारादिषु तु शब्दपरिवर्त्तनेऽपि तिष्ठत्यलङ्कारः। अतो यत्रालङ्कारस्य न शब्दपरिवृत्तिसहत्वं तत्रैव शब्दालङ्कारता। यत्र तु तस्य शब्दपरिवृत्तिसहत्वं तत्र न शब्दालङ्कारता। एवमर्थालङ्कारोऽर्थपरिवृत्तिं न सहते। पुनरुक्तवदाभासस्थले तु दृश्यते क्वचिच्छब्दपरिवृत्तिसहत्वाभावः क्वचिच्चार्थपरिवृत्तिसहत्वाभाव इति तस्य शब्दार्थोभयालङ्कारत्वमङ्गीकृतं सुधीभिः।

'भुजङ्ग-कुण्डली' इत्यत्र भुजङ्गशब्दस्य परिवृत्तिसहत्वं दृश्यते; न तु 'कुण्डली' इति शब्दस्य। भुजङ्गकुण्डलीति शब्दमपनीय तत्स्थाने 'सर्पकुण्डली' 'पन्नगकुण्डली' इत्येवमादीनां शब्दानां ग्रहणेऽपि तिष्ठति पुनरुक्तवदाभासालङ्कारः। 'कुण्डली'ति शब्दस्य परित्यागे तु न तिष्ठति सः। अतः कुण्डलीत्यंशे अलङ्कारस्य शब्दपरिवृत्तिसहत्वाभावात् तस्य शब्दालङ्कारता, भुजङ्गेत्यंशे तु तस्य शब्दपरिवृत्तिसहत्वान्न शब्दालङ्कारता। पुनश्च, भुजङ्गशब्दस्थले केवलं सर्पार्थकशब्दान्तरस्य ग्रहणे एव तिष्ठति पुनरुक्तवदाभासः, सर्पार्थकशब्दं विहाय सुवर्णादिशब्दग्रहणे (सुवर्णकुण्डलीत्येवं शब्दस्य ग्रहणे) तु न विद्यते सोऽलङ्कारः। अतो भुजङ्गांशे अलङ्कारस्य आर्थत्वं वेदितव्यम्। एतावता ज्ञायते 'भुजङ्ग-कुण्डली' इत्यत्र पुनरुक्तवदाभासस्य प्रथमांशे अर्थपरिवृत्तिसहत्वाभावात् शेषांशे च शब्दपरिवृत्तिसहत्वाभावादलङ्कारस्यास्य शब्दार्थोभयगतत्वमेवेति।

पायादव्यादित्यत्र क्रियागतोयमलङ्कारः। वास्तवार्थस्य ग्रहणे पायादित्यस्य 'अपायात्' इत्यत्र पर्यवसाने तु न तिष्ठत्यलङ्कारः। अत्र 'अव्यात्' इत्यंशस्य परिवृत्तिसहत्वं 'रक्षेत्'प्रभृति-क्रियापदप्रदानेऽपि अलङ्कारस्य स्थितेः। 'पायात्' इत्यंशस्य तु न परिवृत्तिसहत्वम्, अपायादितिपदस्यांशमात्रस्वरूपत्वात्तस्य। 'अव्यात्' इत्यंशेऽपि रक्षणार्थस्य न परिवृत्तिसहत्वम्। अतः प्रथमांशे शब्दालङ्कारता द्वितीयांशे चार्थालङ्कारतेति शब्दार्थोभयालङ्कारत्वमेवात्र विद्यते। 'हरः शिवः' इत्यत्रापि प्रथमांशस्य न परिवृत्तिसहत्वं 'चेतोहरः' इति शब्दस्यांशमात्रस्वरूपत्वात्तस्य। शिवशब्दस्य तु परिवृत्तिसहत्वम्।

लक्षितव्यमेतत् सुधीभिः—तत्रभवद्भिः मम्मटभट्टपादैर्विश्वनाथपादैश्च अलङ्कारस्यास्य लक्षणे भिन्नाकारशब्दगतत्वं विशेषणं प्रयुक्तम्; अयन्त्वेषामभिप्रायः—तुल्याकारशब्दानां प्रयोगे वैचित्र्याभावान्न तिष्ठत्येषोऽलङ्कारः। 'भुजङ्गकुण्डली'—शब्दस्थले 'भुजङ्ग-भुजङ्ग'शब्दस्य कुण्डलि-कुण्डली'ति शब्दस्य वा प्रयोगे नाङ्गीक्रियतेऽस्तित्वमलङ्कारस्यास्य सुधीभिः। एवं 'हरः शिवः' इत्यत्र 'हरो हरः' इत्यस्य वा 'शिवः शिवः' इत्यस्य वा प्रयोगे न विद्यतेऽलङ्कारोऽयम्। अतो भिन्नाकारशब्दगतत्वं पुनरुक्तवदाभासे नितरामपरिहार्यमेव।

काव्यप्रकाशकृता तु अलङ्कारस्यास्य क्वचित् केवलशब्दनिष्ठत्वं क्वचिच्च शब्दार्थोभयनिष्ठत्वं लक्षितम्। तदुक्तं काव्यप्रकाशे—

"पुनरुक्तवदाभासो विभिन्नाकारशब्दगा।
एकार्थतेव, शब्दस्य तथा शब्दार्थयोरयम्॥" इति।

तत्र च केवलशब्दनिष्ठस्य चास्य सभङ्गाभङ्गभेदेन द्वैविध्यमङ्गीकृतं प्रकाशकृता। सभङ्गस्योदाहरणं प्रदर्शितं तेनैव यथा—

"अरिवधदेहशरीरः सहसारथिसूततुरगपादातः।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥" इति।

तथा चायं श्लोकार्थः—अवनितलतिलकः पृथिवीभूषणभूतो राजा भाति शोभते। कथम्? सदा सर्व्वकाले नत्या नम्रभावेण अथवा सदानत्या सतां विषये आनत्या अतिनम्रभावेण, यद्वा सदा अनत्या क्षुद्रेषु अनम्रतया। कीदृशः? अरिवधदा शत्रुविनाशिनी ईहा चेष्टा येषां तादृशाः ये शरिणः शरयुक्ता योधाः, तान् ईरयति प्रेरयतीति 'अरिवधदेहशरीरः'। सहसा झटिति हठेन वा रथिभिः सुष्ठु उताः संबद्धाः तुरगा अश्वाः पादाताः पदातिकाश्च यस्य सः। स्थिरतायाम् अगः पर्व्वततुल्य इत्यर्थः। अत्र देह-शरीरशब्दयोः सारथि-सूतशब्दयोः दान-त्यागशब्दयोश्चापाततः पौनरुक्त्यम्, सभङ्गाश्चैते शब्दा इति सभङ्गशब्दनिष्ठः पुनरुक्तवदाभासः।

अभङ्गशब्दनिष्ठस्योदाहरणं यथा—

"चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।

तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः ॥" इति ।

तथा चायं श्लोकार्थः—अस्य राज्ञः पार्श्ववर्त्तिन सेवकाः चकासति शोभन्ते । कीदृशाः पार्श्ववर्त्तिनः? अङ्गनारामाः कल्याणानि अङ्गानि यासां ताः अङ्गनाः । "लोमादिपामादि-पिच्छादिभ्यः शनेलच." (५।२।१००) इति पाणिनिसूत्रस्थेन 'अङ्गात् कल्याणे' इति गणसूत्रेणाङ्गशब्दात् 'न' प्रत्ययः । तासु रमन्ते क्रीडन्तीति तथाभुता विरहशून्या इत्यर्थः । पुनः कीदृशाः? कौतुकेन नृत्यगीतादिना विवाहसूत्रेण वा यः आनन्दः सुखं तस्य हेतवः । पुनः किंभूताः? शोभनानि मनांसि येषां ते सुमनसः । विबुधाः पण्डिता इत्यर्थः । अत्र अङ्गना-रामा-शब्दयोस्त्र्यर्थकतया कौतुकानन्दशब्दयोः सन्तोषार्थतया 'सुमनसो विबुधाः' इत्यनयोर्देवार्थकतया आपाततः पौनरुक्त्यम्, अभङ्गाश्चैते शब्दा इत्यभङ्गशब्दनिष्ठः पुनरुक्तवदाभासः ।

वस्तुतस्तु अलङ्कारोऽयं केवलार्थनिष्ठोऽपि भवितुमर्हति । उल्लिखिते 'भुजङ्गकुण्डली'त्यादिश्लोके 'शशि-शुभ्रांशु-शीतगु'रित्यत्र त्रयाणामेव शब्दानां परिवृत्तिसहत्वस्य चन्द्रार्थकतायाश्च तदसहत्वस्य दर्शनात् । तथा हि, शशिशब्द-स्थले मृगाङ्कशब्दस्य शुभ्रांशुस्थले सितांशुशब्दस्य, शीतगुस्थले च चन्द्रशब्दस्य प्रयोगेऽपि तिष्ठत्येषोऽलङ्कारः । चन्द्रार्थव्यतिरिक्तशब्दप्रयोगे तु न तिष्ठति सः । अतः खलु केवलार्थनिष्ठः पुनरुक्तवदाभासालङ्कारोऽयम् ।

एतावता केवलशब्दगत-केवलार्थगत-शब्दार्थोभयगतत्वेन पुनरुक्तवदा-भासस्य त्रैविध्यमायातम् । तत्र च केवलशब्दगतस्य सभङ्गाभङ्गभेदेन पुनर्द्वै-विध्यात् साकल्येन चतुर्व्विधत्वमस्य विज्ञेयम् । यत्तु सार्थकशब्दगत निरर्थक-शब्दगतत्वेन पुनरस्मिन्नवान्तरभेदौ कल्पितौ कैश्चित्, तन्न युक्तं मन्यतेऽस्माभिः, तादृशावान्तरभेदेषु वैचित्र्यविशेषाभावात् । शिवमस्तु ।

# उत्तरकुरुक्षेत्रम्

[ श्रीविश्वेश्वर विद्याभूषण काव्यतीर्थेन विरचितम् ]

## प्रस्तावना

नान्दी

कालिन्दीकुञ्जचारी नवघनरुचिरः श्यामलः शान्तमूर्त्ति-
र्यः कंसध्वंसकारी कुरुकुलसमरे दिव्यगीताप्रचारी ।
प्राणानन्दः प्रमूर्तः सुर-नर-रमणो गोपिकाचित्तचारी
सोऽयं पायाच्चिर वस्त्रिभुवनशरणं पापहारी मुरारिः ॥

नान्द्यन्ते सूत्रधारः—अहो, अद्य तावन्मधुपूर्णिमोत्सवप्रसङ्गेन नानादिग्देशेभ्य-समागता नरनार्य्योऽत्र प्रातर्माधवमर्चयित्वा अधुना श्रीमल्लक्ष्मीनारायण-मन्दिरप्राङ्गणे आनन्द कुर्वन्ति । पश्यामि तेन—

आयाता मधुपूर्णिमाद्य भुवने फुल्लारविन्दानिला
यस्या गोपवधूविलाससुखितः संक्रीडितो माधवः ।
कालिन्दीपुलिने तदत्र ललिते वृन्दावने श्रीहरि-
र्नित्यं दीव्यति चिन्मयात्मरसिकस्तद्भावुकैर्भाव्यते ॥

किञ्च—

इत्थं कोकिलगीतिमुखरे कालेऽत्र वासन्तिके
पुष्पाणां स्तवकैर्हसन्ति मधुरं कुञ्जाग्रवल्ल्यो वने ।
भृङ्गाणां कलगुञ्जितैश्च भवति प्रेम्णा महाप्लावनम्
आनन्दः कुसुमायते स्थलजले विश्वं नरीनृत्यते ॥

यातु । आह्वयामि नटीं तावत् । (नेपथ्यद्वारं गत्वा) आर्य्ये माधविके !

नेपथ्ये माधविका—(उच्चैः) देव, अथ किमादिशति भवान् ?

सूत्रधारः—भद्रे, वक्तव्यमस्ति किञ्चित् । तद् आगम्यतामचिरेण ।

[प्रविशति नटी माधविका]

प्रविश्य माधविका—नमोऽस्तु आर्याय ! (प्रणमति) एषाऽहमागच्छामि ।

सूत्रधारः—भद्रमस्तु देवि ! वार्ता ते ज्ञापयामि । अद्यात्र शुभ-सन्ध्यायामस्माकमभिनयदर्शनार्थं माननीयाः सज्जनाः प्रेमभक्तिधना मातृमूर्तयश्च साग्रहं प्रतीक्षन्ते । तदेतेषां मनोरञ्जनाय अस्माभिः संस्कृतनाटकं प्रयोक्तव्यमिति ।

माधविका—( सहर्षम् ) साधु साधु ! वयमपि भवदादेशपालनार्थं सुसज्जिताः कालं प्रतिपालयामः । अधुना आर्यस्यानुमतिरेव प्रमाणम् ।

सूत्रधारः—साधु भद्रे ! युष्माकं यथायथमुद्योगं विदित्वोल्लसामि । तद् गत्वा विज्ञाप्यन्तामार्य-पारिपार्श्विकादयो यदद्यास्माभिरुत्तरकुरुक्षेत्रं नाम संस्कृतनाटकं सामाजिकानां विनोदायाभिनेतव्यमिति । तथा—

उत्तरमितिशब्दार्थं कुरुक्षेत्रपदान्वयम् ।
इदं हि नाटकं नाम चक्रे विश्वेश्वरो द्विजः ।
कृष्णकान्तात्मजः श्रीमान् सारस्वतपदाश्रयः ।
विदुषां परितोषाय भारतीकरुणाशया ॥

माधविका—अहो, विजयते भवान् । तद् देव, किमधुना सहृदयाः सामाजिका देवभाषायामनुरागशीला भवन्तीति परिज्ञातुं कौतूहलं मे वर्त्तते ।

सूत्रधारः—सम्यगुक्तमत्रभवत्या । इयं हि देवभाषा च्छन्दोमालिनी गद्यपद्यमयी रसमञ्जुला न कस्य श्रवणमानसमनुरञ्जयति ? संस्कृतभाषा हि भारतवर्षस्य प्राणमयी वाङ्मूर्तिरानन्दरसोज्ज्वला शाश्वती मर्मवाणी । अध्यात्मतत्त्वमयी, वेदोपनिषत्-पुराणादिशास्त्रेषु निहिता सुललितकथासाहित्य-नीतिशास्त्रविमण्डिता चेयं युगे युगे भारतवर्षस्य मर्मवाणीं प्रचारयति विश्वभुवनेषु । किञ्च, अतीतकीर्तिमुखरा चेतःप्रबोधिनी भारतकृष्टिप्रचारिणी चेयं सुरभाषा अद्यापि ललितरसभूयिष्ठमजस्र-नवनव-साहित्यसम्भारं सम्भाव्य सारस्वतानामवदानेन विश्वचित्तं विनोदयति ।

माधविका—अहो, यथार्थमुच्यते देवेन। सुधामयी सुरभारती स्वमहिम्ना चिरं विजयते। किञ्च, संस्कृतविरहितं भारतवर्षं न कदापि सम्भवपरं न वा कथमपि एतच्चिन्तनीयम्। यतः, आसमुद्रहिमाचलान्तेऽस्मिन् उपमहादेशे भारतवासिनां मर्मग्रन्थिस्वरूपिणीयं पुण्यभाषा गृहिनिलय-देवायतन-तीर्थतपोवनेषु तथा विद्वज्जनसम्मेलनेषु च दैनन्दिनोपासन-यज्ञकर्म-देवार्चन-तर्पण-पितृपूजाप्रसङ्गेन स्वाध्याय-पुण्यमन्त्रस्तुतिवन्दनाद्यर्थं सार-स्वतविनोदनार्थं च व्यवह्रियते। गृहमेधिभिस्तथा वानप्रस्थसाधन-परैस्तपोधन-योगि-महर्षिभिश्चेयं नित्यं परिषेव्यते। अतः कथमस्मत्सुचिर-जीवनरसभूताम् अमृतात्मिकाममरभारतीं वयं परिहरामः?

सूत्रधारः—साधु भद्रे। सम्यगभिहितं भवत्या। नवनवसर्जनमयी सुमङ्गलेयं मृत्युञ्जयिनी देवभाषा आकल्पान्तमात्ममहिम्ना विराजिष्यते इत्यत्र कः सन्देहः? अतोऽहममरभारतीपदारविन्दसेवनव्रतिन एतन्नाट्यकारस्योक्ति-मत्र समुद्धृत्य वदामि—

पेपीयन्तां सुधां सर्वे संस्कृतसागरोद्भवाम्।
मानसे रमतां नित्यं भारते सुरभारती॥

माधविका—अहो, धन्या वयं सुरभारतीमहिमानुशीलनेन। तद् देव, अचिरेणाहं नेपथ्यं गत्वा माननीयान् पारिपार्श्विकादीन् भवन्नियोगं विज्ञापयामि। जयतु सुरभारती। [ प्रस्थानम् ]

सूत्रधारः ( उपसृत्य )—अधुनाहं निश्चिन्तो जातः। तदहमपि कृत्यार्थमुद्-युक्तो भवामि। तेन चादौ वन्दे श्रीभगवन्तम्।

(कृताञ्जलिः) आनन्दमूर्तिपरमो यमुनाविहारी
विश्वम्भरस्तनुभृतां हृदिपद्मचारी।
गोविन्दमाधवहरिर्दुरितापहारी
कृष्णश्चिरं विजयतां कलवेणुधारी॥

[उद्देशतः प्रणम्य प्रस्थानम् ]

**—इति प्रस्तावना—**

## प्रथमाङ्के—प्रथमदृश्यम्—कुरुक्षेत्रप्रान्तभूमिः

श्रीकृष्णः—( स्वगतम् ) धर्म्मक्षेत्रं कुरुक्षेत्रम्। वीराणां रणभूमिर्मैव च लीलाक्षेत्रमिदम्। ( अर्ज्जुनं प्रति ) पार्थ, अत्र समराङ्गनशायितै-र्भारतवीरैः स्वर्गः सम्प्राप्तः, युष्माभिश्च लब्धं विजयमाल्यम्।

अर्ज्जुनः—यादव, स्वजनवियोगाद्दहतस्य ममेदं विजयगौरवं न खलु सुखाय भवति। छिन्नवृन्तानामिव कुसुमदलानामस्मत्प्रतिष्ठा न हि शान्ति-सौख्यमावहति।

श्रीकृष्णः—कथमयं निर्वेदो वीर? क्षत्रियस्तु न खिद्यति। न हि समुचितोऽयं विषादः?

अर्ज्जुनः—केशव, क्व नु तेऽस्मदात्मीया रणदुर्म्मदा महावीरा येषां सान्निध्यमस्मच्चिरमीप्सितम्! ते च मे आनन्दायिनो ज्ञातय आचार्या बान्धवाश्च न खलु साम्प्रतं जीवन्ति।

श्रीकृष्णः—मैवं धनञ्जय! धर्म्मयुद्धं क्षत्रियाणां श्रेयसे गौरवाय च। अतो वीराणां कृतेऽनुशोचनं न हि वीरचूडामणेस्तव युज्यते।

अर्ज्जुनः—( स्वगतमूर्द्ध्वदेशमुपलक्ष्य ) नमोऽस्तु पूर्व्ववीरेभ्यः। ( प्रकाशम् ) किन्तु यदुपते, ते हि अस्माकमाबाल्यक्रीडासङ्गिनो मृगयायां विद्याभ्य-सने च प्रियसहचराः पश्चात्तु राज्यलोभेन प्रतिपक्षभूता अधुना चिर-निद्रिता भवन्ति। ( सोच्छ्वासम् ) अधुना तानश्रुनीरैस्तर्पयामि।

श्रीकृष्णः—कौन्तेय, संसाररङ्गमध्ये कर्म्मसूत्रान्नराणामागमनिर्गमाः संयोग-वियोगाश्च। धीरस्तेन न मुह्यति।

अर्ज्जुनः—सखे, कथं विस्मरामि पितृ-पितामहगतं सम्पर्कम्? तद्धि आत्मिकं बन्धनं प्राणेषु प्रवाहयति सञ्जीवनीं चेतनाधाराम्। सैव स्मृतिर्विह्वलयति मानसम्।

श्रीकृष्णः—वीर, विचित्रमिदं संसारनाट्यम्। नटानामिवात्र मनुष्यैरविचल-

चेतसा अभिनेतव्यम्। क्षत्रकुलजातोऽसि। तत् स्वधर्म्मपालन-साफल्यात् कुरुवीराणां कीर्त्तिस्त्वया रक्षिता।

अर्ज्जुनः—( स्वगतम् ) इदं हि कुरुक्षेत्रमस्मत्पितॄणां कर्म्मभूमिस्तपः-क्षेत्रञ्च। अधुना श्मशानभूमिश्चैतत्।

( श्रीकृष्णं प्रति ) केशव, वीरकीर्त्तिविमण्डितेयं पुण्यभूमिरधुना अन्तः-शोणितप्रवाहव्याकुला धूलिपांशुलविशालप्रान्तरा अतीतां संहारलीलां स्मारयति। अतो विह्वलोऽस्मि शोकेन!

श्रीकृष्णः—क्लैव्यं मास्म गमः पार्थ। स्मर्य्यतां गीतायां मे यदुक्तम्। कथं विस्मृतवानसि तत्त्वम्?

अर्ज्जुनः—केशव, कथं विस्मरामि वृत्तान्तम्? अद्यापि ध्वनतीव श्रुतिपटे प्रलयङ्करः स दुन्दुभिनादः! शोकार्त्तानां वीरनारीणा करुणविलाप-ध्वनिरद्यापि धिक्करोति मम विजयगर्व्वम्! ( मौनी तिष्ठति )

[ प्रविशति युधिष्ठिरः ]

प्रविशन् युधिष्ठिरः—सा हि सङ्गीतायते श्रुतिमूलेऽभयमङ्गलवाणी यतो धर्म्म-स्ततो जय इति। ( अर्ज्जुनं विलोक्य श्रीकृष्णं प्रति ) केशव, तीर्थीभूतं कुरुक्षेत्रं वीराणामात्मदानेन। अत्र हि अस्मत्पूर्व्वजाताः कुरुप्रवीरा-स्तपसा वीरधर्मपालनेन च गौरवं गताः।

श्रीकृष्णः—साधु साधु, धन्योऽसि धीमन् पूर्व्वकीर्त्तिस्मरणेन। वयमपि युष्माकं सम्पर्केण धन्यतां गताः।

युधिष्ठिरः—अतोऽस्मत्पितॄणां धर्म्मभूमिं कर्म्मभूमिञ्चेमां पुण्यभूमिं प्रणमामः। ( उद्देशेन प्रणमति )

श्रीकृष्णः—विजयतां धर्म्मपाल। धर्म्मव्रतं त्वामभिनन्दामि।

युधिष्ठिरः—( अर्ज्जुनं निरीक्ष्य ) किन्तु यदुपते, कथमिह धनञ्जयो विमनाय-मानस्तिष्ठति? ( अर्ज्जुनमुपगम्य ) भ्रातः, किं ते विषादकारणम्?

श्रीकृष्णः—धर्म्मनन्दन, शून्यकुरुक्षेत्रप्रान्तरदर्शनेन समुत्थितो धनञ्जयस्य

शोकावेगः। अतीतः स्वजनवियोगोऽस्य स्मृतिपथमुद्गम्य विह्वलयति गाण्डीविनम्।

युधिष्ठिरः—( अर्ज्जुनं प्रति ) अलं विषादेन। वीर! उत्तिष्ठ, परिहर मोहम्। न हि शोभते संग्रामविजयिनस्ते चित्तचाञ्चल्यम्। ( कराभ्यामुत्तोल्य शिरश्चुम्बति )

अर्ज्जुनः—( कृताञ्जलिः ) आर्य्य, क्षन्तव्योऽहं दासः। अनुगृहीतोऽस्मि स्नेहेन। ( प्रणमति )

युधिष्ठिरः—चिरं जीव वत्स! वर्द्धस्व गौरवेण। ( श्रीकृष्णं प्रति ) केशव; एष मे प्रियोऽनुजस्तवैव चिरप्रणयपात्रं सर्व्वथा त्वदनुशासने वर्त्तते।

श्रीकृष्णः—( सहर्षमर्ज्जुनं करेण धृत्वा ) साधु साधु वीर! कौन्तेय, जानीहि न मे भक्तः प्रणश्यति।

अर्ज्जुनः—( कृताञ्जलिः ) मधुसूदन, यथा नियुक्तोऽस्मि तथा करोमि। अतो वन्दे भवन्तम्। ( प्रणमति )

श्रीकृष्णः—सखे, विजयस्व गौरवेण।

युधिष्ठिरः—( श्रीकृष्णं प्रति ) यादव, परिसमाप्तम् अस्माकं कुलधर्म्मपालनं तव प्रसादेन। लब्धञ्च राज्यं परिपाल्यते धर्म्मेण। किन्तु, किमनेनाहं करोमि?

श्रीकृष्णः—कथम्?

युधिष्ठिरः—(सावेगम्) द्रुतं महासिन्धुतटमभिधावति मे जीवनरथः!

श्रीकृष्णः—धर्म्मनन्दन, जातं मया तव चित्तवैराग्यम्। किञ्च, प्राप्ते वयसि अभिमन्युनन्दनेन, तस्मै राज्यभारं समर्प्य करिष्यसि मोक्षसाधनं श्रेयोलाभाय।

युधिष्ठिरः—जयतु यादवेश्वरः। एवं विजयते चिरं भवान् अस्माकं शुभानुध्यानेन।

अर्ज्जुनः—जय केशव, जय केशव।

श्रीकृष्णः—( युधिष्ठिरार्ज्जुनौ समुद्दिश्य ) मयापि समाप्तं धर्मराज्यसंस्थापनम्। मतिमन्तः! आह्वयन्ति मां यादवाः। पिता च सोत्कण्ठो मां प्रतीक्षते। तद् इच्छाम्यहं स्वपुरप्रतिगमनाय।

युधिष्ठिरार्ज्जुनौ—( सोच्छ्वासम् ) यादव, यादव!

श्रीकृष्णः—वर्द्धन्तां सखायः। ( अर्ज्जुनं प्रति ) देदीप्यस्व पार्थ! किं पुनर्वक्ष्यामि? भद्रमस्तु वः।

( युधिष्ठिरं प्रति ) कौन्तेय, अभिभूतोऽस्मि। ( उच्छ्वसिति ) आबद्धोऽस्मि पाण्डवानां प्रणयबन्धनेन।

अर्ज्जुनः—केशव, दीना वयं त्वया विरहिताः कथं जीवामः?

श्रीकृष्णः—अलं विषादेन प्रिय! एषोऽहं युष्माकं स्नेहबन्धनेन चिरसंबद्ध-स्तिष्ठामि। तद् विजयध्वं प्रणयमाहात्म्येन।

युधिष्ठिरः—धर्म्मो वर्द्धताम्। जयोऽस्तु जनार्द्दनस्य।

श्रीकृष्णः—भद्रमस्तु प्रणयास्पदानाम्। धर्म्मो युष्मान् रक्षतु।

[ प्रस्थानम् ]

अर्ज्जुनः—असहनीयः कृष्णविरहः! अहो, दुर्विषहो विच्छेदः!

युधिष्ठिरः—धैर्य्यमुपेहि प्रिय! ऐषोऽस्माकं प्रियसखो न कदापि अस्मांस्त्यजति। तदेहि! जननी किलास्मान् प्रतीक्षते। [ प्रस्थानम् ]

अर्ज्जुनः—वासुदेव, वासुदेव! [ प्रस्थानम् ]

[ प्रविशति सहचरीपरिवृता पुरलक्ष्मीः, गायन्ति सर्व्वाः। ]

गानम्

रणभारपीडिता जर्ज्जरमेदिनी
करोति रक्तस्रोतःस्नानम्।
सुषमाहीना प्रकृतिर्दीना
मुञ्चति तप्तमश्रुजातम्॥

आकुलविषादः स्वनति पवने
　　ध्वनति विलापो हृदये भुवने
कुसुममालिनि जय पुरवासिनि
　　पृथ्वि जननि कुरु उल्लासम् ।
मा कुरु करुणे मरणविलासम् ,
　　विकाशय धरणि शान्तिहासम् ॥

इति प्रथमाङ्के प्रथमं दृश्यम् ।

---

## द्वितीयं दृश्यम्—हस्तिनापुरप्रासादः

धृतराष्ट्रः—( स्वगतम् ) विषमोऽपत्यस्नेहः । स हि सर्व्वानर्थकरो मम शोकाय भवति । हा पुत्र दुर्योधन, हा हा अभिमानधनाः शतपुत्राः ! अहो, एकोऽपि न जीवति । स्नेहपालिताः पापकर्म्मसु समर्थिताश्च ते मे तनयाः सुखदुःखान्यतिक्रम्य चिराय निद्रायन्ते । अहो, शल्यमिव उत्पाटयति हृदयं मे पुत्रशोकः ।

[ प्रविशति गान्धारी ]

प्रविश्य गान्धारी—कुरुनाथ !

धृतराष्ट्रः—केयम् ? गान्धारी ? एह्येहि शतपुत्रजननि !

गान्धारी—न हि युज्यते नाथ, एतदभिधानम् अभाजनेषु मद्विधेषु ।

धृतराष्ट्रः—राजनन्दिनि, धारय माम् । नाहं क्षमोऽस्मि प्राणधारणे ।

गान्धारी—राजन् , शतपुत्रगौरवेण प्राक् सौभाग्यवत्यपि साम्प्रतमहं दीनहीना शोचनीया च । वृथाहं जीवितं धारयामि ।

धृतराष्ट्रः—देवि !

गान्धारी—नाहं मानमर्हामि । एषा ललाटलिपिर्मामनाथां करोति ।

धृतराष्ट्रः—( स्वगतम् ) अहो, नियति-विधानम् । एषा दावदग्धा वल्लरीव

परिक्लिश्यते कुरुराजेश्वरो दैवविधानेन। [ गान्धारीं प्रति ] देवि, निर्वापय हृदयानलमश्रुप्रवाहेण। को हि दैवं लङ्घितुं प्रभवति ?

गान्धारी—वृथैव नरनाथ विधिरत्र निन्द्यते। आत्मकृतं कर्म्मफलं को नु पुनः खण्डयेत् ?

धृतराष्ट्रः—हा कर्म्मफलम्! अवश्यमेव भोक्तव्यमात्मनः कर्म्मणः फलम्। तेन धिङ्माम्। अविमृश्यकारिता हि मम भाग्यहीनतामानयति। किन्तु गान्धारि, कथं विडम्बयति त्वां तवापि भाग्यम् ?

गान्धारी—हा नारीभाग्यम्! नयनाभ्यां प्रवहति मे अश्रुनिर्झरिणी, स्फुटति वक्षःस्थलम्। तथापि न प्रशाम्यति हृदयज्वाला।

धृतराष्ट्रः—अहो दहति माम्, दहति मां तापः। देवि, कथ्यताम्, अस्ति कोऽपि निस्तारोपायः ?

गान्धारी—देव, निस्तारोऽस्ति केवलमधुना देहपातेन। तन्महाराज, किमतो राजहर्म्यवासविलासेन ?

धृतराष्ट्रः—साधु साधु देवि। सम्यगभिहितं त्वया हितसाधनाय। तद्, गन्तव्यं तपसे वनमिति महामतेर्विदुरस्य हितवचनं स्मरामि।

[ प्रविशति युधिष्ठिरः ]

युधिष्ठिरः—जयतु कौरवेश्वरः।

धृतराष्ट्रः—आः क एष मम जयघोषमुदीरयति ? भो नाहं राज्येश्वरः।

युधिष्ठिरः—तात, कुरुराज्येश्वर, एषोऽहं ज्येष्ठपाण्डवो भवद्दासो भवन्तमभिवादये।

धृतराष्ट्रः—वर्द्धस्व धर्म्मनन्दन। तात पाण्डव, श्रूयताम्।

युधिष्ठिरः—आदिश्यतां चिरदासः।

धृतराष्ट्रः—कथयामि धीमन्। नहि नहि। एषा गान्धारनन्दिनी त्वां कथयिष्यति। ( गान्धारीं प्रति ) नृपनन्दिनि, कथ्यतामभिलाषः पाण्डवाय।

युधिष्ठिरः—( गान्धारीं प्रति ) नमस्तेऽम्ब। ( नमति ) देवि, कथ्यतां कृपया किं ते अनुशासनं परिजनेषु ?

गान्धारी—वत्स, एष वानप्रस्थं कामयते शोकव्यथितो नरपतिः। अहमपि तदनुगमने समुत्सुका भवामि।

युधिष्ठिरः—देवि, कथमसहायाः पाण्डवाः परित्यज्यन्ते दुःखाय ? एते वयं भवतीनां चिरस्नेहार्थिनः सेवका गुरुपादसेवनाय तिष्ठामः। परिजना वयम्। तद् युष्मच्चरणार्च्चनेषु को हि व्याघातः सञ्जातः ?

गान्धारी—तात, न खलु विच्युतिः काऽपि दृष्टा भवतां गुरुजनविषयेषु। परं, सुखेन तिष्ठामो युष्माभिः परिसेविताः। किन्तु, कालोऽस्माकं परिपूर्णः। तद् धर्म्मार्थं वानप्रस्थसाधनम् अभिलषामः।

धृतराष्ट्रः—वत्स, वार्द्धक्ये आरण्यव्रतमेव कुरूणां साधनीयम्। तत् कुलधर्म्म-साधने अस्माकमानुकूल्यं विधीयताम्।

युधिष्ठिरः—अहो, कुलधर्म्मः। देव, तथापि प्रसीद पुत्रकेषु।

धृतराष्ट्रः—स्वस्ति स्वस्ति।

इति प्रथमाङ्के द्वितीयं दृश्यम्।

---

## तृतीयं दृश्यम्—अन्तःपुरम्

द्रौपदी—मातः, सुसम्पन्नमिदानीं माल्यार्घ्यरचनम्। तत् स्वाच्छन्द्येन विधीयतां पुण्यार्च्चनं सर्व्वेषां कल्याणाय।

कुन्ती—साधु द्रुपदनन्दिनि। एवं गतासि गृहलक्ष्मीगौरवं नारी-धर्म्म-पालनेन।

द्रौपदी—देवि, धन्यास्मि तव स्नेहाशीर्लाभेन। देवा मे प्रसीदन्तु यथा कुलधर्म्मं पालयामि।

[ प्रविशति गान्धारी ]

प्रविश्य गान्धारी—( कुन्तीं प्रति ) भगिनि, मोदस्व सुचिरं सौभाग्यसम्पदो वत्सायाः पुण्यशीलेन। ( द्रौपदीं निर्दिशति )

कुन्ती—आगच्छ महादेवि। एषाऽस्मत्कुलवधूरिन्द्राणीकल्पा मनोज्ञचरिताशेषगुणशालिनी सर्व्वथास्माकं सौख्यं वर्द्धयति। (द्रौपदीं प्रति) वत्से, वन्दस्व महादेवीम्।

[ द्रौपदी उभयोः पादवन्दनां करोति ]

गान्धारी—(द्रौपदीं प्रति) जाते, मोदस्व सुखसम्पदा। वर्द्धस्व वत्सैः सम्भाविता पुण्यशीलेन।

कुन्ती—तदहमपि देवि, वत्सानां कृते भवत्या आशिषं प्रार्थये।

गान्धारी—त्वमेव जानासि प्रिये, आ बाल्यात् पाण्डवा मे चिरस्नेहभाजनमानन्दस्थानञ्च प्राणानाम्। तत् सुचिरं कल्याणं कामये वत्सानाम्।

कुन्ती—धन्यास्मि। तद् देवि, आगम्यतामस्माभिः सार्द्धं भद्रकालीमन्दिरं मङ्गलार्च्चनाय। (द्रौपदीं प्रति) वत्से, अनुसर आवाम्।

गान्धारी—तथास्तु। (सर्व्वा मन्दिरमुपतिष्ठन्ते। कुन्ती देवीमर्च्चयति)

कुन्ती—(कृताञ्जलिः पुष्पाञ्जलिं निवेद्य प्रार्थयते)

ॐ भद्रकालि महामाये सर्व्वमङ्गलदायिनि।
कुरु कुलेश्वरि देवि, नमस्ते रक्ष नः सुतान्॥ (प्रणमति)

[ द्रौपदी गान्धारी च नमतः ]

कुन्ती—(द्रौपदीं प्रति) वत्से, सुसम्पन्नं भगवत्या अर्च्चनम्। तदधुनाहं कुललक्ष्मीप्रतिमायां त्वयि नारीधर्म्मोचितं गार्हस्थ्यभारं समर्प्य वानप्रस्थसाधनार्थमुद्युक्ता भवामि।

द्रौपदी—अम्ब, कथमशरणांस्तनयान् परिहरसि? कोनु मां त्वया विरहितां स्नेहमाङ्गल्येन परिपालयिष्यति?

कुन्ती—जाते, मा दुःखं गच्छ। गतासि चिरं गृहलक्ष्मीगौरवं स्वकीयस्नेहमधुर-पुण्यशीलेन। तेन निःशङ्कं देदीप्यस्व वत्सैर्धर्म्मपालनेन।

द्रौपदी—(गान्धारीं प्रति) महादेवि, मूर्त्तमङ्गलव्रताऽत्रभवती निवारयतु पाण्डवजननीमारण्यव्रतसङ्कल्पादस्माकं कल्याणाय।

गान्धारी—स्वस्ति, कल्याणि! एषाहं कथयामि भगिनीम्। (कुन्तीं प्रति)

भगिनि, विरम वानप्रस्थसाधनात्। अत्रैवावस्थाय रक्ष तनयानभय-माङ्गल्यदानेन।

कुन्ती—देवि, ममापि पूर्णतामेति कालः। तत् तपोवने भवत्याः पुण्य-सङ्गेन श्रेयःसाधनं मम ईप्सितम्। (द्रौपदीं प्रति) मास्तु दुःखं भद्रे! वार्द्धक्ये आरण्यसाधनमेव कुरूणां कुलव्रतम्। तत्, कुल-धर्म्मपालनेऽस्माकं सहाया भव। नूनं तपोवनेऽपि युष्माकं कल्याण-साधनमेव विधातव्यं मया स्वधर्म्मपालनेन।

द्रौपदी—मातर्वन्दे युष्मच्चरणयुगलम्। (वन्दते) पालयामि ते स्नेहानु-शासनम्। किन्तु भवत्या विच्छेदचिन्ता मां व्याकुलयति!

कुन्ती—(पृष्ठे करं सञ्चाल्य) अलं दुःखेन भद्रे! निःशङ्का भव। देवा वो रक्षिष्यन्ति। (सस्नेहमाद्रियते)

गान्धारी—जयति देवी। (द्रौपदीं प्रति) वर्द्धस्व कल्याणि धर्म्मपालनेन।

द्रौपदी—अम्ब, अम्ब!

कुन्ती—(द्रौपदीं प्रति) शिवमस्तु। सुखिनी भव। एहि, प्रणमामः कुरुकुलेश्वरीं देवीं भद्रकालीं विघ्ननाशाय।

[ सर्व्वा युक्तकराः प्रणमन्ति ]

ॐ सर्व्वमङ्गलमङ्गल्ये शिवे सर्व्वार्थसाधिके।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते॥

(पटीक्षेपः)

इति प्रथमोऽङ्कः (क्रमशः)

# तेन त्यक्तेन भुञ्जीथाः

[ निबन्धकः—**श्रीपवित्रकुमारभट्टाचार्यः** ]

आधुनिकपाश्चात्यविज्ञानेन मनुष्याणां बाह्यसम्पदेव वर्द्धिता, मनुष्यत्वं तु एतेन नोपकृतम्। क्रमशो मनुष्या बाह्यसम्पद्भिर्नितरामाकृष्यमाणा अन्तर्मुखित्वं हापयित्वा बहिर्मुखिनो भवन्ति। जडविज्ञानं मानुषेभ्यो यां बाह्यसम्पदं ददाति तया इन्द्रियाणि परितृप्यन्ते, इन्द्रियपरितृप्तिमेव च जीवनस्य परमां सार्थकतां मत्वा नरा इन्द्रियोपभोगसाधनायां निमज्जन्ति। इन्द्रियमोदनार्थं रूपरसगन्धस्पर्शशब्दादिभोगोपकरणानि आवश्यकानि। कतिदिवसान् व्यवहारादनन्तरमेव उपकरणविशेषस्य वैचित्र्यं मनोहारित्वं च नश्यति, इन्द्रियाण्यपि न तृप्यन्ति तेन वस्तुना। तदा चापरिहार्यं भवति भिन्नतरं भोग्यवस्तु इन्द्रियपरितृप्तये। एवंप्रकारेण एकस्यैव मनुष्यस्य इन्द्रियपरितृप्त्यर्थमसंख्यप्रकारभोगसाधनैः प्रयोजनं भवति। पार्थिववस्तुनः परिमाणं तु सीमितम्। विज्ञानं बाह्यसम्पदो यथा यथैव विकाशं साधयतु, न खलु कदापि तत् पृथिव्याः प्रत्येकस्य जनस्य आवश्यकं भोग्यवस्तु उपकल्पयितुं शक्ष्यति, यत इन्द्रियाणां प्रयोजनस्य सीमा न वर्तते। भोगोपकरणानां ससीमत्वात् सर्वे एव नराः कदापि समानं भोगेच्छायाः परितृप्तिसाधनं कर्त्तुं न पारयन्ति। मानवेषु ये खलु शक्तिमन्तस्ते बाहुबलेन दुर्बलानां सम्पदं निष्कृष्य स्वयमेव भुञ्जते। आधुनिकजगति धनमेव बलम्। धनरूपबलेन शक्तिमन्तो धनिनः अधिकतरं परिभोगं काङ्क्षन्तः दरिद्राणामपि यथासर्वस्वं शोषयन्ति। एवं प्रकारेण बाह्यसम्पदं केन्द्रीकृत्य धनिदरिद्रयोर्विरोधः सञ्जायते, विभिन्नदेशानां मध्ये समरानलोऽपि प्रज्वलति कर्हिचित्। अतो बाह्यसम्पदेव सकलविरोधस्य सर्वाया अशान्तेश्च कारणम्।

वर्तमानजगति शान्तेरेव महत्तमः अभावः अनुभूयते। भोगोन्मत्ततैव शान्तेः पथि प्रबलतमा बाधा। धनेन वस्तुनः क्रयक्षमता जायते। धनं हि

उत्तमं भोगसाधनम्। अतो भोगप्रियाणां जातीनां जनानां च मध्ये धननिमित्तस्य दण्डादण्ड्यादेरपि अवसानं न परिलक्ष्यते। पुनरपि गुरुतरा समस्या एषा यद् वर्तमाने वैश्ययुगे धनिनो न केवलं भोगाधिकारिणः परन्तु समाजे ते एव मर्यादाभाजनानि भवन्ति। सम्प्रति विद्याविनयचरित्रादीना मूल्यमकिञ्चित्कर जातम्। असति धनसामर्थ्ये सर्वे एव गुणा लोकचक्षुषि अर्थहीना भवन्ति। प्रत्युत केवलेन अर्थप्राचुर्य्येणैव विभिन्नदोषाः प्रतिविधीयन्ते। तस्मादाधुनिकजगतस्तरुणानाम् एकमेव लक्ष्यम्—आधिक्येनार्थोपार्जनं सम्यग्भोगश्चेति। अनेके एव जनाः साधुना उपायेन पर्याप्तम् अर्थमुपार्जितुमशक्ताः सन्तः असाधुपथं परिगृह्णन्ति। छात्रा अपि गुरुजनानामेव नैतिकमधःपतनं दृष्ट्वा स्वयमपि आदर्शच्युता भवन्ति, नीतिगर्हितेनोपायेन चाधिकमर्थोपार्जनं कामयन्ते। ये खलु विद्यार्थिनः स्वभावेनादर्शनिष्ठास्तेऽपि यदा उपलभन्ते यत् तेषां श्रमार्जिता विद्या सुखावहजीवनधारणोपयोगिनः अर्थस्योपार्जनाय असमर्था तदा प्रबलेन नैराश्येन ग्रस्तास्तेऽपि सम्पूर्णतया नीतिच्युता विस्मृतात्मानश्च सन्त आत्मघातिकर्मणि लिप्ता भवन्ति। वैश्ययुगे धनहीनानां जीवने प्रचण्डं नैराश्यमेव सर्वोन्नतेर्मूलं हन्ति।

अतो दृश्यते हि साम्प्रतिकजगतः सर्वा एवाशान्तयो बाह्यसम्पदं केन्द्रीकृत्यैव। ये खल्वधर्मेण ऐश्वर्यं वर्द्धयन्ति ते अवगच्छेयुः यदधर्म्मेण सामयिके सुखे लब्धे अपि परिणामस्त्वस्यातीव भयावहः। महाभारतेऽपि उद्घोषितम्—

> अधर्मेणैधते तावत्ततो भद्राणि पश्यति।
> ततः सपत्नान् जयति समूलस्तु विनश्यति॥ इति।

महाभारतस्य दुर्योधनादीना रामायणस्य च रावणादीनां भयावहः परिणाम एवात्र विषये प्रमाणम्। इन्द्रियोपभोगसर्वस्वा धनोन्मत्ताश्च ते प्रथमतो बहूनां जनानामैहिकं सुखं नाशयित्वा स्वल्पमात्रं सुखमनुभूय दुष्कर्मफलस्वरूपं समूलं विनाशं वृतवन्तः।

धार्मिकं तु धर्म एव रक्षति। धार्मिको जनः अधार्मिकस्य द्वेषभाजनं

भूत्वापि कदापि न सर्वथा विनश्यति। महैश्वर्यशाली प्रभूतभोगाधिकारी च धर्मभ्रष्टो जनः सर्वदैवाधिकभोगैश्वर्यतृष्णाया नितरां पीडितः सन् मनुष्याणां विभिन्नसद्गुणावलीमर्जितुमवकाशमपि न लभते, अस्थिरचित्तताया हेतोः शान्तेरास्वादनमपि लब्धुं न शक्नोति। धार्मिकस्तु जनः स्वल्पातिस्वल्पे ऐश्वर्ये भोगे च अवतिष्ठमानो मानसो शान्तिं लब्ध्वा मनुष्यगुणाना विकाशं साधयति। वस्तुतो धर्म एव मनुष्यजीवने श्रेष्ठा सम्पत्। उच्यते च—

आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम्।

धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः॥ इति।

ननु कास्य संज्ञा धर्मस्य? तत्रोच्यते—यः समाजं सुष्ठु धारयति स एव धर्मः। असंयमो भोगोन्मादना च समाजदेहस्य सर्वस्या अशान्तेर्मूल-कारणम्। अत एतद्द्वयमेव सर्वाधिकः अधर्मः। श्रेष्ठो धर्मस्तावत् संयम-स्त्यागश्चेति।

प्राचीनभारते धर्मेण समाजः सुरक्षित आसीत्। अतस्त्यागः संयमश्च भारतवर्षीयाणां परम आदर्श आसीत्। त्यागेनैव परमः पुरुषार्थो लभ्यते। अनेनैव हेतुना उपनिषदि सर्वत्रैव त्यागस्य महिमा कीर्तितः। मनुष्यः सर्वदा कायमनोवाक्यैः यदानन्दं भजते शान्ते एव चित्ते तस्याविर्भावः। प्रागेवोक्तं यद् भोगोल्लासेन शान्तिर्विनाश्यते। शान्तेः पन्था रचितस्त्यागेन, न तु भोगेन। इयमेव परमा वाणी उपदिष्टा परममङ्गलमयीभिरुपनिषद्भिः "तेन त्यक्तेन भुञ्जीथाः" इति। अर्थात् परमार्थलाभाय त्यागेनैवात्मानं पालयेथाः। त्याग एव परमपुरुषार्थसाधनम्। अतस्त्याग एव केवलो वरणीयः।

ये खलु भोगकामिनस्तेषां कृतेऽपि मन्त्रस्यास्य अर्थान्तरं वर्तते। भोगश्चेत् काङ्क्षितस्तर्हि आदौ त्यागोपकरणेन आत्मानं प्रसाधयेत्। त्याग-साधनेन सुरक्षित आत्मा यदा भोगाय समर्थो भवेत् तदैव भोगः कार्यः, न ततः प्राक्। त्यागरहितो भोगः असंयमसाधको मनुष्यत्वनाशकः अतीवामङ्गलकारी च। अतएव तेन त्यक्तेन त्यागसाधनेन आत्मोत्कर्षं विधाय भुञ्जीथाः भोगं कुर्य्याः इत्युपनिषदो मतम्। अर्थस्यास्य तात्पर्यमिदं

यत् त्यागसिद्धात्मा जनो भोगेऽपि शान्तचित्तो वर्तते, भोगोऽपि तस्य अमङ्गलाय न भवति। अतो 'भोगाधिकारित्वलाभायापि आदौ त्यागः शिक्षणीयः।

युगे युगे मानवहितैषिण इमामेव कल्याणमयीं वाणीं तारस्वरेण उद्घोषयन् "त्यागद्वारेण आनन्दं लभस्व"। अनवरतं भोगलिप्तः सन् आत्मानं विस्मृत्य आनन्दमार्गच्युतो मा भव" इति। यदैव मनुष्यजात्या एष उपदेशो गृहीत आसीत् तदैव सा यथार्थामुन्नतिमलभत। किन्तु इदानीं त्यागादर्शच्युता मा वा मनुष्यत्वेनापि रहिता जाताः। अतः क्व शान्तिरागमिष्यति ?

सम्प्रति पृथिव्यामेकेन देशेन सह अपरदेशस्य यो विवादः, तस्माच्च मृत्योः ताण्डवता, धनिभिरसाधुना उपायेन धनशोषणं, वञ्चितानाञ्च दरिद्राणां करुणं क्रन्दनं, नैराश्यमात्मविस्मृतिरित्यादिकस्य सर्वस्यैवाधेः प्रतिकारस्तु त्याग एव। प्रत्येकमेव देशश्चेत् आत्मनः सम्पदा तुष्टः स्यात्, इतरदेशादपि वाणिज्यादिना यथान्यायं धनानि भोग्यद्रव्याणि वा आहरेत्, धनिनश्चेत् दरिद्रशोषणमकृत्वा सदुपायेन धनमर्जितुं यतेरन्; संयमेन च सर्वे नराश्चेदात्मानं संस्कुर्य्युः तर्ह्येव पृथिव्यां शान्तिराविर्भविष्यति। भीषण-स्वार्थबुद्धौ अप्रशमितायां तु एषा अवस्था न सम्भवेत्। अतोऽधुना पृथिव्याः सर्वेषामेव मनुष्याणां त्यागसंयमनशिक्षा आवश्यकी। उपनिषदेव अस्यां शिक्षायां मुख्याऽऽचार्या। मन्त्रश्च तस्याः "तेन त्यक्तेन भुञ्जीथा." इति।

---

# दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम्

[ निबन्धकः—श्रीराजेन्द्रचन्द्र तर्कतीर्थः ]

जगत्यस्मिन् मानवजन्मैव जन्मसु मध्ये श्रेष्ठतमम्। स्वस्वकर्म्मानुसारेण जीवनं खलु लभन्ते देहिनः। देहस्तावद्योनिजोऽयोनिजश्चेति द्विविधः। तत्र योनिजो जरायुजाण्डजभेदेनापि द्विविधः। अयोनिजश्च स्वेदजोद्भिज्जभेदेन द्विविधः। धृष्टद्युम्नद्रोणादीनां तथा नारकिणां देहोऽप्ययोनिज एव, तेषामपि देहः कर्म्मानुसारीति अवश्यमभ्युपेयम्, अन्यथा देहयोगासम्भव एव, अदृष्टहेतुकमेव जन्मेत्यभिहितं न्यायसूत्रकारैः, तथाहि तत्सूत्रम्—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति। तदर्थश्च दुःखादीनां मध्ये यदुत्तरोत्तरं तेषामपाये तदनन्तरस्य तत्सन्निहितस्य पूर्व्वपूर्व्वस्यापायादपवर्गः। एवञ्च तत्त्वज्ञानेन विरोधितयापहते मिथ्याज्ञाने, कारणाभावाच्च निवृत्ते रागद्वेषात्मके दोषे, तदभावाच्च प्रवृत्तेर्धर्म्माधर्म्मात्मिकाया अनुत्पत्तौ तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावे दुःखाभावादपवर्ग इति। तथाचादृष्टान्वयव्यतिरेकसिद्धमपूर्व्वदेहसंयोगरूपं जन्मेत्यायातमेव।

जीवानां देहप्रकारभेदश्च गणितो गरुड़पुराणवचनेन—

चतुरशीतिलक्षाणि चतुर्भेदाश्च जन्तवः।
अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जरायुजाः॥
एकविंशतिलक्षाणि ह्यण्डजाः परिकीर्त्तिताः।
स्वेदजाश्च तथैवोक्ता उद्भिज्जास्तत्प्रमाणतः॥
जरायुजाश्च तावन्तो मनुष्याद्याश्च जन्तवः।
सर्व्वेषामेव जन्तूनां मानुषत्वं सुदुर्लभम्॥ इति।

एतेन मनुष्यदेहेनैव देहसृष्टेः पूर्णता प्रतिपादिता। उक्तञ्च श्रीमद्भागवतैकादशस्कन्धे "तासां मे पौरुषी प्रिया" इति, श्रुतिश्च—"पुरुषत्वे चाविस्तरामात्मा,

स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानमिति"। तथा—"ताभ्यो गामानयत्ता अब्रुवन् नवै नोऽयमलमिति, ताभ्योऽश्वमानयत्ता अब्रुवन् नवै नोऽयमलमिति, ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं वतेति चेति"। उक्तञ्च श्रीमद्भागवते—

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते, मानुष्यमर्थदमनित्यमपीह धीरः।
तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्व्वतः स्यात्॥ इति।

अत्र टीका च श्रीधरस्वामिचरणानाम्—बहूनां सम्भवानां जन्मनामन्ते मानुष्यमनित्यमपि अर्थदं पुरुषार्थप्रापकं दैवाल्लब्ध्वा इदमनुमृत्यु अनु निरन्तरं मृत्यवो यस्य तद् यावन्न पतेत् तावदेव तूर्णं निःश्रेयसाय यतेत, विषयः खलु सर्व्वतः पश्वादियोनिष्वपि स्यादेवेति।

एतावता चैतदेव प्रतीतं यत् मनुष्यदेह एव मोक्षसाधनसमर्थः अन्येषाञ्च पश्वादीनां देहो न तत्साधनक्षम इति। प्रतिपादितश्चैतद् भगवता श्रीवेदव्यासेन "हृद्यपेक्षया तु मनुष्याधिकारित्वादि"ति सूत्रेण। (१।३।२५ वेदान्तसूत्रम्)

एवञ्चास्य मानवदेहस्य सार्थक्यं कथं सम्भवेदित्यत्रोपायः प्रदर्शितः परमकारुणिकेन श्रीभगवता एव श्रीमद्भागवतैकादशस्कन्धे—

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कश्चन॥" इति।

अनेन त्रयाणामेव निःश्रेयससाधनत्वं प्रतिपादितम्। अष्टाङ्गयोगोऽपि ज्ञानयोगान्तर्गत एव, अतो नोपायानां त्रिविधत्वहानिः। तन्मध्ये कर्मयोगो न साक्षान्निःश्रेयसहेतुः। "नास्त्यकृतः कृतेन", "प्लवा ह्येतेऽदृढा यज्ञरूपा", "यथा दृढैः कर्म्ममयैः क्रतुभिर्नाम नौमितैः। विद्यामान्वीक्षिकीं हित्वा तितीर्षन्ति भवार्णवमि"त्यादिश्रुतिभिः कर्म्मणः साक्षान्निःश्रेयससाधनत्वाभावप्रतिपादनात्। किन्तु "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेने"त्यादिश्रुत्या ज्ञानभक्त्योरुपकारकतया चित्तशुद्धिद्वारेण परम्परया एव मोक्षसाधनत्वं कर्म्मणः उपपद्यते। उक्तञ्च श्रीमधुसूदन-

सरस्वतीपादेन—"शास्त्रविहितो वर्णाश्रमधर्म्मरूपः कर्मयोगोऽन्तःकरणशुद्धि-साधनत्वेन तावत्पर्य्यन्तमनुष्ठेयः।

"तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥" इति श्रीभगवद्वचनात्।

"निर्व्विण्णचित्तो ब्राह्मण ब्रह्मिष्ठं गुरुमुपासीत' इत्यादिश्रुतेश्च। अन्तःकरण-शुद्धिसाधनत्वञ्चास्य "धर्म्मेण पापमपनुदति तस्माद्धर्म्मं परमं वदन्ति" येन केन यज्ञेन वा दर्व्वीहोमेनानुपहतमना एव भवती"त्यादि श्रुतिस्मृतिसिद्धमिति"।

एवञ्च ज्ञानं भक्तिश्चेति द्वयमेव साक्षान्निःश्रेयसहेतुरित्यायातम्। निर्भेद-ब्रह्मानुसन्धानरूपं ज्ञानं मोक्षसाधनमिति तु प्रसिद्धमेव। "भक्तिरेवैनं नयति, भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी"ति "विज्ञानघन आनन्दघनः सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" "भक्त्याहमेकया ग्राह्यः" इति।

किञ्च—यत्कर्म्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गमद्धाम कथञ्चिद् यदि वाञ्छति॥ इत्यादि

श्रुतिस्मृतिप्रमाणसिद्धो भक्तियोगोऽपि पुरुषार्थसाधनमिति। अन्यथाज्ञानं हित्वा स्वरूपेण व्यवस्थितिरेव मुक्तिः सैव पुरुषार्थः इति। धर्म्मार्थकाममोक्षाश्चत्वारः पुरुषार्था इति प्रसिद्धिस्तु लाङ्गलं जीवनमितिवत्साधने फलत्ववचनादौपचारि-कीति ज्ञेयम्। श्रीधरस्वामिचरणैः श्रीगीतार्थसंग्रहे भक्तियोगस्य पुरुषार्थसाधनत्वं सुस्पष्टं प्रतिपादितम्। उक्तं हि तैः श्रीगीतान्ते—

"भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः।
सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः॥

तथाहि "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" "भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्ज्जुन" इत्यादौ भगवद्भक्तर्मोक्षं प्रति साधनत्वश्रवणात् तदेकान्तभक्तिरेव तत्प्रसादोत्थज्ञानावान्तरव्यापारयुक्ता मोक्षहेतुरिति स्फुटं

प्रतीयते। ज्ञानस्य भक्त्यावान्तरव्यापाररूपत्वमेव, "तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते"। "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" इत्यादिवचनात्। न च ज्ञानमेव भक्तिरिति युक्तम्, "समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम्", "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इत्यादौ भेददर्शनात्। न चैवं सति "तमेव विदित्वाति-मृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति श्रुतिविरोधः शङ्कनीयः, भक्त्य-वान्तरव्यापाररूपत्वाज् ज्ञानस्य—न हि काष्ठैः पचतीत्युक्ते ज्वलनानामसाधनत्व-मुक्तं भवति। किञ्च "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" "देहान्ते देवः परं ब्रह्मतारकं व्याचष्टे" "यमेवैष वृणुते तेन लभ्य" इत्यादिश्रुतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति, तस्माद् भगवद्भक्तिरेव मोक्षहेतुरिति सिद्ध" मिति।

निर्व्विशेषवादिमते "एकमेवाद्वितीयम्" "तत्त्वमसी"त्यादिश्रुत्यन्यथानु-पपत्त्या सच्चिदानन्दरूपमद्वयमेव ब्रह्म परमार्थं सत्। रज्ज्वज्ञानं यथा विक्षेपशक्त्या तत्र रज्जौ सर्पादिकमुद्भावयति, रज्जुरूपाधिष्ठानज्ञानेन च यथा, ज्ञाननिवृत्त्या तत्-कार्य्यः सर्पोऽपि निवर्त्तते, तथा तत्रैवाद्वये ब्रह्मणि अविद्यारोपितो द्वैतप्रपञ्चोऽपि ब्रह्मज्ञानेन निवर्त्तते। अधिष्ठानतत्त्वसाक्षात्कारनिवर्त्तितत्वात् स्वकार्यभ्रान्ति-ज्ञानानाम्। ततश्च केवलाद्वयवादिमते अविद्यानिवृत्त्या जीवब्रह्मणोर्भेदापगमात् तयोरैक्यसिद्धौ भक्त्यानुष्ठानापेक्षा न वर्त्तते, अतस्तन्मते ज्ञानमेव मोक्षसाधन-मिति।

सविशेषब्रह्मवादिमते तु "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्याऽभिचाकशीति" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोकः" इत्यादिश्रुतिभिर्जीवेशयोर्भेदावगमात् तेषां मते परम-फलप्राप्त्युपायीभूता भक्तिरेवेति सिद्धान्तः।

अद्वयवादिमते च ब्रह्म निर्गुणं निःशक्तिकमिति, द्वैतवादिमते तु "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"त्यादिश्रुत्या ब्रह्मणि स्वाभाविकी

नित्यानन्तशक्तिरङ्गीकृतास्ति। अतस्तन्मते शक्तिमदेव परतत्त्वं भवति। किन्तु द्वैतवादिमते शक्तिस्वीकारेऽपि शक्तिमदाश्रिता एव शक्तिर्न स्वतन्त्रा, शक्तिशक्तिमतोश्चाभेदात् स्वरूपान्तर्भूतैव सेति स्वीकर्त्तव्यम्। एवञ्च न "एकमेवाद्वितीय"मित्यादिश्रुतिप्रतिपादिताद्वयत्वस्य हानिः। उक्तञ्च श्रीमता श्रीजीवगोस्वामिपादेन "वदन्ति यत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयमि"त्यादिश्रीमद्भागवतीयपद्यव्याख्यायाम्—"अद्वयत्वाच्चास्य स्वयंसिद्धतादृशातादृशतत्त्वान्तराभावात्, स्वशक्त्येकसहायत्वात् परमाश्रयं तं विना तासामसिद्धत्वाच्चे"ति। अत्र जीवलक्षणं तत्त्वान्तरं तादृशं चिद्रूपमपि न स्वयंसिद्धम्। एवं प्रकृत्यभिधेयं जडरूपं तत्त्वान्तरमतादृशमपि न स्वयंसिद्धमतः स्वयंसिद्धतादृशातादृशतत्त्वान्तराभावादद्वयत्वं सिद्धम्। एतन्मते जीवेशयोश्चिल्लक्षणाया जात्या एव अभेदः, स्वरूपतस्तु भेदो विद्यते एव। ततश्च स्वरूपाद अभिन्नत्वेन चिन्तयितुमशक्यत्वाद्भेदः, भिन्नत्वेन चिन्तयितुमशक्यत्वादभेदश्च प्रतीयते इति शक्तिशक्तिमतोर्भेदाभेदावेवाङ्गीकृतौ, तौ चाचिन्त्याविति अचिन्त्यभेदाभेदवाद एव श्रीजीवगोस्वामिचरणानां सम्मतः। एवञ्चैतन्मते भेदपराणामभेदपराणाञ्च श्रुतीनां न व्याहतिः।

अत्र च मते जीवेशयोर्भेदस्य नित्यत्वे सिद्धे भक्तिरपि नित्या एव भवति। अतो द्वैतवादिनये मोक्षदशायामपि भक्तिरनुवर्त्तते एव, प्रतिपादितञ्चैतत् सूत्रकृद्भिरपि "आप्रायणात् तत्रापि च दृष्ट"मिति वेदान्तसूत्रेण (४।१।१२ वेदान्तसूत्रम्)। प्रदर्शितञ्च श्रीधरस्वामिचरणैरपि श्रीनृसिंहतापनीभाष्ये उक्तं श्रीमच्छङ्कराचार्य्यपादानां वचनं "मुक्ता अपि लीलया भगवन्तं भजन्ते" इति।

सा च भक्तिर्नित्यापि सत्सङ्गद्वारेण साधकानां हृदये आविर्भवति। अतः सत्सङ्ग एव भक्तेः परम निदानमिति। उक्तञ्च श्रीमद्भागवते दशमस्कन्धे—

"भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः।

सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते रतिः॥" इति।

अत्र यदा सत्सङ्गो भवेत्तदा भवापवर्गो भवेदिति वक्तव्ये वैपरीत्येन निर्द्देशः सत्-

सङ्गस्यात्यावश्यकहेतुत्वविवक्षयेति मन्तव्यम् । अत्र च सुस्पष्टमुदाहरणं दृश्यते पद्मपुराणे—

"सूर्य्यकान्तमणेर्योगाद्वह्निस्तत्र प्रजायते ।
एवं वै साधुसंयोगाद् हरौ भक्तिः प्रजायते" ॥ इति ।

इदमत्रावधेयम्—यत्र च नोपलभ्यते सत्सङ्गस्तत्रापि प्राक्तनो वा पारम्परिको वा सत्सङ्गोऽनुमेय. । यदि अपराधो वर्त्तते तदा सत्सु निरादराणां तद्दोषशान्त्यर्थं सत्सङ्गस्य भक्तिकारणताया सतां कृपासाहाय्यमपेक्ष्यते । निरपराधत्वे तु सति सत्सङ्गेनैव जातपरमोत्तमदृष्टीनां तेषां सत्सु मनसोऽवधानाभावेऽपि सत्सङ्ग-मात्रमेव कारणम् । एवञ्च सत्सङ्गमन्तरेणानादिसिद्धभगवदज्ञानमय-तद्वैमुख्यवतां जीवानां भगवदुन्मुखता नैव सम्भवेत् । न च भगवत्कृपैव भक्त्याविर्भावे प्राथमिककारणमिति वाच्यम् । कृपारूपचेतोविकारो हि पर-दुःखस्य स्वचेतसि स्पर्शे सत्येव जायते । भगवतस्तु परमानन्दरूपत्वेनापहत-कल्मषत्वेन च श्रुतौ जीवविलक्षणत्वप्रतिपादनात् तेजोमालिनि सूर्य्ये तिमिरा-योगवत् तस्मिन्नपि तमोमयदुःखस्पर्शासम्भवेन तत्र कृपाया जन्माभावः । भगवत्-कृपा तु 'तत्र वात्र मम शरणमि'ति दैन्यात्मिका भक्तिसम्बन्धेनैव जायते । न तु सांसारिकदुःखदर्शनेन । अतः सत्कृपैवावशिष्यते । सन्तोऽपि तदानीं यद्यपि संसारदुःखासंस्पृष्टा एव, तथापि लब्धजागराः स्वप्नदुःखवत् कदाचिदपि स्मरेयुः, अतस्तेषां सांसारिकेऽपि कृपा भवति । यथा श्रीनारदस्य कुवेरात्म-जयो नलकुवेरमणिग्रीवयोरिति ।

एवञ्च सत्सङ्गवाहना सत्कृपावाहना वा भक्तिः साधकानां हृदये आविर्भवति । तदाविर्भावे च क्रमभेदो वर्त्तते । तत्र श्रीमद्भागवते प्रथमस्कन्धे श्रीनारदोपवर्णितं स्वचरितमवलम्ब्य श्रीधरस्वामिपादप्रदर्शितः क्रमो यथा—प्रथमं महतां सेवा, ततस्तत्कृपा, ततस्तद्धर्म्मश्रद्धा, ततो भगवत्कथाश्रवणम्, ततो भगवति रतिः तया च देहद्वयविविक्तात्मज्ञानम्, ततो दृढा भक्तिः, ततो भगवत्तत्त्वज्ञानम्, ततस्तत्कृपया सर्व्वज्ञत्वादिभगवद्गुणाविर्भाव इति । एष एव क्रमः

श्रीमधुसूदनसरस्वतीपादेन च प्रायो गृहीतः। तथाह्युक्तं तदीये भक्तिरसायने ग्रन्थे—

प्रथमं महतां सेवा तद्दया पात्रता ततः।
श्रद्धाथ तेषां धर्म्मेषु ततो हरिगुणश्रुतिः॥
ततो रत्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः॥
भगवद्धर्म्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता।
प्रेम्णोऽतः परमा काष्ठेत्युदिता भक्तिभूमिका॥ इति।

भजधातोर्भावे क्तिप्रत्ययेन भक्तिरिति पदं सिद्धम्। तस्यास्तटस्थलक्षणं स्वरूपलक्षणञ्चोक्तं गरुडपुराणे—

"विष्णुभक्तिं प्रवक्ष्यामि यया सर्व्वमवाप्यते।
यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित्॥"
"भज इत्येष वै धातुः सेवायां परिकीर्त्तितः।
तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी॥" इति

अत्र "यया सर्व्वमवाप्यते" इति तटस्थलक्षणम्। द्वितीयश्लोके च "सेवा"-शब्देन स्वरूपलक्षणम्। श्रीगोपालतापनीश्रुतौ च तल्लक्षणम्—"भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पनम् एतदेव नैष्कर्म्यमि"ति। अस्य भगवतो भजनं भक्तिरिति। यथाकथञ्चिद् अन्यलिप्सया भगवद्भजनमपि भक्तिरेव, किन्तु सा सकामा एव न निष्कामा। सकामा भक्तिश्च सगुणैव। तत्र मोक्षकामनयापि या भक्तिः सा सात्त्विकी श्रेष्ठा सगुणैव स्यान्न निर्गुणा। उक्तञ्च श्रीधरस्वामिचरणैः—"धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्" इत्यादि श्रीमद्भागवतीयपद्यव्याख्याने—"प्रशब्देन मोक्षाभिसन्धि-रपि निरस्त" इति अतएव भक्तिरस्य भजनमिति लक्षणे उक्तम्—इहामुत्रोपाधि-नैरास्येनामुष्मिन् मनःकल्पनमिति। तदर्थश्च—अस्य कृष्णस्यानुकूल्येन श्रवणादिका भक्तिर्भजनम्, तथामुष्मिन् भगवति चित्तानुरञ्जनञ्च, मनः कल्प्यतेऽनुरज्यतेऽर्प्यतेऽनेनेति निरुक्तेः, तादृशश्रवणादिहेतुकभाव इत्यर्थः।

निर्गुणत्वसिद्धये आह—तदिहामुत्रोपाधिनैरास्येनेति। कृष्णान्यफलाभिलाषराहित्येन, तन्मात्रस्पृहया जायमानमिति। एतदेव नैष्कर्म्म्यमानुषङ्गेण मोक्षकरमित्यर्थः। अस्याश्च निष्कर्षलक्षणमुक्तं श्रीरूपगोस्वामिचरणैर्भक्तिरसामृतसिन्धुग्रन्थे—

"अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम्।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमे"ति॥

एषा एव भक्तिरनन्याख्यययाभिहिता। सकामेषु भक्तियोगेषु फले एवानुरागः, न तु विष्णौ, फलालाभेन भक्तित्यागात्।

साधनं तावत् प्रागुपवर्णितम्। येषां यादृशैः सद्भिः सङ्गो ज्ञाननिष्ठैर्भक्तिनिष्ठैर्वा, तत्सङ्गानुसारेणैव साधननिष्ठा नृणां जायते। रुचिभेदेन साधनभेदः प्रत्यक्षसिद्ध एव। अत्र चैतदालोच्यं यदिह लोके यो हि जनः कपर्द्दकं दत्त्वा बहुमूल्यं वस्तु यद् ग्रहीतुं शक्नोति, स एव बुद्धिमान् चतुरश्च उच्यते, तथा स एव स्वार्थकुशलः। एवञ्च इह भारतभूमौ जन्म लब्ध्वापि सर्व्वफलानां मूलरूपेण उद्यमकोटिभिरपि प्राप्तुमशक्येन यदृच्छयैव लब्धेन ते एव दुर्लभेन तथापि मरणधर्म्मिणा शरीरेण परमसत्यं चिरन्तनञ्च यद्विज्ञानज्ञातव्यं किञ्चिन्नावशिष्यते तदेव हि अमृतं यो हि जनो लभते, तदेव तस्य विवेकस्य चातुर्य्यस्य वा फलम्। उक्तं हि श्रीमद्भागवतैकादशस्कन्धे—

'एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतमि"ति॥

---

# न्यायमते मुक्तिः

[ निबन्धक :—श्रीश्यामापदतर्कतीर्थः ]

इह खलु क्लेशबहुलायां जगत्यां प्रायशः सदसद्विवेकधियो लोकाः सुखं दुःखाभावञ्च सन्ततं कामयमाना वर्त्तन्ते। कथञ्चिदैहिकसुखं लब्धुं समर्था अपि ते पारलौकिकसुखं दुःखाभावं च नैव लभन्ते। पारलौकिकसुखलाभे दुःखाभावलाभे वा प्रयतमाना अप्यास्तिका नैकान्तिकात्यन्तिकसुखप्राप्तावात्यन्तिकदुःखनिवृत्तौ वोपायं सम्यग् विदन्तीति वेदमूलकाना दर्शनशास्त्राणां प्रवृत्तिः।

ननु "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमि"ति स्वर्गसुखमेवात्यन्तिकसुखतया शास्त्रानुमतम्। नापि तस्य क्षयित्वमाशङ्कनीयं, "न च ग्रस्तमनन्तरमि"त्यनेन तन्निवारणात्। किञ्च—"अपाम सोममममृता अभूम किमु धूर्त्तिरमृत मर्त्तस्य" इत्याद्याभिः श्रुतिभिः स्वर्गस्यामृतत्वप्रतिपादनात्। तादृशश्च स्वर्गो ज्योतिष्टोमयागादिलभ्यः। उक्तञ्च श्रुतौ "ज्योतिष्टोमेन स्वर्गकामो यजेत" "वाजपेयेन स्वाराज्यकामो यजेत" इत्यादि। तस्माद् वैदिकयागादिलभ्यमेवात्यन्तिकसुखमात्यन्तिकदुःखाभावश्च, 'यन्न दुःखेन संभिन्न'मित्यनेन प्रतिपादनात्। अत एवात्यन्तिकदुःखाभावविशिष्टात्यन्तिकसुखप्राप्तिकामेन पुरुषेण यागादयो महता प्रयत्नेनानुष्ठातव्या इति न तत्र दर्शनशास्त्राणां काप्युपयोगितेति चेन्न, कर्म्मजन्यतया स्वर्गसुखस्य विनाशित्वानुमानात्। "तद् यथेह कर्म्मचितो लोकः क्षीयते एवमेवात्र पुण्यचितो लोकः क्षीयते" [छाः उः ८] इत्यादि युक्तिसहकृतश्रुत्या च बलवत्तरया "अपाम सोममममृता अभूम" इत्यादीनां श्रुतीनामन्यार्थकत्वकल्पनात्। सोमयागादिस्तुत्या तत्र पुरुषप्रवर्त्तकत्वमेव तादृशश्रुतीनां तात्पर्यं विवक्षितम्। किञ्च "ज्योतिष्टोमेन स्वर्गो भवति वाजपेयेन स्वर्गाधिपत्य"मिति श्रुत्यैव स्वर्गसुखे तारतम्यमनुभूयते। तारतम्येन चाधिकसुखभुजोऽपेक्षयाल्पसुखभुजो दुःखं किञ्चिद् विद्यत इत्यनुमीयते इति न

स्वर्गसुखस्यात्यन्तिकदुःखाभावसंस्पृष्टत्वम्। अत आत्यन्तिकदुःखनिवृत्तिर्न सुखसम्बन्धिनी भवति, यत्र सुख विद्यते तत्रावश्यं दुःखेन भवितव्यं, सुख कामयमाना दुःखमवश्यं लप्स्यन्त इति आत्यन्तिकदुःखाभावेप्सुना सर्व्वथा सुखं परित्यक्तव्यम्। उक्तञ्च—न्यायवार्त्तिककारेण "एकविंशतिप्रभेदभिन्नं दुःखं यथा षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः शरीरं सुखं दुःखञ्चेति।" तस्मात् सुखस्य दुःखान्तर्गततया न सुखे आत्यन्तिकत्वमस्तीति सिद्धम्। तच्च दुःखं त्रिविधम्—आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति। तादृशदुःखत्रयाभिहतानां जीवानामात्यन्तिकदुःखनिवृत्तये परमकारुणिको महर्षिगौतमः प्रमाणप्रमेयादिषोडशपदार्थनिर्णायकमखिलशास्त्रप्रकाशकं सर्वधर्म्माश्रयीभूतमान्वीक्षिकीशास्त्रं प्रणिनाय। निरुक्तदुःखाभिहतानां जीवानां मुक्तिस्तु सर्वविधदुःखानामात्यन्तिकी निवृत्तिरेव। सैवापवर्गशब्देन व्यपदिश्यते। स चायमपवर्गो विभिन्नदार्शनिकमतवादेषु विभिन्नतया समुद्दिष्टोऽपि न्यायवैशेषिकमते आत्यन्तिकदुःखनिवृत्तिरेवापवर्ग इत्यत्र नास्ति केषामपि दार्शनिकानां विप्रतिपत्तिः। तथाच श्रुतिः 'दुःखेनात्यन्तं विमुक्तश्चरती'ति। भगवताऽपि गीतायामुक्तम्—"जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते" इति [गीः १४।२०]। अत्र कस्तावदपवर्ग इत्याकाङ्क्षायामपवर्गस्वरूपमभिदधानेन महर्षिणा गौतमेन न्यायदर्शने स्वयमेवाभिहितम् "तदत्यन्तविमोक्षोऽपवर्ग" इति। अत्र "तत्" पदेन पूर्वसूत्रोक्तस्य दुःखस्यैव परामर्शाद् यावतो दुःखस्य ग्रहणम्। तथाचैतेन आध्यात्मिकाधिभौतिकाधिदैविकानां यावतां दुःखानामात्यन्तिकनिवृत्तिरेवापवर्ग इति फलितम्। स एव मोक्ष इत्यनर्थान्तरम्। महामनीषिभिः कणभुग्भिरपि "तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः" [वैः सूः ५।२।१८] इत्यभिहितम्। अत्र 'तत्'पदेन पूर्वसूत्रस्थस्यादृष्टस्य ग्रहणम्। अतो धर्म्माधर्म्मरूपादृष्टप्रयुक्तो यः शरीरस्यात्मना सह विलक्षणसंयोगस्तस्याभावो भिन्नशरीरेण च सह विलक्षणसंयोगस्याप्रादुर्भावो मुक्तिरिति पक्षेऽपि निरुक्तदुःखत्रयाणामात्यन्तिकी निवृत्तिरेव मुक्तिरिति वक्तुं शक्यते। न चात्यन्तिकनिवृत्तिपदेनात्यन्ताभावस्यैव

नित्यसुखाभिव्यक्तिर्भवतीति सिद्धान्तं स्वीकुर्वाणास्तत्र वात्स्यायनमतं निरसितुं "तस्मात् कृतकत्वेऽपि सुखसंवेदनसम्बन्धस्य विनाशकारणाभावान्नित्यत्वं स्थितं तत्सिद्धमेतन्नित्यसंवेद्यम्, अनेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्षः" इति प्राहुः [न्यायसारः]। अत्रेदं तात्पर्य्यं, मुक्तपुरुषाणां नित्यसुखभोगे शास्त्रमेव मानम्, मुक्तात्मन्यनुभूतस्य सुखस्य नित्यतया सदैव भानात्। परन्तु यथा सत्यपीन्द्रियसद्भावे दूरत्वादिदोषवशादिन्द्रियविषययोः सम्बन्धो नोत्पद्यते, अपसृते च दोषे समुत्पद्यते तथात्मनि समवेतेऽपि नित्यसुखे नित्यानुभवे च संसारावस्थायां पापादिप्रतिबन्धकसद्भावात् तयोर्विषयविषयिभावः सम्बन्धो न जायते। मुक्तावस्थायां तु पापादिप्रतिबन्धकाभावात्तयोः सम्बन्धो जायत एव। अतो नित्यसंवेद्या नित्यसुखविशिष्टा या आत्यन्तिकी दुःखनिवृत्तिः सैवापवर्ग इत्येतेषां सिद्धान्तः। भूषणकृतामप्येतन्मतमविरुद्धमिति श्रीसम्प्रदायमतानुयायिनो वेङ्कटनाथस्य न्यायपरिशुद्धिग्रन्थे "अतएव भूषणमते नित्यसुखसंवेदनसिद्धिरपवर्गे साधिता" इत्युक्त्यानुमीयते। शंकरकल्पाः शंकराचार्यपादा अपि न्यायवैशेषिकयोरपवर्गस्वरूपं वर्णयितुमूचुः—

"अत्यन्तनाशे गुणसंगतेर्या स्थितिर्नभोवत् कणभक्षपक्षे।
मुक्तिस्त्वदीये चरणाक्षपक्षे सानन्दसंवित् सहिता विमुक्ति"रिति।

अत्रायमाशयः, कणादमते आत्मनः सर्वविधविशेषगुणानामत्यन्तोच्छेदेनाकाशवत् स्थितिरेव मुक्तिः। शैवमतानुवर्त्तिनां नैयायिकानां मते तु आनन्दानुभूतिकतादृशावस्थैव मुक्तिः। वस्तुतस्तु महर्षिणा गौतमेन प्रमाणप्रमेयसंशयप्रयोजन.........निःश्रेयसाधिगम"इति [न्याः सूः १।१।१] सूत्रमभिदधानेन तत्र किं नाम निःश्रेयसमित्याकांक्षायां "तदत्यन्तविमोक्षोऽपवर्ग" इत्यभिहितम्। तेन दुःखध्वंस एव तन्मते मुक्तिरिति निश्चीयते। एतच्चास्माभिः पूर्वमेवावेदितम्। भाट्टमतानुसारिणः पार्थसारथिमिश्रादयोऽपि काणादमतं समर्थयन्तः "तस्मान्निःसम्बन्धो निरानन्दश्च मोक्ष" इति मोक्षस्वरूपं प्रदर्शयामासुः।

केनोपायेन स लभ्यते इति जिज्ञासायां च तेनैव समाहितं "दुःख-जन्म-प्रवृत्ति-दोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरायादपवर्ग" [न्याः सूः १।१।२] इति। तत्त्वज्ञानं च न साक्षात् परमुक्तिजनकं भवति परन्त्व-परमुक्तिजनकम्। श्रुतिरप्याह—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या वा विज्ञानेनेदं सर्व्वं विदित"मिति [बृः उः ४।४।५]। अत्र याज्ञवल्क्यो मैत्रेयीमुपदिशति स्म—आत्मनो दर्शनरूपं तत्त्वज्ञानमेव मुक्तेः साक्षादुपायः। श्रवणं मननं निदिध्यासनञ्चात्मदर्शनस्योपायत्वेन गृहीतान्यपि तानि परम्परया मुक्तेरुपाय-भूतानि। जीवास्तु मिथ्याज्ञानवशान्नानाविधशरीरपरिग्रहरूपं जन्म लभमाना विभिन्नं सुखमनुभवन्ति। शरीरादावात्मज्ञानात्मकाहंकार एव तेषां दुःखस्य मूलं निदानम्। अतोऽहंकारनिवृत्तिमन्तरा दुःखस्यापि निवृत्तिरसम्भाविनीति तन्निवृत्त्युपायभूतो मार्गो महर्षिणा गौतमेन न्यायदर्शने "दोषनिमित्तानां तत्त्व-ज्ञानादहङ्कारनिवृत्तिः [न्याः सूः] "मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्" [न्याः सूः ४।२।३५] इत्यादिभिः प्रदर्शितः। अयमभिप्रायः, मिथ्याज्ञानस्य निवर्त्तकमात्म-ज्ञानमेव नान्यत्। तच्च मिथ्याज्ञानम्—अनात्मनि देहादावात्मेति, दुःखे सुखमिति, सभयेऽभयमित्यादिबुद्धिः। उक्तञ्च भाष्यकारैः "तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्य्ययेण व्याख्यातम्। आत्मनि तावदस्तीति, अनात्मन्य-नात्मेति" [वाः भाः १।१।१]। जाते तादृशतत्त्वज्ञाने मिथ्याज्ञानस्य निवृत्ति-र्जायते। सत्यां च मिथ्याज्ञानस्य निवृत्तौ तन्मूलकानां रागद्वेषमोहात्मकानां दोषाणां निवृत्तिः, दोषनिवृत्तौ च तदधीनाया धर्म्माधर्म्मजनकात्मिकायाः प्रवृत्तेरपि निवृत्तिः, कर्म्मणां निवृत्तौ च जन्मनामपि निवृत्तिः। अत्र जन्मनां निवृत्तिरित्यनेन भाविनां जन्मनामनुत्पत्तिर्बोद्धव्या। वर्त्तमानजन्मनश्च सिद्धत्वात् प्रारब्धत्वाच्च भोगेन निवृत्तिः। इयं च मुक्तिः परापरभेदेन द्विविधा भवति। मुमुक्षोरात्मस्वरूपस्यालौकिकदर्शनरूपतत्त्वज्ञानाद् या मिथ्या-ज्ञानस्य निवृत्तिः सा जीवन्मुक्तिः। सैवापरामुक्तिरित्युच्यते। जीवन्मुक्ता-वस्थायां च शरीरनिष्पादकप्रारब्धकर्म्मणां फलभोगावसानं न भवति

किन्तु यदा प्रारब्धकर्म्मणां विनाशात् शरीरावसानं भवति तदैव निर्व्वाण-मुक्तिर्जायते। सैव परामुक्तिशब्देन व्यपदिश्यते। महर्षिणा गौतमेन "दुःखजन्मे"त्यादि सूत्रे मुक्तेर्यादृशः क्रमो दर्शितः (पूर्व्वोक्तः) स तु निर्व्वाण-मुक्तरुपयोगी। शैवमतानुवर्त्तिनो नैयायिकास्तावद् गौतममतसिद्धं जीवात्म-परमात्मभेदेनात्मनो द्वैविध्यं स्वीकृत्य मुमुक्षोरात्मदर्शनस्यावश्यकत्वमङ्गीकुर्व्वाणा अपि शिवदर्शनमेव साक्षान्मुक्तिसाधनमित्याशयेन "तस्मात् शिवदर्शनादेव मोक्षः"इत्याहुः। किन्तु भाष्यकृतो वात्स्यायनस्य तन्मतानुवर्त्तिनो नैयायिकस्य च मते मुमुक्षोरात्मनः परमात्मनश्च स्वरूपतो भिन्नत्वात् परमात्मनो दर्शनं साक्षात्मुक्तिसाधनं नैव भवितुमर्हति, तस्य साक्षात् सम्बन्धेन मुमुक्षोरात्म-विषयकमिथ्याज्ञाननिवृत्त्यसमर्थत्वात्। परन्तु ईश्वरदर्शनं मुमुक्षोरात्मदर्शनं जनयन्मुक्तिसाधनं भवति। विनेश्वरदर्शनं मुमुक्षोरात्मदर्शनासम्भवादीश्वर-दर्शनस्य परम्परया मुक्तिसाधनत्वमित्याशयेन श्रुतिरप्याह "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" [श्वेः उः] इति। उक्त-मतानुसारि "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति भगवद्वचनमपि युज्यते।

ईश्वरोपासनस्य मुक्तौ परम्परयोपयोगित्वं महानैयायिकैरुदयनाचार्य्यैरपि कुसुमाञ्जलिग्रन्थे "स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः। यदुपास्तिमसावत्र परमात्मा निरूप्यते॥" "याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः" "काले कारुणिक त्वयैव कृपया ते तारणीया नरा"इत्यादिना बहुधा प्रति-पादितम्। श्रुतावप्युक्तम्—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" इति।

तस्मान्नेश्वरोपासनात्मकं ज्ञानं साक्षान्मुक्तौ साधनम्। स्वात्मतत्त्वसाक्षात्कार एव तत्साधनतया सर्व्वत्र श्रुतिस्मृतीतिहासपुराणादिषूक्तम्। सा च मुक्तिः आत्यन्तिकदुःखनिवृत्तिरिति असकृदेवावेदितम्। यद्यपि वेदान्तमतेऽविद्या-निवृत्तिः परमानन्दप्राप्तिश्च मुक्तिरित्यभ्युपगत तथापि तादृशमुक्तौ दुःखा-

नामात्यन्तिकी निवृत्तिरस्तीति न कोऽपि संशयः। अतएव न्यायमतं समर्थयद्भि-र्भाष्यकारैः समन्वयसूत्रे दुःखजन्मप्रवृत्तीत्यादि परमर्षिसूत्रमुद्घोषितम्। तस्मादात्यन्तिकी दुःखनिवृत्तिरेव मुक्तिरिति न्यायसिद्धान्तः सङ्गच्छते इत्यलम्।

---

# सापिण्ड्यप्रतिपादनम्

[ निबन्धिका—डः श्रीवाणी चक्रवर्त्ती-काव्यस्मृतितीर्था

ए। ए., डि. फिल् ]

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।

पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

इति मत्स्यपुराणवचनेन सापिण्ड्यं निरूपितम्। एतेन ज्ञायते यत् पितृ-पितामहप्रपितामहास्त्रयः पुरुषा एव पिण्डभागिनः, वृद्धप्रपितामहोऽतिवृद्ध-प्रपितामहोऽत्यतिवृद्धप्रपितामह इति चतुर्थपुरुषात् ऊर्द्ध्वगामिनस्त्रयः पुरुषा एव लेपभागिनः पिण्डदाता च स्वयमिति सप्तपुरुषपर्यन्तं सापिण्ड्यम्।

ननु भ्रात्रादयो न सपिण्डास्तेषां पिण्डतल्लेपदातृत्वभोक्तृत्वासम्भवादिति चेन्न, तेषामपि पिण्डलेपयोः सम्बन्धोऽस्ति। अत्र तावद् बौधायनवचनमेव प्रमाणम्। तथा च बौधायनः—"प्रपितामहः पितामहः पिता स्वयं सोदर्यभ्रातरः सवर्णायाः पुत्रः प्रपौत्रो वा एतानविभक्तदायादान् सपिण्डाना-चक्षते। विभक्तदायादान् सकुल्यानाचक्षते, सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति"। अस्यार्थः स्मार्तभट्टाचार्येण रघुनन्दनेन विशदीकृतः। यथा—पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिस्त्रिभिस्तत्पिण्डदानात्। यश्च जीवन् यस्य पिण्डदाता, स मृतः सन् सपिण्डनेन तत्पिण्डभोक्ता। एवं सति मध्यस्थितः पुरुषो जीवन् पूर्वेषां पिण्डदाता मृतः सन् तत्-

पिण्डभोक्ता अपरेषां जीवतां पिण्डसम्प्रदानभूत आसीत्। मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता, अतो येषामयं पिण्डदाता ये चास्य पिण्ड-भोक्तारस्तेऽविभक्तं पिण्डरूपं दायमश्नन्तीति अविभक्तदायादाः सपिण्डा इति। पिण्डे यथा परस्परं भोक्तृत्वं तथा लेपे तुल्यन्यायात्।

पूर्वोक्तबौधायनसम्मतं सापिण्ड्यलक्षणं केवलं दायग्रहणार्थं कृतम्, अन्यथा तन्मतेन सपिण्डत्वं चतुःपुरुषपर्यन्तं स्यादिति हेतोर्दायग्रहणार्थमित्युक्तम्। अशौचाद्यर्थन्तु सपिण्डत्वं पिण्डलेपभुजामपि स्यात्।

लेपभागिभ्यस्तूर्द्ध्वं यावज्जन्मनाम्नोरवेदनं यावदमुकनाम्नोरवेदनं यावद-मुकनाम्नोऽस्मात् पूर्वपुरुषादयं जात इति विशेषतः अयमस्मादस्मिन् कुले जात इति सामान्यतो वा स्मर्य्यते तावत् समानोदकत्वम्। तथा च कूर्मपुराणं—

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥
पिता पितामहश्चैव तथैव प्रपितामहः।
लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम्॥ इति।

अतएव अत्यतिवृद्धप्रपितामहावधिकाधस्तनानां षण्णां पुंसां प्रत्येकापेक्षया सप्तानामेकगोत्राणां स्वावधिकपरवर्त्तिनां सप्तानाञ्च सापिण्ड्यं पिण्डलेपयो-र्दातृत्वभोक्तृत्वसम्बन्धादिति निष्कर्षः।

ननु पिण्डतल्लेपयोर्दातृत्वभोक्तृत्वसम्बन्धात् मातामहादीनामपि सापिण्ड्यं निर्णीयते दौहित्राणां पिण्डदानत्वादिति चेन्न, मातामहादिभिः सह दौहित्रस्य सापिण्ड्यं वेदविरुद्धं लोकविरुद्धञ्च। यतः—"असावेतत्ते यजमानस्य पित्रे असावेतत्ते यजमानस्य पितामहाय असावेतत्ते यजमानस्य प्रपितामहाय, मातामहानामप्येवम्" इति श्रुत्या पितृपितामहप्रपितामहादीनां सापिण्ड्य-मुपदेशविधिबोध्यम्। परन्तु 'मातामहानामप्येव'मिति अतिदेशविधिहेतो-र्मातामहादिषु सापिण्ड्यस्य न परिगणनं कर्त्तव्यम्।

ननु कन्यायाः कथं सापिण्ड्यमिति चेदुच्यते—'सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषाति आदिपुराणवचन त् कन्यानां त्रैपुरुषं सापिण्ड्यम्।

कन्यायाः पितृपितामहप्रपितामहेषु त्रैपुरुषसापिण्ड्याद् वृद्धप्रपितामहे सापिण्ड्यं निवर्तते। अतएव कन्यायाः प्रपितामहभ्राता तत्सन्ततिभिश्च सह सापिण्ड्याभावात् कन्यामरणजननयोस्तेषां सपिण्डाशौचं नास्ति, किन्तु समानोदकनिमित्तमेवाशौचमिति। एवं तेषामपि जननमरणयोः कन्यानामशौचमिति। अत्र तु प्रश्नो जायते—

"अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्।
प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः॥"

इति कूर्मपुराणवचनात् कथमप्रत्तानां स्त्रीणां साप्तपौरुषं सापिण्ड्यमिति चेदुच्यते—अत्र यत् सापिण्ड्यं कथितं तदेव विवाहे पितृपक्षविषयम्।

यथा विष्णुपुराणे—

"सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्।
उद्वहेत द्विजो भार्यां न्यायेन विधिना नृप॥"

इत्यनेन पितृपक्षे सप्तमीं मातृपक्षे च पञ्चमीं कन्यां परित्यज्य द्विजो न्यायेन भार्यां विन्देत। अत्र भर्तृसापिण्ड्यमित्यत्र साप्तपौरुषमिति। तेन भर्तृसमानसापिण्ड्यमित्यर्थः।

मिताक्षरादिमतेन तु सापिण्ड्यलक्षणं भिन्नम्। तन्मतेन सपिण्डता एकशरीरावयवान्वयेन भवति। तथाहि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह एकपिण्डता, एवं मातामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्। एवं मातृशरीरावयवान्वयेन मात्रा मातामहादिभिरपि, एवं पत्या सह पत्न्या एकशरीरारम्भकतया सापिण्ड्यम्। अत्र च गर्भोपनिषद्वाक्यमेव प्रमाणम्। तथाच—"एतत् षाट्कौशिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृतश्चेति"।

एतन्मतेन यत्र यत्र सपिण्डशब्दस्तत्र तत्र साक्षात् परम्परया वा एकशरीरावयवान्वयो वेदितव्यः। अतएवात्र अतिप्रसङ्गस्तु सप्तान्यतमत्वेन प्रयोगोपाधिना निरसनीयः। एतेन कथ्यते मिताक्षरायां—"अतश्चायं सपिण्ड-

शब्दः अवयवशक्त्या सर्वत्र प्रवर्तमानोऽपि निर्मथ्य पङ्कजादिशब्दवत् निरत-विषय एवेति"।

याज्ञवल्क्यसंहिताया भाष्यकारेषु न केवलं विज्ञानेश्वरः, अपि तु विश्वेश्वरोऽपि अवयवद्वारा सापिण्ड्यं बोधयति। यथा विश्वेश्वरेण कथ्यते—"पुत्रे पितृवयवबाहुल्यात् मातृपेक्षया प्रत्यासत्त्यतिशयः, एतदेव च प्रत्यासत्ति-मूलकारणम्"। बालंभट्टेन चापि उच्यते—"सा च प्रत्यासत्तिः शास्त्रतो लोकतश्च यथायथम् अवयवान्वयादिद्वारेण बोध्या"।

अपरेण मित्रमिश्रनाम्ना भाष्यकारेण च कथ्यते—"धनस्वाम्युप-कारातिशयानतिशयगुणवत्तागुणवत्तादिभिर्यथावचनं सर्वोऽपि क्रमविपर्यासः समाधेयः"।

मैथिलनिबन्धकारैरपि अवयवान्वयेन सापिण्ड्यं निरूपितम्। तथा च मैथिलनिबन्धकर्त्रा चण्डेश्वरठक्कुरेण तत्प्रणीतगृहस्थरत्नाकरे उक्तम्—"समान एकः पिण्डो देहो यस्याः सा सपिण्डा न तथा असपिण्डा, सपिण्डता च एकदेहावयवान्वयेन भवति। तथाहि पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह। एवं पितामहादिभिरपि पितृद्वारेण शरीरावयवान्वयः। एवं मातृशरीरावयवान्वयेन मात्रा तथा मातामहादिभिरपि मातृद्वारेण"।

तत्र स्थितेषु स्मृतिनिबन्धेष्वन्यतमेन वाचस्पतिमिश्रेणापि शुद्धिचिन्तामणौ कथ्यते—"अत्र पिण्डश्च शरीरम्, अस्थिस्नायुमज्जाः पितृतः, त्वङ्मांस-रुधिराणि मातृत इति श्रुतेः। पत्न्या समं पत्नीनान्तु अस्थिभिरस्थीनीत्यादि-श्रुतेस्तत्सपिण्डानां तद्द्वारा, एवं साक्षात् परम्परया समानशरीरकत्वं परम्परया अष्टमादौ समानशरीत्वसम्भवेऽपि बीजिनमारभ्य सप्तमान्यतमत्व-मुपाधिः पङ्कजपदे पद्मत्वमिवेति रमणीयम्"।

अवयवद्वारा सापिण्ड्यनिर्णयस्तु स्मार्तभट्टाचार्येण रघुनन्दनेन निरस्तः। तेन चात्र कथितं शुद्धितत्त्वे—"मिताक्षरारत्नाकराभिमतमपास्तम्। लेपभाज इत्यादि वाचनिकेऽर्थे सापिण्ड्ये एकशरीरावयवान्वयरूपस्वकपोलकल्पितार्था-नवकाशात् निर्वाप्य पिण्डसम्बन्धेन भ्रात्रादीनां सापिण्ड्यस्य। मत्स्य-

पुराणबौधायनाभ्यां पूर्वमुक्तत्वात् कामधेनुहारलताकल्पतरुपारिजातकारादिभिस्तथैव व्याख्यातत्वाच्चेति"।

मिताक्षरादिमतेन च पुनरपि दोषावसरो जायते। यथा च रेतःशोणितपरिणामरूपत्वादपत्यशरीरस्य भवतु वा सापिण्ड्यं, किन्तु पत्या सह पत्न्या एकशरीरारम्भकतायाः प्रत्यक्षतो बाधितत्वात् कथं सापिण्ड्यम्। प्रमातामहादीनां विशेषवचनाभावात् सपिण्डत्वेन दशाहाद्यशौचप्रसङ्गाच्च। मातामहादौ सापिण्ड्यस्य लोकवेदविरुद्धत्वाच्च, भवतु वा पत्या सह पत्न्या एकशरीरद्वारा सापिण्ड्यं, तथापि मनुवचनाद् यथा सप्तान्तर्गतत्वं तन्नं तथा गोत्रतः साप्तपौरुषीतिवचनात् गोत्रैक्यमपि प्रागुक्तवचनात् कन्यायास्त्रिपौरुषम् ऊढायाश्च भर्तृसपिण्डनेन सापिण्ड्यमिति चेत् तदैतन्मतेऽपि न क्षतिरिति।

वङ्गदेशीयेषु स्मृतिनिबन्धकारेष्वन्यतम एकादशशताब्दीयो भवदेवभट्टो नाम निबन्धकर्ता पिण्डदातृत्वभोक्तृत्वसम्बन्धेन एकशरीरावयवसम्बन्धेन च सापिण्ड्यं स्वीचकार। तथा च तेन कथ्यते तस्य सम्बन्धविवेके—

"सपिण्डता च पिण्डसंप्रदानत्वेन पिण्डदातृत्वेन पिण्डदातृपरम्परात्वेन योग्यत्वेन च बोद्धव्या। ...अथवा सपिण्डत्वमेकशरीरत्वं, समान एकः पिण्डो येषामिति व्युत्पत्त्या। तच्च साक्षात् परम्परया चैकजातत्वादेव भवति। 'आत्मा जज्ञे आत्मन' इति श्रुतेः।"

द्वादशशताब्दीयो जीमूतवाहनस्तु पिण्डदानसम्बन्धेन सापिण्ड्यं गणयामास। तेन चात्र तस्य दायभागे उच्यते—"पित्रादिपिण्डत्रये सपिण्डनेन भोक्तृत्वात् पुत्रादिभिश्च त्रिभिः तत्पिण्डस्यैव दानात् यश्च जीवन् यत्पिण्डदाता स मृतः सन् सपिण्डनात् तत्पिण्डभोक्ता...उपकारकत्वेनैव धनसम्बन्धो न्यायप्राप्तो मन्वादीनामभिमत इति मन्यते"।

पञ्चदशशतके शूलपाणिमहामहोपाध्यायेन च पिण्डदानसम्बन्धद्वारा सापिण्ड्यं प्रतिपादितम्। तत्प्रणीते सम्बन्धविवेके तेनोक्तम्—"एकसम्प्रदानपिण्डलेपभागेषु येषां दातृत्वेन भोक्तृत्वेन वा सम्बन्धस्तेषां परस्परं सापिण्ड्यम्"।

पुनरपि श्रीनाथाचार्यचूडामणिनाम्ना निबन्धककर्त्रा च विवाहतत्त्वार्णवे

प्रोक्तम्—"पिण्डशब्दस्य शरीरवाचकत्वे मानाभावात्। गर्भोपनिषदादिभिस्तु तत्र तत्रावयवान्वयमात्रं न तु सपिण्डत्वमपि किं च एवं सपिण्डत्वे श्वशुरस्याप्येकस्य पुत्रशरीरस्य परम्परारम्भकतया सपिण्डत्वप्रसङ्ग, न केवलं श्वशुरस्य तत्पत्न्यास्तथा तस्या मातृपक्षादीनामपि सपिण्डत्वप्रसङ्गः। ...यदा यस्मात् सन्तानभेदस्तमादाय तत्सप्तमपुरुषान्तर्गताः परस्परं सपिण्डास्तत्-पिण्डेन सह सर्वेषां दातृतया सम्बन्धात् सर्वेषामेव एकपिण्डसम्बन्धित्वमिति।"

गोविन्दानन्दोऽपि तन्मतं स्वीकरोति शुद्धिकौमुद्यां—"पिण्डः पिण्ड-लेपसम्बन्धस्तेन सह वर्तमानाः सपिण्डाः। स च सम्बन्धः साक्षात् परम्परयापि। तेषां सप्तानां पिण्डलेपदातृत्वभोक्तृत्वसम्बन्धः साक्षात् सन्ततीनान्तु पिण्डलेपयोस्तुल्यसम्प्रदानकत्वसम्बन्धः परम्परयेति"।

---

# अङ्कचर्चा

[ निबन्धकः—डः सिद्धेश्वर चट्टोपाध्यायः ]

"इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्त्तितम्[1]"।

वस्तुशब्दवाच्यं तच्चेतिवृत्तं बहुधा व्याकृतं मुनिना भरतेन तदनुगामिभि-श्चाचार्यैः। नाट्यशास्त्रे पाठकसमालोचकानां पक्षतो व्याख्यातमितिवृत्त-मर्थप्रकृत्यवस्था-सन्धि-सन्ध्यङ्ग सन्ध्यन्तरैर्विभज्य। इतिवृत्तं नाम काव्यमात्रस्या-नभिनेयस्य शरीरमिव न हि वृत्तमात्रं परमवस्थादिभिरुपस्कृतमेव वृत्तं नटनीयस्याभिनेयरूपस्येति मतमभिनवगुप्तपादानाम्[2]। परमेवमवस्थादिभिः संस्कृतमपि वृत्तं न भवति रङ्गे प्रयोगार्हम्। तदर्थं पुनः रूपकशरीरमङ्क-विष्कम्भक-प्रवेशकैर्विभज्यते। सर्वथा प्रवर्त्ततेऽयं विभाग इतिवृत्तस्य विभिन्ने देशे विभिन्ने च काले संघटितानामंशविशेषाणां मध्ये केन प्रकारेण भवेत्

प्रयोग इति विचारणमपेक्ष्य। स्मर्त्तव्यमेतद्यद् दैशिकं कालिकं वा ऐक्यं न स्वीक्रियते संस्कृतरूपके, अङ्केऽपि दैशिकमैक्यं प्रायो न दृश्यते। को वाङ्क-शब्दस्यार्थः, किं वाङ्कविभागे मानम्, अस्ति न वा सन्ध्यवस्थाविभागेन सह विभागस्यास्य कोऽपि सम्बन्धः, कि वाङ्कस्य कालपरिमाणं, कानि वा तत्र निषिद्धानीत्यादिकमवलम्ब्य बहुधा विप्रतिपत्तिरुपलभ्यते। संक्षेपेण तत् सर्वं विचार्याङ्कस्वरूपनिर्णयाय प्रवर्त्तत इयमालोचना।

अङ्क इति रूढ़िशब्दः स 'चाख्यानग्रन्थस्य परिच्छेदयिता' इति सागरनन्दी[3]। परिच्छेदोऽयं रूपके नानाप्रयोगयुक्तो रसभावैश्चोपगूढ़ो भवति। यथोक्तं मुनिना,—'अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्। नाना-विधानयुक्तो यस्मात्तस्माद्भवेदङ्कः'[4]॥ नानाप्रयोगयुक्तस्य रसभावोपगूढ़स्य समग्ररूपकस्य परिच्छेदविशेषस्य नाम तावदङ्केति साम्प्रदायिकव्यवहारवशादेव सिद्धम्। यादृच्छिकस्यापि शब्दस्यास्य बहुधा लोकनिरुक्तिर्दृश्यते। उत्सङ्गवदारोहणसम्बन्धादङ्क उच्यत' इति 'अनेकरसाङ्कितत्वादप्यङ्क इति नामेत्यर्थ' इति चाभिनवगुप्तपादा वदन्ति[5]। उत्सङ्ग इवाङ्क[6] इति धनिक-मतम्। सारदातनय-शिङ्गभूपालादिभिरपि परिगृहीतमेतन्निर्वचनम्। अङ्के खलु सरसं वस्तु निबध्यते, चरितचित्रणमपि तत्रैव। प्रवेशक-विष्कम्भकयोस्तु कथासूत्ररक्षार्थं यत् किञ्चिदङ्के नीरसं परित्यक्तं नाट्ये अङ्के वा निषिद्धं तत् सर्वं संक्षेपत उपनिबध्यते। अतोऽङ्कयति विस्तरेण चरित्रमितिवृत्तं वा इत्यङ्क इत्यपि मन्ये समीचीनम्। यथा तथा वास्तु रूढिशब्दोऽयमिति नाट्यशास्त्र-सम्प्रदायः।

इतिवृत्तसूत्रं यथा छिन्नं न भवेत्तथाङ्कानां परं परं प्रति पूर्व-पूर्वस्य हेतुता रक्षणीया यथा यथा पूर्वाङ्कात् पराङ्को वस्तुगत्यैवावतरतीति शास्त्रकाराः। प्रवेशक-विष्कम्भकयोरेकतरेण विन्दुशब्दवाच्येन चानुसन्धानाभिधायिवाक्येन पूर्व-पराङ्कयोर्योगः स्थाप्यते। उक्तं हि मुनिना,—'अस्यावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात्। कर्त्तव्योऽङ्कः सोऽपि गणान्वितं नाट्यतत्त्वज्ञैः'[7]॥ पाठान्तरकण्टकितस्य दुर्बोधस्यास्य श्लोकस्याशयस्तावदबोध्य एव कृतष्टीका-

कृतां प्रयत्नेन। सागरनन्दिना तु संक्षेपतो मुनिवचनस्यास्य 'स च सन्ध्यङ्ग-वशादस्यैव नाटकस्यावस्थां प्रसमीक्ष्य विन्द्वादीनां विस्ताराद्वा कर्त्तव्यः'[8] इति वदता मर्मोद्घाटितम्।

इतिवृत्तविश्लेषणार्थमुद्भावितो यः सन्ध्यवस्थाविभागस्तेन सहाङ्कविभागस्यास्ति कोऽपि सम्पर्को न वेत्यत्र स्पष्टतया किमपि नोक्तं मुनिना, परं तेनैव सृष्टं वादबाहुल्यम्। 'अवस्थासञ्चारिणः सन्धयः' इति प्रतिपादयता श्रीमताभिनवगुप्तेन पूर्वोदाहृतस्य नाट्यशास्त्रस्य 'अस्यावस्थोपेतमि'ति ग्रन्थस्य व्याख्यायामभिहितं यद्रूपके अङ्कास्तावदवस्थाचारिणो भवेयुः[9]। नाटके प्रकरणे वा (पूर्णाङ्गे रूपके) प्रारम्भादिपञ्चावस्था भवन्ति। पूर्णत्वमेति यदा काचिदवस्था तदैवाङ्कच्छेदः, परमेकापि यद्यवस्थाङ्कद्वयेन वर्ण्यते तत्र नास्त्यापत्तिः। एवं पूर्णसन्धिरूपके (नाटके प्रकरणे वा) पञ्चावस्थाचारिणो पञ्चाङ्कास्तावदभिनवगुप्तस्य मते 'मुख्यः कल्पः'। परमवस्थाविस्ताराद्यदि काप्यवस्था वर्ण्यतेऽङ्कद्वयेन तदा तु जायतेऽङ्कसंख्याधिक्यम्। एवं क्रमेण दशाङ्कत्वमपि स्वीकृतम्। तर्हि गुप्ताचार्याणां मतेनाङ्कमध्ये भवेन्न कस्या अप्यवस्थायाः समाप्तिर्नवारम्भ इति विधिरायाति। अङ्कारम्भेऽवस्थारम्भः, अङ्कसमाप्तावस्थासमाप्तिः, यदा त्वङ्कद्वयं व्याप्य वर्ण्यत एकावस्था तदाद्याङ्कारम्भेऽवस्थारम्भः पराङ्कसमाप्तौ तु तस्याः समाप्तिः। गुप्ताचार्यमतादिदमप्यायाति यन्नार्हत्यैकावस्थाङ्कद्वयातिरिक्तं स्थलं व्याप्यावस्थातुम्।

गुप्ताचार्योक्तं कठोरं विधानं मन्ये नाङ्गीकृतं शास्त्रकारैः टीकाकृद्भिर्वा। अभिनवगुप्तस्य 'अवस्थासञ्चारिणः सन्धयः' इति मतं विश्वनाथेनापि स्वीकृतम्। परं तेनैव शाकुन्तले चतुर्थाङ्कादौ—'अनसूया—पिअंवदे जइवि गन्धव्वेण' इत्यत आरभ्य सप्तमाङ्के शकुन्तलाप्रत्यभिज्ञानात् प्रागर्थसञ्चयो विमर्षसन्ध्यन्तर्गत[10] इति निदर्शयता सार्द्धमङ्कत्रयं व्याप्य नियताप्तेरवस्थानं निर्णीतम्। नाट्यदर्पणे तु वेणीसंहारस्य तृतीय-चतुर्थ-पञ्चमाङ्काः प्राप्त्याशावस्थान्तर्गता इति सिद्धान्तितम्[11]। ढुण्ढिराजेन मुद्राराक्षसस्य प्रथमाङ्क एवाद्यावस्थाद्वयं परं पञ्चम-षष्ठ-सप्तमाङ्कव्यापिनी निर्वहणसन्धिसहसञ्चारिणी

फलागमावस्थेति विचारितम्। शाकुन्तलस्य प्रथमावस्थासहसञ्चारिमुखसन्धे-र्द्वितीयाङ्कमध्य एवावसानं तत्रैव च द्वितीयावस्थारम्भः, पञ्चमाङ्कमध्ये तृतीया-वस्थाशेषस्ततश्च चतुर्थावस्थारम्भ एवं निदर्शयता सन्ध्यवस्थासहसञ्चारित्वं स्वीकुर्वतापि राघवभट्टेनार्थद्योतनिकाया विरोधिमतमुक्तमभिनवगुप्तसम्मतमङ्का-वस्थासहसञ्चारित्वम्। शाकुन्तलस्य सन्धिविभागे विश्वनाथराघवभट्टयोर्न दृश्यत ऐक्यमल्पम्। परमिदमत्र स्पष्टं यदभिनवगुप्तप्रतिपादितं सन्ध्यवस्थाङ्काना सहसञ्चारित्वमन्यत्र गुप्ताचार्यमतमनुसरद्भिरपि पण्डितप्रकाण्डैर्न स्वीकृतम्। नाट्यदर्पणे तु गुप्ताचार्याणामुक्तं मतं वृद्धसम्प्रदायागतमित्युक्तम्[12]। इतिवृत्त तावत् सन्ध्यवस्थाभिर्विश्लिष्यते बोधसौकर्यार्थं नाट्यविचारार्थं वा परं रूपक-शरीरमङ्कैर्विभज्यते प्रयोजनान्तरसाधनाय, तच्च प्रयोजनं मञ्चे प्रयोग एव। अङ्कविभागनियामकं यत्तत् पश्चाद् वक्ष्यते।

नाट्यशास्त्रे तु सर्वथा कवीनां स्वातन्त्र्यं स्वीकृतम्। कुत्रापि नोक्तं तत्र यदङ्कैः सह सन्धीनामवस्थाना वा सहावस्थानमस्ति नास्ति वा, अभिनव-गुप्तानुगामिभिर्बहुभिः समर्थितं सन्ध्यवस्थयोरपि सहभावित्वं कुत्रापि मुनिना न कथितम्। सन्ध्यवस्थयोः सहभावित्वाभावपक्षेऽपि वर्त्तते मतं, बाहुल्यभिया तत् सर्वमत्र नालोचितम्। परमङ्कैरवस्थानां सन्धीनां वा सहसञ्चारित्वं न नाट्यशास्त्रसम्मतमिति प्रतिभाति। भिन्नप्रयोजनमेव साधयन्ति सन्ध्ययोऽवस्था अङ्काश्च। इदमत्रावधेयं यत् सहसञ्चारित्वाभावपक्षेऽपि नास्ति नियमः। यदि कुत्रापि रूपके भवति सन्ध्यवस्थासहभावित्वमङ्कस्य कस्यापि भवतु नाम, तत्र नास्ति निषेधः, परमत्र कोऽपि नियमो न वर्त्तते नाट्यशास्त्रे न वासो प्रतिपालितो दृश्यते प्राचीनरूपकेषु।

रूपकेऽङ्कसंख्याविषये नाटके प्रकरणे वा पञ्चादिका दशपरा अङ्का इति शास्त्रकाराणामाशयः। नियमश्चायं प्राचीनैरर्वाचीनैर्वा बहुभिरनुसृतः। उपलभ्यन्ते चार्वाचीनकालरचितानि नाटकसंज्ञाङ्कितान्यपि येषु नायं नियमः प्रतिपालितः। एकाङ्कं तु रविदासस्य मिथ्याज्ञानविडम्बनम्, द्व्यङ्कं तावद् वेदान्तवागीशस्य भोजचरितम्, त्र्यङ्कं घनश्यामस्य नवग्रहचरितम्, चतुरङ्कं

तु मधुसूदनस्य जानकीपरिणयम्, द्वादशाङ्कं तावत् कविभूषणस्याद्भुतार्णवम्। महानाटकस्य नाटकत्वं न स्वीक्रियते मनीषिभिः, कथकसम्प्रदायस्योपजीव्योऽयं ग्रन्थ इत्यध्यापकचरणानां शिवप्रसादभट्टाचार्याणां मतम्। प्रसङ्गेऽस्मिन् भासनाटकचक्रस्यापि कथा मनस्यायाति, परं बहुसन्देहसमाकीर्णमनन्तमतकण्टकितं तच्चक्रं तिष्ठतु नाम।

अवस्थानिरपेक्षा यद्यङ्कास्तर्हि कियत्परिमाणमितिवृत्तस्य तावदेकस्मिन्नङ्के निबन्धनीयमित्यत्र नाट्यशास्त्रे वर्त्तते सूत्रमेकम्,—'यत्रार्थस्य समाप्तिर्यत्र च वीजस्य भवति संहारः। किञ्चिदवलग्नविन्दुः सोऽङ्क इति सदावगन्तव्यः[14]। अभिनवगुप्तेन तु सम्प्रदायायातमतमेकमनुसरता 'प्रारम्भाद्यवस्थालक्षणोऽर्थो यत्र समाप्यते सोऽङ्कः' इति व्याख्यातं, स्वमतेनात्र 'त्रिविधा अङ्का निरूपिता' इति सिद्धान्तितम्[15]। सागरनन्दिना तु स्पष्टीकृतो मुनेराशय इति मन्ये। उक्तं हि तेन,—'यत्रार्थस्यानुषङ्गिकस्य समाप्तिः। वीजस्य प्रधानार्थस्यांशतः संहरणम्। स्तोकश्च विन्दोः प्रचारः सोऽङ्कादवगन्तव्यः'[16]। इतिवृत्तस्यानुषङ्गिककार्यरूपः कश्चिद्भागः पूर्णतया वर्णनीयोऽङ्के येन च भवति प्रधानार्थस्य समाप्तिरंशतः, विन्दुना च रक्ष्यते कथासूत्रम्। रूपके सम्पाद्यानि निबद्ध्यन्ते बहूनि कार्याणि येषां सुष्ठुसमापनं तावत् फलप्राप्तिरूपमर्थप्रकृतिशब्दवाच्यं प्रधानकार्य्यं साधयति। अवान्तरकार्यसम्पादनं तु प्रधानकार्यसम्पादने सहकारित्वमायाति। तस्य प्रधानकार्यस्य फलरूपस्यापि कारणत्वमिच्छाद्वारेति तस्यार्थप्रकृतित्वमव्याहतमिति गुप्ताचार्याणां मतम्। 'अर्थप्रकृतयः फलहेतवः' अभिनवगुप्तस्येदमपि मतं विचारसापेक्षम्। वर्त्तते चान्यैः स्वीकृतमर्थान्तरमपि संज्ञाया अस्याः। यथा तथा वास्तु, एकस्मिन्नङ्के प्रधानार्थस्यांशरूपं कार्यमेकं निष्पन्नं वर्ण्यते न तु तत्र बहुकार्यसमावेशः। अङ्के रङ्गे वा युगपद् बहुकार्याणां देवयात्रादर्शनोत्सुकजनतावद् बहुपात्राणां वा समावेशो न भारतीयनाट्यरीतिसम्मतः। एवं तर्हि कार्यस्यैक्यं तावदङ्करचनायामेकं मानम्।

अङ्के कालपरिमाणमधिकृत्य मुनिनोक्तम्—'एकदिवसप्रवृत्तः कार्योऽङ्कः सप्रयोगमधिकृत्य'[16] इति। उक्तमभिनवगुप्तेनास्य व्याख्यायाम्—'एकदिवस-

सम्पादितमुपयोगि चेष्टितमङ्के बध्नीया'दिति। सामान्यतो मतमिदं सर्वसम्मतम्। नाटकलक्षणरत्नकोशे तु मतद्वयमपरमुदाहृतम्,—'वासरार्द्धकृतो ह्यङ्क इति, एकरात्रीकृतमेकवासरकृतमङ्के वक्तव्यमिति' च[17]॥ एकदिवससम्पाद्यं कार्यमङ्के कर्त्तव्यमिति हि सामान्यविधिरनुसृता वा रीतिर्भारतीयनाट्यकारैः। यत्र तु रूपके दीर्घकालव्यापि पौराणिकमैतिहासिकं वेतिवृत्तं तत्र कथं कालातिवाहनं रूप्यत इत्यस्य प्रश्नस्य सुष्ठु समाधानम् अभिनवभारतीं विना न कुत्रापि समुपलभ्यते। सागरनन्दिना तु 'वर्षादूर्ध्वं न कदाचि'दिति मुनिवचनमुद्धरता संक्षेपेणैवोक्तम्—'यत्र तु कार्यवशात्कालभूयस्त्वं तदस्मिन्नङ्के प्रवेशकेन वक्तव्यम्। न वर्षादतिक्रान्तम्...'। वर्षं प्रत्यपि नास्ति तस्यास्था, तेनैवोच्यते 'तदेतद्-बहुकालप्रणेयं नाङ्के विधेयमित्यर्थः'इति[18]। विश्वनाथेनापि 'नानेकदिननिर्वर्त्य-कथया सम्प्रयोजितः' इति वदता सागरनन्दिमतमेवानुसृतम्। अन्यैरप्येवमेव कथितं, परं मूलसमस्यायाः समाधानं न केनापि दत्तम्। वर्षव्यापि यत् कार्यं तदङ्के कर्त्तव्यं, कार्याधिक्यं चेत्तर्हि प्रवेशकेन विष्कम्भकेन वा तद्वर्णनीयं संक्षेपत इति हि सर्वेषामेवाशयः। किं तर्हि रूपकेऽङ्कसंख्ययैवेतिवृत्तस्य कालपरिमाणमपि निर्णीयते? अपि च पूर्वमेव प्रदर्शितं यद्दिवसव्यापि कार्यमङ्के कर्त्तव्यमिति सर्वैरनुमतम्। अत्र तु कथं वर्षव्यापि कार्यमङ्के वर्णनीयमिति तैरेवोच्यते। अपि च रामचरिते यथा चतुर्दशवर्षारण्यनिवासस्तथा यस्मिन् रूपके बहुवर्षनिर्वर्त्त्यमितिवृत्तं तत्र किं वर्षसंख्ययाङ्कसंख्यापि निरूपिता भवेत्? तत्तु न कुत्रापि दृश्यते। सर्वेषामेषां प्रकृष्टं समाधानमभिनवभारत्यामेव समुपलभ्यते। उक्तं हि तत्र 'न च रामायणभारतादिचरितत्यागप्रसङ्गः।...यत्र हि यत्ननिष्पाद्यं सञ्चितं तदेव गण्यते, वर्षान्तराणि तु तत्र विद्यमानान्यपि अविद्यमानकल्पानि। रामचरिते हि चतुर्दशवर्षाण्यरण्यनिवासो यद्यपि कार्यः, वर्षाणि त्रिचतुराणि भवन्ति यत्र मारीचवधसुग्रीवराज्यदानाद्यवान्तरकार्यं सम्भवति। तस्माद्वर्षादूर्ध्वमित्यनेन कार्यं वर्षद्वयादि निषिध्यत इत्येवं वर्षसहस्रायुषोऽपि वर्षशतान्तरालवृत्तचरितव्याख्यानेऽपि न किञ्चिद्दुष्यति। तेन पञ्चाङ्के नाटके पञ्च कार्यदिनानीति संक्षेपः, दशाङ्के तु दशेति विस्तरः[19]।

दृश्यं श्रव्यं वा काव्यं न कुत्रापि दिनपञ्जिका न वा सर्वथा जीवनचरितम्। समग्रा कथा काव्ये कुत्रापि नाविकलमेवोपनिबध्यते। तत्र च रूपकेतिवृत्ते यानि तावदभिनेयानि तान्येव स्थानं लभन्ते। बहुवर्षव्यापिन्याः कथाया रसानुगुणतयाभिनेया निर्वाचिता एवांशविशेषा नाट्योपयोगित्वं यथाप्राप्यन्ते तदेव जायते तेषां रूपकेतिवृत्तत्वम्। एवं बहुवर्षव्यापिनायकचरितादपि नाट्योपयोगीनि स्वल्पान्येव कानिचिद्वर्षाणि गृह्यन्त इतिवृत्ते। तत्र चैकस्मिन् वर्षे यद्यत् संघटितं तत् सर्वमेकदिवससंघटितमिति कृत्वा निबध्यत एकस्मिन्नङ्के। अङ्के तावद् भवेदेकदिननिर्वर्त्यमेव कार्यमिति शास्त्रकाराः, तच्च दिनं कार्यदिनमिति संज्ञया परिचितं प्राचीनभारतीयनाट्यसमालोचनासाहित्ये। एवमेकस्मिन्नङ्के एकमेव कार्यदिनं नाधिकम्। मूलकथाया एकस्मिन वर्षे यत् संघटितं तदेकस्मिन् कार्यदिने संघटितमिति कृत्वा एकाङ्के वर्ण्यते। रामायणादिषु वर्णितमेकस्मिन् वत्सरे यद्यत् संघटितं ततोऽभिनेयं नाट्योपयोगि च सर्वमेकदिवससंघटितमिति कृत्वैकाङ्के निबध्यते। यदि कार्यबाहुल्यं यदि वा कथासूत्ररक्षणप्रयोजनं तदा प्रवेशकविष्कम्भकयोरेकतरस्याश्रयणं विधीयते। इयमेव शैली कविसम्प्रदायेन चानुसृता। संस्कृतरूपके दिवसनिर्वर्त्यादधिकं कार्यमेकाङ्के समाविष्टं न दृश्यते। परमेकदिवसनिर्वर्त्यं कार्यमेकाधिकाङ्कनिबद्धं दृश्यते। उत्तररामचरिते द्वादशवर्षाधिककालव्यापि वस्तु कार्यदिनत्रये संहृत्य सप्तस्वङ्केषूपनिबद्धं भवभूतिना। तत्र प्रथमे सप्तमे चाङ्के एकैकं कार्यदिनम्। परं द्वितीयाङ्कमारभ्य षष्ठाङ्कं यावदेकमेव कार्यदिनमित्यनुसन्धेयम्। तत्रापि च वर्त्तते विष्कम्भकचतुष्टयम्। न चात्र लङ्घितं भवभूतिना नाट्यशास्त्रस्य किमप्यनुशासनम्। परमेकस्मिन्नेव कार्यदिने घटनाबाहुल्यमङ्कविष्कम्भकबाहुल्यं वा नाट्यरसिकेभ्यो न रोचतेतरामिति मन्ये। इदं तद्यायातं यदङ्कनिर्माणे कार्यस्यैक्यमिव कालस्यापि किमप्यैक्यं भारतीयनाट्यतत्त्वसम्मतम्।

कानि तावदङ्के न प्रत्यक्ष दृश्यतया वर्णनीयानि कानि च नाट्ये निषिद्धानीति प्रकरणद्वयमभिकृत्यापि वर्त्तते विप्रतिपत्तिबाहुल्यम्। अनयोरेकं परतो भिद्यते न वा तत्राप्यस्ति सन्देहः। अङ्के मुनिना केषां प्रत्यक्षदृश्यत्वमनुमतं केषां वा

तन्नानुमतमित्येतदादौ विचार्य्यते। अस्मिन् प्रसङ्गे नाट्यशास्त्रे अष्टादशाध्याये वर्तेते श्लोकौ,—'क्रोधप्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ।

अद्भुतसंभवदर्शनमङ्के प्रत्यक्षजानि स्युः॥

युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव।

प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि[20]॥

मातृकायामेकस्यां प्रथमश्लोकस्य—

'शोक-प्रसाद-विद्रव-शापोत्सर्ग-प्रसाधन-क्रोधाः।

उत्साहोऽद्भुतदर्शनमङ्कैः प्रत्यक्षजानि स्युः'॥

इति पाठो दृश्यते, अनुसृतश्चायं पाठो भोजराजेन[21]। प्रथमश्लोके यानि तावदङ्के प्रत्यक्षदृश्यानि कार्याणि तेषामेव संग्रह इति सागराभिनवभोजदेवानां मतम्। शापोत्सर्गशब्दस्यार्थमवलम्ब्य मतभेदो वर्त्तते सागराभिनवयोः। शापोत्सर्गः शापप्रदानमिति सागरनन्दी, शापकृतस्यानर्थस्य नाश इत्यभिनवगुप्तः। नाट्यदर्पणेऽपि दृश्यते गुप्तपादमतानुसरणम्[22]। शाकुन्तले शापप्रदानं तु न प्रत्यक्षदृश्यम्, नेपथ्ये कृतं तत्, तच्चापि विष्कम्भके नाङ्के संघटितम्। शापप्रदान रूपके कुत्रापि नाङ्के प्रत्यक्षदृश्यतया वर्णितमुपलभ्यते, यद्यपि सागरनन्दिनस्तत्रापि नास्त्यापत्तिः। प्रथमश्लोके कथितानां क्रोधादीनामन्येषां त्वङ्के प्रत्यक्षदृश्यरूपेण समुपस्थापनं तावत् सागराभिनवभोजानां सम्मतम्। रञ्जनातिशयोऽस्तीति प्रदर्शनमङ्के कर्त्तव्यमेतेषामिति परिगणनाभिप्राय इति मतमभिनवगुप्तस्य। उक्तं च तेन, 'यत्र रञ्जनातिशयोऽस्तीति दर्शयन्नाह क्रोधशोक'[23] इति। रामचन्द्रगुणचन्द्राभ्यामपि 'शापावसानविवाहादयोऽपि रञ्जकत्वात् साक्षात्कार्याः'[24] इत्यभिनवगुप्तमतमेवानुसृतम्।

द्वितीयश्लोके परिगणितानि युद्ध-मरण-राज्यभ्रंश-नगरोपरोधनानि तु नाङ्के प्रदर्शनीयानि प्रवेशके विष्कम्भके वा वर्णनीयानीति शास्त्राशयः। परमत्राप्यस्ति विचारणीयं किञ्चिद्विशेषतो मरणप्रदर्शनमवलम्ब्य। इदञ्चात्र स्मर्तव्यं यदङ्के कार्य्यं किमपि सविस्तरमेव निबध्यते न तु संक्षेपतः। मरणमन्तरेणान्येषां युद्धराज्यभ्रंशादीनां निषेधे कारणं वर्त्तते। अङ्के प्रदर्शन-

मेतेषां तावद् भरतवर्णितमञ्चे न सम्भाव्यते। यन्त्रचालितेऽप्याधुनिके मञ्चे सविस्तरमेतेषामभिनयः कष्टसाध्य एव। अतो निषेधोऽयं शास्त्रस्य व्यवहारिकज्ञानमेव प्रकटयति। प्रथमश्लोके येषामुल्लेखस्तेषामभिनयस्याङ्के निषेधस्तु कथमपि न युज्यते यद्यपि धनञ्जयविश्वनाथादिभिर्निषेध एव समर्थित.। तेषामर्वाचीनकालीनग्रन्थकृतामिदं निषेधवचनं नाट्यकारैरपि न सम्मानितं दृश्यते। क्रोधादीनामभिनये का क्षतिः? वेणीसंहारे तु प्रत्यङ्कमेव दृश्यते क्रोधावतारः। प्रसादस्य शोकस्य वाभिनयस्तु यत्र तत्र रूपकेषु वर्त्तते। अभिनवगुप्तसम्मतशापोत्सर्गेऽपि का वापत्तिः? विद्रवस्तु सन्ध्यङ्गमेकम्। अङ्के यदि प्रदर्शनमस्य निषिद्धमेवेति मुनेराशयः कथं तर्हि सन्ध्यङ्गमध्ये तस्य परिगणनम्? विद्धशालभञ्जिकायां राजशेखरेण तु विवाहश्चित्रित एवाङ्के। पार्वतीपरिणयस्य विवाह एव मुख्यं वृत्तम्। अतः प्रथमश्लोकस्य निषेधपरत्वेन व्याख्या कथमपि न युज्यते।

प्राचीनभारतीयनाट्ये मरणप्रदर्शनं सर्वथा निषिद्धमेवासीदिति मतं नाट्यसमालोचकानाम्। ते तु मन्यन्ते यद्भरतेन नाट्ये मरणं सर्वथा निषिद्धम्। आदावेवात्र स्मर्तव्यं यदुदाहृते द्वितीयश्लोके त्वङ्के मरणप्रदर्शनं निषिद्धं मुनिना न नाट्ये न वा रङ्गे। समालोचनाजर्जरिता भाससमस्यापि विचार्यते पण्डितैः रङ्गे मरणप्रदर्शनं निषिद्धं मुनिनेति मन्यमानैः। प्रतिमायां दशरथस्य, अभिषेके वालिनः, कंसारिष्टचाणूराणा वालचरिते, दुर्योधनस्योरुभङ्गे मञ्च एव दृश्यं मरणं वर्णयता भासेन हि नाट्यशास्त्रानुशासनमवमानितमथवा भरतपूर्वकालवर्त्ती भास इति हि संक्षेपतस्तेषां पण्डितानां सिद्धान्तः। दशरूपकादीनामर्वाचीनकालरचितानां शास्त्रग्रन्थानामपि मते न मरणप्रदर्शनं रङ्गे सर्वथा निषिद्धम्, मरणं तावत् प्रवेशके विष्कम्भके वा संक्षेपतो वर्णनीयं नाभिनेयम्। अत्रापि वर्जनीयं प्रधाननायकस्य नायिकाया वा मरणम्। यदि वा वर्ण्यते मरणं तयोरेकतरस्य द्वयोर्वा तर्हि प्रत्युज्जीवनं प्रदर्शनीयं यथा जीमूतवाहनस्य नागानन्दे वसन्तसेनायाश्च मृच्छकटिके। ऽधाननायक-नायिकाविषये मुनेरप्ययमेव निर्देशः[25]। संस्कृतरूपकस्य परिसमाप्तिस्तावद् भवेन्नायकस्याभ्युदय-

वर्णनेनेति नाट्यशास्त्रमतमतो नायकस्य नायिकाया वा प्रत्युज्जीवनशून्यं मरणं कथमपि न सम्भाव्यते। अतोऽस्य निर्देशस्याशयस्तावत् स्फुट एव। ये तावत् प्रतिनायका रावणकंसदुर्योधनादयस्तेषां वधस्तु रूपके प्रवेशकादिना वर्णनीय एव न त्वङ्क अभिनेय इत्ययमेव ऽ।चीनभारतीयनाट्यसमय इति विदुषां मतम्।

अत्र सन्दोहो वर्त्तते। अभिनवगुप्तेन समालोचितं केषाञ्चित् प्राचीनानां मतं यैस्तु रङ्गे सर्वथा मरणं नाभिनेयमिति न स्वीक्रियते। आशयस्तेषामेव-मुक्तश्चाभिनवगुप्तेन,—'मरणं द्विविधं, किञ्चिदन्यसम्बन्धिन्या क्रियया सम्पाद्यं यथा चक्रेण दैत्यस्य शिरश्छेदः, किञ्चिदन्यसम्बन्धिक्रियानैरपेक्ष्येणैव व्याध्याभि-घातादिप्रभवम्। तत्राद्यस्यैव निषेधः क्रियते'[26]। प्राचीनानामेषामाशयस्तु स्पष्ट एव, मतमपि तेषां नाट्यप्रयोगे व्यवहारिकज्ञानस्य प्रमाणम्। मञ्चे शिरश्छेदादिरूपस्य मरणस्याभिनयोऽद्यापि न सुकर एव। अभिनवगुप्तेन तु मरणमिदं प्रयोज्यमिदमप्रयोज्यमित्यत्र विषयविभागनिदानं न स्वीक्रियते। मरणं नाट्ये न प्रयोज्यमिति प्रयोगसौकर्यमेव मनसि कृत्वा तेनोक्तम्। अत्र तेनैवोच्यते,—'मृतस्य कथं निष्क्रमणं कथ व्यवस्थानं ततो नाट्योपयोगिसमस्त-ध्रुवागानादिप्रक्रियाविलोपः सामाजिकानां विरसताप्रतिपत्तिरिति तु सर्वत्र मरणं समानं तस्माद्रङ्गे मरणमप्रयोज्यमेवेति'। प्रीचीनमपरं मतमुपस्थापय-ताभिनवगुप्तेन त्वालोचनाया अस्या उपसंहारः कृतः। आशयस्तस्य हि नाट्ये व्याधिजमभिघातजं परमपुनर्जनिनिष्क्रान्तिरहितमेव मरणं प्रयोज्यम्। यत्र न विद्यते निष्क्रमणप्रयोजनं न च यत्र मृतसनाथे रङ्गे प्रवर्त्तत अभिनयस्तत्र मरणप्रदर्शनं युज्यते यथाङ्कस्य रूपकस्य वान्तभागे यत्र यवनिकया सर्वमाच्छाद्यते मञ्चपुरोवर्त्तियवनिकाया अस्तित्वं तु प्रचीनभारते आसीदित्यस्माकं मतं, प्रमाणानि तस्य प्रबन्धकलेवरमतिमात्रं न वृद्धिं गच्छेदिति नोपन्यस्तान्यत्र। वारान्तरे तदालोचयिष्यते।

इदं तर्ह्यायातं यत् प्राचीनभारते आसन् केचिन्नाट्यकाराः समालोचकाश्च रङ्ग मरणप्रदर्शनं यैरनुमतम्। इदमपि द्रष्टव्यं यदुक्त एव मरणप्रदर्शननियमो

भासनाटकेषु प्रतिपालितः। नालिदशरथारिष्टाणां मरणदृश्यं तु तत्तन्नाटके अङ्कसमाप्तिपूर्वक्षण एव समुपन्यस्तम्। दुर्योधनस्य तु मरणमविगतस्य रूपकस्यान्तिमदशायामेव कंसचानूरमुष्टिकानां मरणमपि बालचरितस्य शेषाङ्क एव च वर्णितम्। नाट्यशास्त्रे तु मरणादीनि 'प्रसक्तानि नाङ्क प्रवेशकैः संविधेयानि' इत्युक्तम्। इदमत्र वक्तव्यं यन्नाट्ये किञ्चित् सूच्यं विष्कम्भकप्रवेशकैः कियद्वाङ्के दृश्यं श्रव्यमेवं विषयविभागो नाट्यशास्त्रे कुत्रापि नास्ति। अतः 'प्रवेशकैः संविधेयानि' इत्यस्य प्रवेशके विष्कम्भके वा प्रयोज्यानि संक्षेपत इति भरताभिमत एवार्थः। भरतमतेन तु यदङ्के प्रयोज्यं तत्तु विस्तरत एव प्रवेशके विष्कम्भके वा संक्षेपत इति विशेषः। अतो भरतमतेनापि मन्ये नाट्ये मरणं न सर्वथा निषिद्धम्। अपि च नाट्यशास्त्रस्य सप्तमाध्याये व्यभिचारिभाववर्णनाप्रसङ्गे व्याधिजमभिघातजञ्च मरणं वर्णितं तयोरभिनयविशेषा अपि तत्रैवोक्ताः। पुनः पञ्चविंशाध्याये नानाकारणजन्यानां विभिन्नप्रकारमरणानामभिनयप्रकार उपदिष्टः, दशमे चाध्याये दृश्यते युद्धाभिनयस्याप्युपदेशः। मञ्चे निषिद्धानां कथं वाभिनयप्रकारोपदेशो युज्यते? अतोऽङ्के निषिद्धाना युद्धादीनामपि न सर्वथा नाट्ये निषेधो मुनेरभिप्रेतः। भासनाटकचक्रादन्यत्रास्माभिरधिगतानां प्राचीनरूपकाणां कुत्रापि सविस्तरं युद्धाभिनयः (यथा बालचरिते) प्रत्युज्जीवनविहीनमरणाभिनयो वा न दृश्यते। परं तेनैव प्राचीनभारते नासीन्मरणाभिनयप्रदर्शनमिति न प्रमाणितं भवति। भासनाटकचक्रं तथा पूर्वोदाहृताभिनवगुप्तकृतसमालोचनैव तत्र प्रमाणम्। अविद्यमानायाः कस्या अपि नाट्यरीतेः समालोचना कृताभिनवगुप्तेनेति चिन्ता नायाति कस्यापि मनसि।

नाट्यशास्त्रे तावन्नाट्ये निषिद्धानां मञ्चे निषिद्धानां वा परिगणनाद्वयं दृश्यते। तत्र द्वाविंशेऽध्याये उत्तममध्यमप्रकृतीनां प्रमदानामाचरणनिरूपणप्रसङ्गेनोक्तम्—

> नाम्बरग्रहणं रङ्गे न स्नानं न विलेपनम्।
> नाञ्जनं नाङ्गरागश्च केशसंयमनं तथा॥

नाप्रावृता नैकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि कुर्वीत प्रमदा क्वचित् ॥

—तस्मिन्नेवाध्याये पुनरप्युच्यते

न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
... ... ... ॥
यद्वा शयीतार्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनं चैव तथा गुह्यं च यद् भवेत् ॥
दन्तच्छेद्यं नखच्छेद्यं नीवीभ्रंशनमेव च ।
स्तनान्तरविमर्दं च रङ्गमध्ये न कारयेत् ॥
भोजनं सलिलक्रीडा तथा लज्जाकरं च यत् ।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत् ॥

किं कारणमस्य निषेधस्य । तत्रोच्यते तत्रैव,—

पितापुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥

—परिगणनाद्वयमिदं प्राचीनभारतीयनाट्यशास्त्रकाराणां वास्तवबुद्धिं तथा तदानीन्तनसमाजजीवनस्योन्नततरां नैतिकावस्थां प्रकटयति । शालीनता शिष्टाचारो वा यदि समाजजीवने स्वीकृतिं न लभते तर्हि नाट्ये साहित्ये वा तस्य प्रतिरूपणं नोपलभ्यते । लज्जाकरमशोभनं सर्वमेव भारतीयनाट्ये निषिद्धम् । परिगणनाद्वयमपि न सम्पूर्णमतो मुनिनैवोक्तम् 'एवंविधं भवेदि'त्यादि । सामाजिकानां रुचिरेवात्र प्रमाणं कविना सूत्रधारेण वा सैव रुचिरनुसर्तव्येति नाट्यशास्त्रस्याशयः । कथमेषां निषेध इति कारणमपि मुनिना यदुक्तं 'पितापुत्रा'दिना ततो युक्ततरं किमपि कारणमस्तीत्यस्माभिर्न चिन्त्यत एव । स्मर्त्तव्यं चात्र व्रीडाजुगुप्साव्यञ्जकत्वादश्लीलत्वमिति वचनमालङ्कारिकाणामपि ।

भारतीयरूपकेषु सामन्यत उक्तनिषेधवचनमनुस्रियते । उत्तररामचरितस्य

प्रथमाङ्के रामचन्द्रस्योरसि निपत्य निद्रां नाटयति सीता सस्नेहं च तां परामृशति रामचन्द्रः, परमत्रापि शालीनताया मर्यादा लङ्घितेति केनापि निन्दकश्रेष्ठेणापि वक्तुं शक्यते। त्रिद्वशालभञ्जिकायां तु चारायणपत्नी मञ्चे निद्रां नाटयति परमेकाकिनी। कालिदासेनापि शकुन्तलायाः प्रसाधनं क्षौमयुगलपरिधानं च मञ्चेऽभिनेयतया सन्निवेशितम्। विदितमेतत् सर्वेषां नाट्यरसिकानां यदत्र प्रसाधनादिना महन्नाट्यप्रयोजनं साधितम्। तत्तु सर्वं प्रेक्षावतां समक्षमेवाभिनेतव्यं पराङ्के प्रत्याख्यानदृश्यस्य मर्मोद्घाटनमेव तस्य प्रयोजनम्। परं केन प्रकारेण तत्सर्वमभिनेतव्यमिति सूत्रधारेण स्थिरीकर्त्तव्यम्। कथमपि प्रेक्षावतां दृष्टिविघातमुत्पाद्य पटान्तरिता वा धृतवल्कलैव वा शकुन्तला क्षौमयुगलेन प्रसाधयितव्या सखीद्वयेन। समाजरुचिं विजानता सूत्रधारेणैव निर्णेयं मञ्चे किं वस्तु केनोपायेन वाभिनेतव्यम्। एतदर्थमेवोक्ते निषेधवचने कारयेदिति शिक्षा निर्देशः कृतो मुनिना।

नाट्यशास्त्रस्याष्टादशाध्याये अङ्के निषिद्धानां या परिगणना दृश्यते युद्धमित्यादिना तात्पर्यं तस्या आलोचितम्। द्वाविंशेऽध्याये नाट्ये निषिद्धानां यत् परिगणनाद्वयं तस्यायमाशयः,—एवं किमपि नाभिनेतव्यं येनारुचिर्जायते प्रेक्षावतामिष्टपरिवेशरचनारसपुष्टिर्वा व्याहन्यते। इदमत्रावधेयं यत् काव्ये नाट्ये तथा सर्वस्मिन्नेव शिल्पे एतादृशः प्रतिषेधस्तावत् समाजसंस्कृतिगत विधिनिषेधादिकमपेक्ष्य प्रवर्त्तते। तेषां विधिनिषेधानां पूर्णा परिगणना कदापि न सम्भाव्यते। युगे युगे परिवर्तते हि समाजरुचिरिति प्रत्यक्षसिद्धमेव। मुनिरपि तज्जानन्नेव पूर्णां परिगणनां न दत्तवान्। निषिद्धानां केषाञ्चिदभिनयव्यवस्थापि प्रचलिता स्यदिति रूपकेभ्यो ज्ञायते। तर्हि नाट्यादर्शमेकं निर्दिशता मुनिना कविसूत्रधारानुद्दिश्य सावधानवचनमुच्चारितिमिति नाट्यशास्त्रोपनिबद्धस्य नाट्ये निषिद्धस्य तात्पर्यमिति मन्ये।

अर्वाचीनकाले धनञ्जयप्रमुखाः शास्त्रकारा नाट्यशास्त्रे विभिन्नेऽध्याये भिन्ने च प्रकरणे यद्यन्निषेधवाक्यं दृश्यते तत् सर्वमेकीकृत्य, नाट्य

निषिद्धानामेकामेव परिगणना दत्तवन्तः। विश्वनाथेन तु विवाहोऽपि नाट्ये न प्रत्यक्षदृश्य इति कथितम्। फलमस्य तु निषेधवचनमेषा प्राचीनरूपकेषु नानुसृतं दृश्यते, तत्तु संक्षेपत एवालोचितमत्र। सङ्कीर्णदृष्टीनामेषां प्रचेष्टया शृङ्गारस्यातिप्रथनं तथा महाकाव्यसुलभां वर्णना विहायान्यत् कर्मजात नाट्यात् क्रमेण निर्वासितमभवत्, कालक्रमेण च सर्वथा वैचित्र्यहीनं जातं भारतीयनाट्यम्। कारणान्तराण्यप्यस्य सन्ति। इदमप्यत्रानुसन्धेयं यत् शास्त्रकाराणामियं प्रचेष्टा धनञ्जयादीनां कालाद्बहुपूर्वमेवारब्धा।

अङ्कैः रूपकशरीरस्य विभजनमासीत् सुप्राचीनकालादेव भारते वर्षे प्रचलितम्। अश्वघोषभासशूद्रककालिदासानां रूपकाणि तथा नाट्यशास्त्रमेव तत् प्रमाणीकुर्वन्ति। मन्ये नाट्यरीतिरेषा भारतवर्षे एव प्रथममाविर्भूता। प्राचीनग्रीसदेशीयरूपकेष्वङ्कविभागो नासीत्। संस्कृतरूपकेऽङ्कः कदापि दृश्यैर्न विभज्यते। अङ्के वर्त्तते कार्यस्य तथा कालिकमैक्यमिति प्रदर्शित-मस्माभिः, परं दैशिकमैक्यं तत्र नावश्यकतया गण्यते। एकस्यामेव पट-भूमिकायां स्थानस्यैक्यं सर्वथा मानयन् प्रवर्त्तितोऽभिनयांशो दृश्यशब्देनोच्यते आधुनिकनाट्ये। प्रायेण सर्वत्र संस्कृतरूपके एकैकस्मिन्नङ्के एकाधिकानि वर्त्तन्त आधुनिकपरिभाषासम्मतानि दृश्यानि। को वासीदेषामभिनयप्रकारः कथं वा ज्ञापितमभवद्दृश्यान्तरं कक्ष्याविभेदस्य वा नियमः कीदृश आसीदिति सर्वमत्र नालोचितं बाहुल्यभिया।

## निर्देशाः

अभिनवभारतीसहितं

नाट्यशास्त्रम् (नाः शाः)
　　प्रथमखण्डम् (१)
　　द्वितीयखण्डम् (२)
　　तृतीयखण्डम् (३)
अभिनवभारती (अः भाः)
} गायकवारस्य आरियेण्टल-सिरिजाख्यग्रन्थमालातः

सागरनन्दिनो नाटकलक्षणरत्नकोशः ( नाः लः रः कोः )
दशरूपकम् ( द. रूः )—निर्णयसागरसंस्करणतः
साहित्यदर्पणम् ( साः दः )—लक्ष्मीटीकासमेतम्
नाट्यदर्पणम् ( नाः दः )—द्वितीयसंस्करणम्
शृङ्गारप्रकाशम् ( शृः प्रः )—मैसूर नगरीतः प्रकाशितं रामानुजज्योतिषिकेण

१। नाः शाः, १६।१ ; २। अः भाः (३), पृः १ ; ३। नाः लः रः कोः. पः २३७ ; ४। नाः शाः, १८।१४ ; ५। अः भाः (२), पृः ४१५, ४१८ ; ६। दः रूः, पृः ७० ; ७। नाः शाः, १८।१३ ; ८। नाः लः रः को', पः २३८-२३६ ; ६। अः भाः (१), पृः ४१५-४१६ ; १०। साः दः, पृः ३५८ ; ११। नाः दः, पृः ३२, ४६ ; १२। नाः दः, पृः ३२ ; १३। नाः शाः, १८।१६ ; १४। अः भाः (२), पृः ४१६ ; १५। नाः लः रः कोः, पः २४७-८८ ; १६। नाः शाः, १८।२१ ; १७। नाः लः रः कोः, पः २६८-२६६ ; १८। नाः लः रः कोः, पा २६६-३०२ ; १६। अः भाः (२), पृः ४२३ ; २०। नाः शाः, १८।२०, ३८ , २१। शृः प्रः (२), पृः ४६२ ; २२। नाः दः, पृः ३१ ; २३। अः भाः (२), पृः ४१८-४१६ ; २४। नाः दः, पृः ३१; २५। नाः पाः, २८।३६-४० ; २६। अः भाः (२), पृः ४२६-४२७।

# नाट्यकार-श्रीहर्षस्य प्रकीर्णा रचना

[ निबन्धकः—श्रीध्यानेशनारायणचक्रवर्ती
साहित्यशास्त्री एम्, ए, ]

सुचिरप्रसारिते निखिलभारतस्यैतिहासे स्थाण्वीश्वराधिपतिर्महाराजः श्रीहर्षवर्धन-शीलादित्यः खल्वासीत् कश्चिन्महान् पुरुषः। ईषवीय ६०६ अब्दात् ६४७ अब्दं यावत् स महाराजो विशालं साम्राज्यं प्रशशासेत्यस्मिन् विषये विद्यन्ते बहून्यैतिहासिकप्रमाणानि। साहित्यसंस्कृतेर्वदान्यः पृष्ठ-पोषकोऽसौ महाराजः स्वयमप्यासीत् निपुणः कविः। "प्रियदर्शिका नागानन्दं रत्नावलीति दृश्यकाव्यत्रयं तस्यैव राज्ञो लेखनीप्रसूतमित्यत्र नास्ति कश्चित् सन्देहः। विषयमेतमवलम्ब्य बहुशो मया विविधासु गवेषणापत्रिकासु सप्रमाण-मालोचितम्।

पूर्वोल्लिखितं बहुविदितं दृश्यकाव्यत्रयमृतेऽपि श्रीहर्षोऽपराणि श्रव्यकाव्यानि दृश्यकाव्यानि च विरचितवानित्यत्रापि प्रमाणानि विद्यन्ते। सारस्वत-साधनासिद्धस्यास्य राज्ञो रचनामाधुर्येण सहृदयानां चेतांस्यावर्जितानि, तस्यामित-वीर्यप्रभावात् पराजयशंकया न केवलं प्रकम्पितानि शत्रूणां मनांसि। ताम्रलेख-शिलालेखादिपुरालेखवृत्तान्तकनापैरिदं सुस्पष्टं प्रमाणीक्रियते यदयं श्रीहर्षो दृश्यकाव्यत्रयव्यतिरिक्तानि अपराणि च काव्यानि विरचितवान्। विषयेऽस्मिन् श्रीहर्षस्य शोणपथमुद्रा, वाँशखेराताम्रलिपिः, मधुवनताम्रपट्टानि च प्रमाणानि। वाँशखेराताम्रपट्टे श्रीहर्षस्य स्वकीयहस्ताक्षरं विद्यते। तत्रेदं लिखितमास्ते यत्—"स्वहस्तो मम महाराजाधिराज-श्रीहर्षस्ये"ति। तत्र हस्ताक्षरस्य रुचिरत्वं श्रीहर्षस्य समुन्नतं वैदग्ध्यं कलानैपुण्यञ्च प्रमाणीकरोति। उभे ताम्रशासने खलु दानपत्र एव। भूमिदानमुपलक्ष्य विरचितेऽस्मिन् पत्रद्वये महाराजस्यास्य वंशधारा समुल्लिखिता। छन्दोबद्धाः केचिच्छ्लोका उभयत्रैव दृश्यन्ते।

"बाँशखेरा-ताम्रपट्ट" दृश्यमानः शार्दूलविक्रीडितच्छन्दसा विरचितोऽयमुल्लिख्यमानः लोकः श्रीहर्षस्य काव्यप्रतिभायाः सुमहन्निदर्शनम्। "मधुवनपट्ट"ऽपि दृश्यतेऽयं श्लोकः। शत्रूणां विश्वासघातकतया हर्षाग्रजो राज्यवर्द्धनो निहत इत्यस्मिन् श्लोके वर्णितमास्ते।—

"राजानो युधि दुष्टवाजिन इव श्रीदेवगुप्तादयः
कृत्वा येन कशाप्रहारविमुखाः सर्वे समं सख्यताः।
उत्खाय द्विषतो विजित्य वसुधां कृत्वा प्रजानां प्रियं
प्राणानुज्झितवानरातिभवने सत्यानुरोधेन यः॥

वसन्ततिलकच्छन्दसा रचिते कस्मिंश्चिदपरस्मिन् श्लोके राजैश्वर्यलाभाय देवीं लक्ष्मीमेवाराधायति महाराजः।—

"अस्मत्कुलः क्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम्।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया दानं फलं परयशःपरिपालनञ्च॥"

अन्यस्मिन् श्लोके हर्षेणोक्तं यत् सर्वथा प्राणिनामार्त्तिनाशनमेव जनानां धर्माजनोपायो भवत्विति।

"कर्मणा मनसा वाचा कर्तव्यं प्राणिने हितम्।
हर्षेणैतत् समाख्यातं धर्मार्जनमनुत्तमम्॥"

इदं लैपिकं वास्तवप्रमाणद्वयं हर्षस्य कवित्वप्रतिभा स्पष्टमुद्घोषयतीत्यत्र नास्ति कश्चन सन्देहावसरः। श्रीहर्षेण प्रकीर्णाश्च बहवः श्लोकाः प्रायशो विरचिता इत्यप्यनेन प्रमाणीक्रियते।

सुप्रभातस्तोत्रम्—अष्टमहाश्रीचैत्यसंस्कृतस्तोत्रमिति क्षुद्रं काव्यद्वयमपि तेन विरचितम्। हर्षस्य जीवनस्रोत्तरार्धे या खलु बौद्धधर्मप्रीतिः सन्दृश्यते, तस्याः फलश्रुतिरेव काव्यद्वयम्।

मालिनीच्छन्दसा निबद्धैश्चतुर्विंशतिश्लोकैः सुप्रभातस्तोत्रनामकं काव्यमिदं श्रीहर्षो विरचयामास। उषसि भगवन्तं तथागतमुद्दिश्योद्गायनार्थं परिकल्पितमिदं काव्यम्। काव्येऽस्मिन् लेखकरूपेण श्रीहर्षस्य नाम समुल्लिखितमास्ते।

केवलं पञ्चभिः श्लोकैर्विरचितम् अष्टमहाश्रीचैत्यसंस्कृतस्तोत्रनामक काव्यकम्। तत्र मन्दाक्रान्ताच्छन्दसा विरचितः खलु प्रथमश्लोकः। अपरञ्च श्लोक-चतुष्टयं स्रग्धराच्छन्दसा विरचितम्। बौद्धमन्दिराष्टकमुपलक्ष्य विरचितमिदं खलु काव्यम्। काव्यस्यास्य संस्कृतभाषामयं मूलं रूपं विलुप्तिं गतम्। केवलं चैनिकभाषया तस्यानुवाद एवाधुना लभ्यते। एतन्मूलसंस्कृत-काव्यस्य रचयिता खलु शीलादित्येति नाम्ना ख्यातः कश्चिन्नरपतिरिति प्रख्यातचैनिकपरिव्राजकेन हिउ-एन् साङ् महोदयेन कथितम्। अनेनैव नाम्ना केवलं श्रीहर्ष एव परिचित आसीदिति सर्वेषां विदितम्।

दृश्यन्ते खलु सुरभाषया रचितानि बहूनि सुभाषित-कोषकाव्यानि। तानि पुनः संस्कृतकवितानामाकरस्थानानि। तेषु ग्रन्थेषु तावत् संकलितं सत्कवीनां रसावहं सहृदयहृदयावर्जनकरं प्रख्यातं कवितागुच्छम्। सुभाषितरत्न-भाण्डागारे सदुक्तिकर्णामृते सुभाषितावल्यामपरेषु चैतादृशेषु ग्रन्थेषु नाट्यकार-श्रीहर्षविरचिताः साकल्येन षट्पञ्चाशच्छ्लोकाः परिदृश्यन्ते। श्लोकाश्च ते सदुक्तिकर्णामृते, कवीन्द्रवचनसमुच्चये, सुभाषितावल्याञ्च बाहुल्येन विद्यन्ते। एतेषु त्रिषु ग्रन्थेषु कतिचित् श्लोकाः साधारण्येनापि दृश्यन्ते। एषु ग्रन्थेषु संकलितानां श्रीहर्षरचितकतिपयश्लोकानामाकरस्थानं खलु प्रियदर्शिका, नागानन्दं, रत्नावली चेति दृश्यकाव्यत्रयम्। अपरे च श्लोकाः खल्वपि श्रीहर्षरचितेभ्योऽपरेभ्यो नाटकेभ्यः समुत्कलिता इत्यनुमीयते। एतेषामपि संलापो नाटकोचितः। यथा तथा वा भवतु नाटकत्रयेण साकं बहूनि प्रकीर्णरचनान्यपि नाट्यकारस्यास्य महाराजश्रीहर्षस्य लेखनीप्रसूतान्यासन्नित्यत्र सर्वेषामेवास्माकमैकमत्यं वर्तते। अतो वयमपि वक्तुं शक्नुमः—

"श्रीहर्षो निपुणः कविरिति"।

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

Vol. L. Nos. 5-6

१८८६ शकीये भाद्रे आश्विने च
१३७४ वङ्गाब्दीये
५०तम-वर्षस्य ५-६ संख्ये

September-October 1967

## आशुतोषशास्त्रिस्मृतिपूजनम्

[निबन्धकः—श्रीश्रीजीवन्यायतीर्थः]

१

पाश्चात्यवैदिककुलार्णवजातचन्द्रो
ज्ञानप्रभाविभवभास्वरशुभ्रकीर्त्तिः ।
शास्त्रीत्युपाधिपरिमण्डितपण्डिताग्र्यो
हा हा ! गतोऽद्य विबुधो दिवमाशुतोषः ॥

२

बाल्यादधीत्य सुरवाचमतिश्रमेण
दैवक्रमेण सकलं किल शास्त्रवादम् ।
वेदान्तमाशु परिशीलयता सलीलं
यत्तोषितो गुरुरतोऽसि किमाशुतोषः ?

३

राष्ट्रीयसंस्कृतमहामठवैभवश्री-

राचार्य्यलक्ष्मणविलक्षणशास्त्रवेत्ता ।

तच्छिष्यतामधिगतो निजशेमुषीतो

यातोऽसि भो गुरुरिवोचितगौरवाढ्यः ।

४

पश्चात् प्रतीच्यगिरि पूर्णविपश्चिदाशा-

काङ्क्षोऽधिगम्य परमोच्चतमं च मानम् ।

लब्ध्वा च सर्वजनगर्वनिदान-विश्व-

विद्यालयस्य सुरवाग्विषयेऽग्रगण्यः ॥

५

गीर्वाणवाचि निजमातृगिरा समान-

वेगात्तवाननतटात् प्रकटप्रकाशः ।

पार्वत्यतुङ्गशिरसो जलपाततुल्यो

निर्बाधसञ्चरणचारुवचः प्रपञ्चः ॥

६

वेदान्तशास्त्रजलधौ कृतमन्थनस्त्वं

ग्रन्थोच्चयामृतमिहोद्धृतवान् समृद्धम् ।

यत्पानतुष्टहृदयाः परिपुष्टभावाः

सन्तोऽभवंस्तव गुणग्रहणेन मुग्धाः ॥

७

अध्यापनागुणवतां गणने कृतित्वं

सत्यं भवत्तुलनया विरलं प्रतीमः ।

निर्माणदानगुणतो ननु शास्त्रवाचां

निर्माय हर्म्यमिह यत् कमलाङ्कमासः ॥

८

अद्यापि होमभवगन्धभरोपमानो
दूरं यथा सुमधुरः सुरभीकरोति ।
तादृग् भवद्गुणगणस्मृतिशेष एष
वक्षस्थलं सुविपुलं समलङ्करोति ॥

---

# स्वर्गत आशुतोषशास्त्री

[ निबन्धकः—श्रीगोपिकामोहनभट्टाचार्य-न्यायतीर्थः ]

गीर्वाणवाणीप्रणयिनां नितरां दौर्भाग्यात् सुरभारतीसेवकमूर्धन्याः आशुतोषशास्त्रिमहाभागा नातिचिराय दिवं प्रस्थिताः। एतेषां पण्डितकुलधुरीणानां जीवनेतिवृत्तं सर्वेषां सुतरामाग्रहातिशयं जनयति। आबाल्यादतीव दुःस्थोऽयं पुरुषधौरेयः स्वीयं पौरुषातिशयमात्मवलम्ब्य यत् काले विद्वत्संसदि शिरोमणिपदमधिरूढस्तत्तु न सर्वैरवगतम् इत्ययं मे प्रयासः।

शास्त्रिमहोदयः १६०० खृष्टाब्दे फरिदपुरमण्डलान्तर्गतं इदिलपुराख्यग्रामं जन्मनालंचकार। पिता तस्य अभयचरणभट्टाचार्यः, माता च शान्तमणिदेवी। पाश्चात्यवैदिककुलावतंसोऽयम्। वर्षत्रयमिते वयसि तस्य जननी दिवं गता, नववर्षवयस्के च तस्मिन् पितृपादा अपि स्वर्लोकं प्रस्थिताः। अनन्तरमयं ज्येष्ठतातस्य सान्निध्यमलभत, तत्रैव परिपोषणं सम्प्राप्य चादौ ग्रामस्थविद्यालये प्राथमिकीं विद्यां समुपार्जितवान्। अथ पितृपितामहसरणिमनुसृत्य देवभाषानुशीलने आत्मानमसौ नियोजयामास। साहित्य-व्याकरणतीर्थपरीक्षासु अनतिक्रमणीयं साफल्यमवाप्य समाप्तविद्योऽयं १६१५ खृष्टाब्दे इदिलपुरस्थाङ्गलविद्यालये संस्कृतशिक्षकत्वेन वृतोऽभूत्। व्यतीते काले एकदा शिक्षाधिकारात् परिदर्शकस्टेपलटन्-महोदयो विद्यालयमिमं परिदर्शनार्थमागतः। अनेन आङ्गलभाषानभिज्ञोयऽमाशुतोष इति कृत्वा विद्यालयेऽस्मिन् अस्य नियोगश्चिराय नानु-

मोदितः। अतःपरमयं महता आयासेन आङ्गलभाषानुशीलने दत्तमना वभूव, १६१७ खृष्टाब्दे च प्रवेशिकापरीक्षां समुदतरत्।

ततश्च कलिकातामागत्य उच्चशिक्षार्थं यतमानो बभूव, परन्तु अर्थाभावात् महाविद्यालये प्रवेशं नालभत। एवमयं वर्षो विफलो जातः। अस्मिन्नेव वर्षे संस्कृत-साहित्य-परिषदः प्रथमवार्षिकमधिवेशनं महामहोपाध्याय-यादवेश्वरतर्करत्नमहाभागानामाध्यक्ष्येण समनुष्ठीयते स्म। तत्रोपस्थितानां सहृदयसामाजिकानामन्यतम-हाटखोलास्थ-दत्तवंशावतंसरुक्मिणीनाथदत्तमहोदय आशुतोषस्य सुरभाषायां वाक्पाटवं परिलक्ष्य नितरां मुदितो बभूव, तेन चास्य शिक्षायाः सर्वं व्ययभारमङ्गीचकार। एवमयं १६२० खृष्टाब्दे आइ. ए-परीक्षामुत्तीर्णः। १६२२ खृष्टाब्दे बि. ए. परीक्षां सर्वप्राथम्येन समुत्तीर्णता-मधिगम्य पारितोषिकानि लेभे। सांख्यवेदान्तशास्त्रे च तीर्थपरीक्षास्वपि अनुत्तमं साफल्यमियाय। १६२४ खृष्टाब्दे च कलिकाताविश्वविद्यालयस्य एम्. ए. परीक्षायां सर्वप्राथम्येन समुत्तीर्णतामवाप। १६२५ ईशवीये वर्षे वरिशालस्थ-व्रजमोहन-महाविद्यालयस्य संस्कृताध्यापकपदमलंचकार। १६२६ खृष्टाब्दे वङ्गीयसर्वकारस्य शिक्षाधिकर्त्ता विपश्चिद्वरोऽयं कुशाग्रसेमुषीकत्वात् शास्त्रीति विरुदालंकृतः। १६२७ खृष्टाब्दे शांकरदर्शनीय-ज्ञानस्वरूपमवलम्ब्य Sankara's Theory of Knowledge इति ग्रन्थरत्नं विरचय्य कलिकाताविश्वविद्यालयतः प्रेमचाँद-रायचाँद-वृत्तिं लेभे। अस्मिन्नेव वर्षे पाटलीपुत्रे भारतीय-दर्शन-कंग्रेसाख्य-सम्मेलने वेदान्ततत्त्वमधिकृत्य कश्चनाभिनवं निबन्धं देवभाषया वाचितवान्। एवं तस्य वैदुष्यं विद्वज्जन-संसदि सर्वैर्विदितम्। १६३३ खृष्टाब्दे Post-Sankara Dialectics इति शोधनिबन्धमुपस्थाप्य अनेन कलिकाताविश्व-विद्यालयतः पि. एइच्. डि, इत्युपाधिः प्राप्तः। १६३५ खृष्टाब्दे शास्त्रि-महोदयः कलिकाताविश्वविद्यालयस्य अध्यापकपदमलमकरोत्। ततः प्रागुक्तेन रुक्मिणीनाथदत्त-महोदयेनानुरुद्धः प्रोत्साहितश्च सन् वङ्गभाषया 'वेदान्तदर्शने अद्वैतवाद' इत्याख्यग्रन्थरत्नं खण्डत्रयात्मकं विरचयामास। १६५५ खृष्टाब्दे आशुतोषाध्यापक-पण्डितकुलमूर्धन्य-श्रीसातकडिमुखोपाध्यायमहोदयैः संस्कृत-

विभागस्याध्यक्षपदतो गृहीतेऽवकाशेऽयमाशुतोषाध्यापकपदं संस्कृतविभागाध्यक्षस्य चालंचकार। १९६५ खृष्टाब्दे तत्पदात् गृहीतावकाशोऽयं शास्त्रचर्चाया-मात्मानमन्वयुङ्क्त। १९६६ खृष्टाब्दे जुलाइमासस्य एकादशदिवसे यशःशरीरं विहाय दिवं प्रयातोऽयं विद्वद्वरः, यस्य वैदुष्यपरिमलैरामोदितोऽयं वङ्गदेशः साम्प्रतमिति शम्।

---

# दुर्द्दिनं भारतेऽद्य

[ निबन्धकः—**श्रीयोगेन्द्रमोहनविद्यारत्नः** ]

नियतमशिवचिन्ता जायते भारतेऽस्मिन्
न हि भवति सुबुद्धिः सिद्धकामत्वदात्री।
अहह! सुसह-कार्य्यं राजमध्ये न चास्ते
पटु-शठ-कपटानां संयमाद् भीतिभाजाम् ॥१॥
अहो! महादुर्द्दिनमद्य भारते
विनार्य्यभाषामशुभा भविष्यति।
नवात्र शिक्षार्पण-पद्धतिः क्रमाद्
दुरन्त-दुर्भाग्य-तरुः फलिष्यति ॥२॥
विनार्य्यभाषां न भवेत् सुशिक्षा
विनार्य्यभाषां न हि संयमः स्यात्।
विनार्य्यभाषां न च चित्तशुद्धिः
कुतः सुखं शुद्धिविहीनचित्ते ॥३॥
गीर्वाणवाणीं परिहाय शिक्षा
न संयमं दातुमसौ समर्था।
असंयमा व्यर्थतमैव शिक्षा
रक्षःप्रवृत्तिं ननु सा प्रसूते ॥४॥

अस्मिन् दिने लोभविलास-लौल्यं
कल्याणमार्गं विरुणद्धि सर्व्वम् ।
कुशिक्षया लोभ उदेति तीव्रः
सुशिक्षयासौ किल वारणीयः ॥५॥

स्वाधीनता नश्चिरकालकाम्या लब्धापि सा शान्तिकरी न जाता ।
असंयमः केवलमत्र हेतुर्विनार्यशिक्षां न हि संयमः स्यात् ॥६॥

पुण्येयं देवभाषा निखिल-नरगणान् संयमैः सिद्धकामान्
कर्त्तुं शक्तिं विशिष्टां वहति सुविपुलां सेव्यमानावधानैः ।
हिंसा-द्वेषादि-पूर्णा धरणिरियमहो ! हेय-चक्रान्त-दीर्णा
दैवीं भाषां विहाय क्रमश इह मही हा हृता मोहमेत्य ॥७॥

एषा भाषातिपुण्या शम-दम-धन-दा संयमाश्लेष-धन्या
दैन्यां शिक्षार्थि-चित्तादपनयति शुभां शुद्ध-बुद्धिं विधाय ।
एनां हित्वा जनानां भवति शुभकरी नैव शिक्षा कदाचित्
चिन्ता शान्ति-प्रशस्ति-प्रणय-सुमधुरा सृज्यतेऽस्याः प्रभावैः ॥८॥

शिक्षा सयमदा यदीह न भवेत् किंवा तया शिक्षया
शिक्षा शान्ति-विधायिनीति मनुजैस्तस्यै श्रमश्चर्य्यते ।
सा चेल्लोभधियं सृजत्यविरतं दुःखाम्बुधौ दुस्तरे
नित्यं पातयतीह मानवगणान् सा दूरमास्तां वरम् ॥९॥

आर्य्यं शास्त्रमहो विहाय विकला वैदेशिकामोद-दा
बाह्याडम्बरगौरवा गुरुवचः-श्रद्धा-बलैर्व्वर्जिता ।
लोभाग्नि-प्रबला विवाद-बहुला स्वार्थान्धता-सङ्कुला
वारस्त्रीव नवा नवीन-सुखदा शिक्षेयमख्यातिकृत् ॥१०॥

एषा दुष्टतमा सदैव कलहं कोलाहलामोदिनी
स्रष्टुं बद्धमतिर्जयत्यविरतं लोकक्षयं कुर्व्वती ।
एषा क्लेशकरी तृषामतितरां संवर्द्धयन्ती नवां
वन्य-प्राणि-समान् करोति मनुजान् लोभार्द्दितान् दुर्गतान् ॥११॥

एषा भाषैव दैवी वहति शुभकरं वैभवं भारतीयं
शिक्षाप्राबल्यमस्याः शमयति सकलां लोभवृत्तिं दुरन्ताम् ।
एनां हित्वा समृद्धां न हि सुपरिचयः सम्भवेद् भारतस्य
क्षौणीयं क्षेमभाक् स्याद् यदि भवति शुभा देवभाषा सहाया ॥१२॥
सुरगिरि शुभदायां दुष्टबुद्धिप्रभूणा-
मसुरमतिरशिष्टानिष्ट-राशिं प्रसूते ।
शुभमति-बुध-वर्य्या आर्य्य-भाषा-सपर्य्यां
कुरुत कुरुत तूर्णं शिक्षणं नो विपन्नम् ॥१३॥
ऋषिभिरशुभ-नाशं कर्त्तुकामैरशेषं
शम-दम-धन-भाण्डं संस्कृतं शुद्धभासम् ।
अमृत-रस-विलासं स्थापितं ध्वान्तनाशं
नय-विनय-विकाशं मानसाब्ज-प्रकाशम् ॥१४॥
जगति मनुजसङ्घो दुर्गतिं याति नित्यं
शिशुरिव शुभमार्गं प्रेक्षितुं नाल शक्तः ।
पर-धन-रति-मुग्धो लोभदग्धान्तरात्मा
शम-धन-धनहीनः शिक्षया वर्जितो यत् ॥१५॥
न हि भवति सुशिक्षा संयमाढ्या जगत्याम्
ऋषि-विरचित-शास्त्रं वर्ज्जयित्वा जनानाम् ।
तदिह मनुज-चित्तं शान्तिमत् संविधातुं
वहति बलमतुल्यं सेव्यमानं चिराय ॥१६॥
परधन-रतचित्ता वित्त-वृद्धिं विधातुं
विदधति कति मार्गान् वञ्चकाश्चञ्चला धिक् ।
इह हि विशदमेकं कारणं धर्म्म-शास्त्रं
न हि भवति जनानां ग्रन्थ-राजीषु पाठ्यम् ॥१७॥
मन इह यदि लोभाद्दूरतो न स्थितं स्याद्
विफलमखिल-शिक्षा-यत्न-जातं जनानाम् ।

धनमिह न हि सौख्यं दातुमीशं जनेभ्यः
कुनय-रति-सहाया ये सदा कामदग्धाः ॥१८॥
परसुखमपि काम्यं स्वेन सार्द्धं यथार्था
मतिरिति परिपुष्टा जायते यस्य शुद्धा ।
स भवति सुखमाप्तुं सर्व्वथास्मिन् समर्थः
स हि जगदिदमस्या दुर्गतेस्त्रातुमीशः ॥१९॥
अहमिह सुखमन्नं केवलं मिष्टमिष्ट
वसनमपि सुशोभं वञ्चयित्वान्यमर्त्त्यान् ।
पिशुन-जन-बलिष्ठः कौशलेनाहरामि
त्वय इह तमशिष्टं चेष्टते द्रष्टुमाशु ॥२०॥
अहह महति दुःखे मानवा हीनशिक्षाः
परधनधृत-चित्ताः संयमं वर्ज्जयित्वा ।
समयमशुभमार्गा यापयन्तीह सर्व्वे
जगदिदमविचारान् मग्नमापत्पयोधौ ॥२१॥
ऋषि-विरचित-शास्त्रं संयमास्त्रं सुतीक्ष्णं
विलसति मनुजेभ्यः शान्तिदानाय शक्तम् ।
निखिलमशुभमूलं तेन संच्छिद्य मर्त्त्या
विदधतु शुभगेह शान्तिभित्तिक्रमेण ॥२२॥
असुरमतिमशिष्टां धारयन्तो बलिष्ठाः
सुरगिरमशुभघ्नीं संयम-प्रेमदात्रीम् ।
यदि विदधति वध्यां दुष्टबुद्धेः प्रभावात्
अहह धरणिरेषा दुर्गतौ स्यान्निमग्ना ॥२३॥
विपदियमतितीव्रा भारतीयं समग्रं
ग्रसति विभव-जातं येन चेष्टाचयेन ।
कुरुत तमिह नष्टं स्वेष्ट-चेष्टा-प्रभावाद्
असुरमतिरशिष्टा शौर्य्यहीनास्तु नृणाम् ॥२४॥

भाषाप्यैषा सपर्य्यां चिरमिह भजतां स्वे गृहे चेष्टया नः
सृष्टेरारम्भकालादियमतिमधुरा पुण्य-गीर्व्वाण-वाणी ।
चित्ते शुद्धिं प्रसिद्धां विरचयितुमलं बाल्यकालाद् विशिष्टां
मालेवैषा सुधादा दमयति निखिलां लोभबुद्धिं जनानाम् ॥२५॥

---

# आरण्यकविलासम्

( खण्डकाव्यम् )

## पूर्वारण्यम्

[निबन्धकः—**श्रीयादवेन्द्रनाथन्यायतर्कतीर्थः**]

मग्नां धरित्रीं जलधौ युगत्रये दंष्ट्राग्रभागेन समुद्दधार यः ।
क्रोडारतायादिवराहमूर्त्तये तस्मै नमो भूतलभारहारिणे ॥१॥
सरिद्वनीपर्वतराजिराजिता याऽदृश्यत ज्या सलिलात् समुत्थिता ।
सूर्य्यांशुसम्पृक्ततयाऽतिमञ्जुला साऽकृत्रिमा भूः कथिता वनस्थली ॥२॥
लक्ष्मीररण्यस्य जयत्यनारतं यत्राश्रमः सत्यदृशां तपस्विनाम् ।
विभूतयो विश्वहिताय यस्य वै फलानि मूलानि च वारिभूरुहाम् ॥३॥
अरण्यमेव प्रथमं गृहं नृणां शमैकधाम प्रथितं जगत्त्रये ।
सौधं चतुर्थाश्रमवासिनां महत् शान्तात्मनां चित्तसुखप्रदायकम् ॥४॥
विहङ्गमास्तत्र विनीतवृत्तयो मनन्ति वेदानृषिभिः समीरितान् ।
प्लवङ्ग-सारङ्ग-मृगेन्द्र-पन्नगा दीव्यन्ति वैरं प्रविहाय शाश्वतम् ॥५॥
विहङ्गगीतैश्च तरङ्गरिङ्गणैर्नद्यः प्रनृत्यन्ति मुदेव विह्वलाः ।
यच्छीकरैः स्नान्ति कुरङ्गपोतकाः श्वावित्कपोतालिमृगादयस्तथा ॥६॥
सवावसाने यजमानगेहिनी स्नानाय गत्वा सह कन्यकाजनैः ।
यत्स्वच्छतोये प्रतिविम्बितामनं दृष्ट्वा सखेलं कलयत्यनेहसम् ॥७॥

अद्यापि साक्षान्नररूपधारिणो नारायणस्य प्रतिमाऽत्र दृश्यते ।
पाषाण्यपि क्षेत्रविशेषयोगतो भक्तेषु सा भावमयी च चिन्मयी ॥२१॥
वेदाङ्गवेदाभ्यसनेषु तत्पराः शिष्याः सुसिद्धान्तनिरूपणोत्सुकाः ।
विरुद्धवादानधिगत्य शास्त्रतो विद्याविवादान् जनयन्त्यनारतम् ॥२२॥
दीर्घप्लुतह्रस्वविभेदतः स्वरा उच्चार्य्यमाणा वटुभिः समन्ततः ।
शुकादिभिस्तत्र तथैव गीयतेऽरण्यं समस्तं श्रुतिनादनादितम् ॥२३॥
वेदान्तसूत्रेषु विचारचातुरी प्रख्यायते यत्र विमर्शरूपिणी ।
अध्यासवादे जगतो मृषात्मता सा द्वैतिभिः स्वीक्रियते न माध्वकैः ॥२४॥
केचिद् विशिष्टं मिलितं च केचन नचिन्त्यरूपं च वदन्ति तं विभुम् ।
इत्थं वितर्कैरभिसन्धितो हरिः पाषाणमूर्त्त्योऽत्र विराजतेऽचलः ॥२५॥
सांख्यैस्तु पुंशक्तिवियोगयोगयोर्मोक्षो भवो वा क्रमतो निगद्यते ।
निरीश्वरात् सेश्वरयोगसाधनं भिन्नं न भिन्नं प्रवदन्ति कोविदाः ॥२६॥
सर्वज्ञता तृप्तिरनादिचेतना धर्माः परेशे यतिगौतमे मते ।
विश्वस्य कर्ता भुवनस्य पालकोऽप्युपास्यदेवः सकलात्मधारिणाम् ॥२७॥
भक्ताः पुनर्भावनिबद्धचेतसस्तमेव नारायणमादिपूरुषम् ।
स्तुवन्ति लीलामधुरै रसात्मकैर्गुणानुगानैरगुणं रसात्मकम् ॥२८॥
अजोऽपि यः कार्य्यवशात् प्रजायते ध्यानास्पदं योगिमनोमहोत्पले ।
आद्यन्तहीनाय परात्परात्मने तस्मै नमः क्षीरसमुद्रशायिने ॥२९॥
सशङ्खचक्राब्जगदाविभूषितं केयूरयुग्बाहुचतुष्टयं दधत् ।
विचित्रकान्तिः शतसूर्य्यसन्निभो रराज कृष्णो वनमाल्यशोभितः ॥३०॥
नारायणोऽसौ वसुदेवनन्दनः कृष्णस्तथा शुक्लगुणैरलङ्कृतः ।
रूपैरनेकैरवतीर्य्य भूतले वेदोक्तधर्मानवति प्रचारणैः ॥३१॥
महर्षिबाल्मीकितपोवने सुधीराद्यः कवी रामकथां सुगीतवान् ।
निर्वासिता यत्र मिषेण मैथिली गौरीव गुप्ता मुनिकन्यकागणैः ॥३२॥
ऋषेर्वशिष्ठस्य पवित्रमन्दिरे स्वाहेव वह्नेः सहधर्मचारिणी ।
अरुन्धती शिक्षयतीह ताः सतीः कुलाङ्गनाचारपतिव्रताततीः ॥३३॥

त्यागैकधर्मग्रहणाय मर्त्तजैररण्यवासं सह भार्य्ययाश्रयन् ।
यो याज्ञवल्क्यः प्रविहाय सम्पदं वेदान्तविद्या समशीलयत् श्रिया ॥३४॥
स याज्ञवल्क्यः प्रवरो मनस्विना यदाश्रमं शिष्यकुलैः समाकुलम् ।
यद्गोत्रतो ज्ञानविशेषवारिधिराप्लावयद् यन् वसुधातलं मुहुः ॥३५॥
दृष्टा सुकन्या च्यवनाश्रमे पुरा रेवन्तशङ्कया नवयौवनोद्गमात् ।
लब्ध्वाग्रमाल्यं च्यवनेन सादरं सक्तं ययातेरिव भोगजे सुखे ॥३६॥
कन्या महर्षेर्युवती शुचिस्मिता प्रमद्वरा लब्धवती वरं रुरुम् ।
सोऽभूद् घृताचीतनयो महर्षिजो न कामवृत्तिस्तपसा निरुध्यते ॥३७॥
उपासिका सा सुलभा व्रतान्विता सन्न्यासिनी सा जनकस्य कामुकी ।
कामैषणा कां युवतीं स्ववासिनी न चालयेद् वा युवकं दृढव्रतम् ॥३८॥
यत्रास्त्यरण्ये मुनितल्लजैर्वृते तत्रोपलभ्यं सुखिनां गृहाश्रमे ।
निगृह्यते तै रिपुरात्मचेष्टया न मानवास्तान् प्रतिवाधितुं क्षमाः ॥३९॥
दुर्वाससः क्रोधरिपारधीनता विश्वस्य मित्रस्य च मत्सरादयः ।
दृष्ट्वा मुनीनिन्द्रियवाजिचालितान् तेषां जयः कष्टकरो हि मन्यते ॥४०॥
तपोभिरापन्नसुखैर्यतात्मभिस्त्रयीसदाचारसुसंहितादिषु ।
अतः प्रयुक्ता विधयो गृहाश्रमे ते पालनीया गृहिभिः शुभेप्सुभिः ॥४१॥
आर्य्या पुलोमा मुनिकन्यका रतिं बाल्ये पुलोम्नीत्यकरोदनार्य्यके ।
न चाभिजात्यं न विवेकशेमुषीं व्यपेक्षते यौवनसम्भवः स्मरः ॥४२॥
ज्ञात्वा पुलोमानमनार्य्यसम्भवं भृगुः पतित्वेन पुलोमया वृतः ।
कैशोरकं प्रेम तया च विस्मृतं यत्रास्ति साक्षी प्रियवाग् हुताशनः ॥४३॥
प्रेमा विशुद्धः क्वथितात् तु हाटकात् न तत्र कापट्यलवोऽप्यवर्त्तत ।
न कामना स्वार्थसमोहिता तयोः प्रीतिः स्म सा केवलमत्र राजते ॥४४॥
भृगौ कदाचिद् भवनाद् बहिर्गते कामी पुलोमा न्यवदद् गृहं विशन् ।
स्मृत्वा पुलोमे ! प्रणयं पुराकृतं सङ्गत्य मां पूर्णमनोरथं कुरु ॥४५॥
आर्य्या पुलोमा चकिताह सत्वरा पत्नीं भृगोर्मामवगच्छ साम्प्रतम् ।
अनार्य्य मा त्वं प्रविशात्र मन्दिरे शुद्धां च मां मा स्पृश तत्सुखं लसन् ।४६॥

आभाष्य चैवं चकिता पुनः पुनर्गेहं प्रविष्टा किमपि व्यचिन्तयत् ।
उद्भ्रान्तचित्ता सविषादगर्विता तं प्रेमिकं मुग्धदृशा व्यलोकयत् ॥४७॥

स प्रेमिकः प्राह किमद्भुतं प्रिये ! तं साक्षिणं पृच्छ हुताशनं सुरम् ।
किमत्र सत्यं प्रतिभाति निश्चलं तत्प्रेम वैतन्नु विवाहबन्धनम् ॥४८॥

ऋषिप्रभावं नु विचिन्त्य दुर्बलो यदा न किञ्चित्तु हुताशनोऽवदत् ।
अनार्य्यसूनुस्तु तदाब्रवीदहो युष्माकमार्य्यत्वमसत्यभाषणे ॥४६॥

अथो भृगुः प्राविशदालयं मुदा जानंश्च सर्वं स्वतपःप्रभावतः ।
उवाच वह्निं न तु दोषभाग् भवान् तत्त्वं वदन्
शान्तिमुपैति सत्यवाक् ॥५०॥

देवर्षयो ब्रह्ममनःसमुद्भवा महर्षयो ये भवभीतिनाशकाः ।
अटन्ति मह्यां प्रसमीक्ष्य दुर्गतिं दिशन्ति तान् वेदविधिस्थसत्पथम् ॥५१॥

मन्वादयो ये सुकृतोपदेशका ग्रथ्नन्ति शास्त्राणि समाजशिष्टये ।
तपःप्रभावाच्छुचिदिव्यदृष्टयोऽनुवर्तनीया हितकामिभिर्जनैः ॥५२॥

अपाणिपादोऽपि समस्तकर्मकृत् शक्तिं समाधाय गुणैस्त्रिमूर्तिधृक् ।
व्यासादिदेहैरवताररूपता व्यासश्च नारायण इत्यबुध्यत ॥५३॥

एवं वनं शान्तरसास्पदं नृणां विहाय तत्सौधसुखाभिलाषिणः ।
क्लेशानशेषानुपभुञ्जते जनाः को दैवतन्त्रं सहसातिवर्त्तते ॥५४॥

नास्ते करग्राहिनृपोऽत्र कानने स्थलीविभागा उटजैर्मखालयैः ।
प्रकल्पिता हिंस्रभयाद्विवर्जिताश्चित्ते प्रशान्ते न लभेत कः सुखम् ॥५५॥

वनं गतं हर्म्यसुखं निषेवितं तथापि तृष्णा क्रमशो विवर्धते ।
हा हा जनानां सुखतृष्णिका मुधा विहाय गोविन्दपदाब्जसेवनम् ॥५६॥

एवं निवासान्मुनिभिस्तपोवनं प्रासादतः शान्तिसमृद्धिमत् कृतम् ।
अतस्तृतीयाश्रमसंश्रयार्थिनो यातुं बुधास्तत्र नितान्तमुत्सुकाः ॥५७॥

कश्चित् सभार्य्यस्तनये समर्प्य वा भारं कलत्रस्य तथैव सम्पदाम् ।
विहाय भोग्यं तृणवच्च बान्धवानासक्तिशून्यो वनमेति बुद्धिमान् ॥५८॥

सरस्वती यत्र सुखोषिता श्रिया परस्परं प्रेमनिबद्धसौहृदा ।
विद्यार्थयोर्वा क्व दरिद्रता सतामानन्दपीयूषरसे निमज्जताम् ॥५६॥
यत्नोटजेषु प्रथिता महर्षयो वनाश्रमस्थैर्गृहिभिर्मुदान्विताः ।
शीतोष्णयोर्द्वन्द्वसहिष्णवो महच्छास्त्रं समालोच्य वसन्ति निर्वृताः ॥६०॥
यद्देवनाद्देव इतीह नामभाग् देव· स साक्षान्नटति स्वकर्मभिः ।
शक्तिं सदा आह्वयति क्षितावटन् प्रवर्तयत्येष च कर्मसु प्रजाः ॥६१॥
प्रवृत्तिमार्गे यजमानरूपतां तथा निवृत्तौ च समाधिसाधनम् ।
सुशिक्षयन् व्यस्तसमस्तकौशलं वर्वर्ति देवः पृथिवीं समाश्रयन् ॥६२॥
सृष्टिप्रवाहे चलिते निरन्तरं प्रवृत्तिभेदाद् रुचिचित्रतां गते ।
न्याय्यात् पथो भ्रष्टजानान् सुशासितुं राजेति कश्चिद् विहितो विचक्षणैः ॥६३॥
निरूपिता राजसमाजनीतयो निष्ठासदाचारविनीतिरीतयः ।
जनैर्गृहीता भुवने प्रचारिता नृपैः समाजैश्च तथानुमोदिताः ॥६४॥
प्रयोजनापेक्षितया विनिर्मितान्यस्त्राणि भूपैर्विविधायुधानि तैः ।
आथर्वणाभिज्ञमुनेस्तपोबलैः प्रयोगसंहारविधिर्व्यनीयत ॥६५॥
प्रासाददुर्गोपवनापणादिकान् निर्माय तत्तद्व्यवहारकर्मसु ।
प्रयुज्य भोगैकसुखेषु सक्ततैर्मन्दीकृता शास्त्रसुधाविलासिता ॥६६॥
कालप्रभावान्मनसो मलीमसात् शक्त्यादिमान्द्यात् कलुषाच्च कर्मणः ।
संस्कारदौर्बल्यमवाप्य तत्क्रमाद् ब्राह्मण्यधर्मोऽपि विनिन्द्यतां गतः ॥६७॥

इति श्रीयादवेन्द्रविरचिते आरण्यकविलासनामखण्डकाव्ये
पूर्वारण्यम् ।

( क्रमशः )

# वैदिकस्वरालोचनम्

[ निबन्धकः—**श्रीअमरकुमारचट्टोपाध्यायः** ]

इदानीं वयं येषां शब्दानां प्रकृतिप्रत्यययोर्निर्णयः सम्भवति तेषां शब्दानां स्वरनिर्णयार्थम् उपायं चिन्तयामः।

(१) आद्युदात्तश्च—प्रत्ययस्य आदिस्वर उदात्तो भवति। यथा—
21 3
कर्तव्यम्। अत्र कृधातोः तव्यप्रत्ययो जातः। अत्र तव्यप्रत्ययस्य आदिस्वरः तकारगतः अकार उदात्तः। शिष्टौ स्वरौ 'अनुदात्तं पदमेकवर्जम्' इति परिभाषया अनुदात्तौ। 'उदात्तादनुदात्तस्य स्वरितः' इति सूत्रेण अन्तिमः स्वरः स्वरितमापन्नः।

(२) अनुदात्तौ सुप्पितौ—पूर्वसूत्रस्य अपवादभूतम् इदं सूत्रम्। 'सुप्' इत्यनेन सु, औ, जस् इत्यादिविभक्तयो बोध्याः। 'पित्' इत्यनेन पकारः प्रयोगदशायां न तिष्ठति येषां प्रत्ययानां ते विवक्षिताः। सर्वा विभक्तयः प्रयोगावस्थायां पकाररहिताश्च प्रत्यया अनुदात्ता इति सूत्रस्यार्थः।
2 1 3
यज्ञस्य। यज्+नङ्+ङस् इति स्थिते ङस्-विभक्तिस्थाने विहितस्य स्यादेशस्य अनेन सूत्रेण अनुदात्तत्वे 'आद्युदात्तश्च' इत्यनेन प्रत्ययस्वर एव उदात्तस्तिष्ठति।

(३) कितः—ककारः प्रयोगावसरे येषां तद्धितप्रत्ययानां (अस्मिन् सूत्रे 'तद्धितस्य' इत्यनुवृत्तिर्वर्तते) तेषाम् अन्त्यस्वरा उदात्ता भवन्ति। यथा—आग्नेयः। अत्र अग्निशब्दात् अनन्तरं ढक्प्रत्ययः जातः। तस्य प्रत्ययस्य कार्यकाले नाशात् प्रत्ययस्य य-कारगतस्य अकारस्य उदात्तता। महाभाष्यकारस्तु 'तद्धितस्य कितः' इति एकं सूत्रम् इत्याह।

(४) सावेकाचस्तृतीयादिर्विभक्तिः—सौ एकाचः तृतीयादिः विभक्तिः इति छेदः। 'सौ' इत्यनेन सप्तम्या बहुवचने परत इत्यर्थो बोध्यः। सप्तमीबहुवचने परे सति यः शब्दः एकस्वरवर्णवान् तादृशात् शब्दात् परं विद्यमानाः तृतीयाविभक्तिमारभ्य सर्वा विभक्तय उदात्ता भवन्ति

2 1
इत्यर्थः। 'अनुदात्तौ सुप्पितौ' इत्यस्य बाधकं सूत्रमिदम्। वाचा। 'वाच्' इति शब्दः सप्तम्या बहुवचने परे वाच्+सु इति तिष्ठति। एवं सः शब्दः तदा एकस्वरवर्णवान् एव। अतः तस्मात् शब्दात् परं विद्यमाना 'टा' इति तृतीया विभक्तिः उदात्ता जाता। राज्ञा इत्यत्र तु विभक्तेः उदात्तत्वं न भविष्यति 'राजन्' इति शब्दस्य सप्तम्या बहुवचने परतः राज+सु इत्यवस्थायाम् एकस्वरवर्णवत्त्वाभावात्। प्रथमाद्वितीयाविभक्ती तु नोदात्ते। ते 'अनुदात्तौ सु—' इत्यनेन अनुदात्ते एव। यथा—न ददर्श
1 3
वाचम्। अत्र 'वाच्' इति शब्दात् परं विद्यमाना 'अम्' इति द्वितीया विभक्तिर्न उदात्ता किन्तु अनुदात्ता एव।

(५) ऊडिदं पदाद्यप्पुंरैद्युभ्यः—ऊठ्, इदम्, पदादिशब्दाः, अप्, पुम्, रै, दिव् इति एतेभ्यः परा असर्वनामस्थानविभक्तिः उदात्ता भवति। 'ऊठ्' इत्यनेन 'वाह ऊठ्' इति विहितः ऊठ् बाध्यते। पदादय इत्यनेन पद्, दन्, नो, मास्, हृत्, निश् च इत्येते षट्संख्याका एव शब्दा अत्र अभिप्रेताः। अनपुंसकलिङ्गकात् शब्दात् परं विद्यमानाना सु, औ, जस्, अम्, औ (ट्) इति पञ्चाना 'सर्वनामस्थानविभक्तिः' इति संज्ञा। अतः तद्भिन्नाः 'शस्' इति द्वितीयाबहुवचनम् आरभ्य सर्वा विभक्तयो नपुंसकाच्च सर्वा विभक्तयः असर्वनामस्थानविभक्तयः। तासाम् उदात्तत्वम् अनेन सूत्रेण विधीयते। आसाम् 'अनुदात्तौ सुप्—' इत्यनेन नानुदात्तता। तथा—
2 1 2 1 2 1 3 21 21
पद्भ्याम्। दद्भिः। मासि मासि। अपां फेनेन। अभ्रातेव पुंसः।
21 21 34 21
स राये स पुरन्ध्याम्। उपत्वाम् दिवे दिवे। अस्य (=इदम्+ङस्)
221
पीत्वा शतक्रतो। प्रष्ठौहः (=प्रष्ठ—वाह्+शस्—प्रष्ठ ऊठ् आह्+अस्…)।

(६) शतुरनुमो नद्यजादी—अनुमः नुमागमरहितात् शतुः शतृप्रत्ययान्तात् शब्दात् परं विद्यमाना नदी (स्त्रीत्वबोधकः ईकारः ऊकारश्च) शस्विभक्ति-

मारभ्य सर्वाः स्वरवर्णादिविभक्तयः स्वरवर्ण आदौ यासां विभक्तीनां वर्तते ता इत्यर्थः। उदात्ता भवन्ति इति शेषः। शस् (=अस्), टा (आ), ङे (=ए), ङसि (=अस्), ङस् (=अस्), आम्, ङि (=इ) इत्येता विभक्तयः प्रायेण कार्यकाले स्वरवर्णादियुक्ताः तिष्ठन्ति। 'शप्श्यनोर्नित्यम्' 'आच्छीनद्योर्नुम्' इत्याभ्यां शतृप्रत्ययस्य नुमागमो विहितः। एतादृशनुमागमो यस्य शतृप्रत्ययस्य नास्ति न कृतो वा तादृशशतृप्रत्ययो यस्य शब्दस्य अन्ते वर्तते सः शतृप्रत्ययान्तः यदि अन्तोदात्तो भवेत् तर्हि तस्मात् परा नदी अजादिश्च शसादिविभक्तिः उदात्ता भवति। यथा—**जान**ती। (2 2 1) ज्ञा+श्ना+शतृ इति स्थिते जा+न्+अत् इति जाते 'आद्युदात्तश्च' इत्यनेन शतृप्रत्ययस्य अकारस्य उदात्तत्वे च भूते 'जानत्' इति शब्दः शतृप्रत्ययान्तः अन्तोदात्तश्च। अतः तस्मात् परा नदी ईवर्णः उदात्तः। शतृप्रत्ययान्तोऽपि सन् यदि अन्तोदात्तो न भवेत् तर्हि नदी अजादिश्च शसादिर्विभक्तिः उदात्ता न भवति। यथा—दधती। (1 3 4) अत्र 'अभ्यस्तानामादिः' इत्यनेन शतृप्रत्ययान्तो दधच्छब्दः आद्युदात्तः। अतो नदी उदात्ता न जाता। शतृप्रत्ययान्तः अन्तोदात्तश्च सन्नपि नुमागमविशिष्टशतृप्रत्ययान्तत्वे सति नदी अजादिश्च शसादिर्विभक्तिः उदात्ता न भवति। यथा—तुदन्ती। अत्र तुद्+श+शतृ+ङीप् इति स्थिते 'आच्छीनद्योर्नुम्' इत्यनेन शतृप्रत्ययस्य नुमागमो जातः। ततः तुदन्त्+ई इत्यवस्थायां शतृप्रत्ययस्य 'तास्यनुदात्ते—' इत्यनेन अनुदात्तत्वम्। 'आद्युदात्तश्च' इत्यनेन विकरणस्य शकारस्य अकारः उदात्तः। 'अतोगुणे' इत्यनेन सूत्रेण विकरणस्य अकारेण सह शतृप्रत्ययस्य अकारस्य एकादेशे सति यः अकारः समुत्पन्नः तस्य 'एकादेश उदात्तेनोदात्तः' इति सूत्रेण उदात्तत्वम्। एवं 'तुदन्त्' इति शब्दः शतृप्रत्ययान्तः अन्तोदात्तश्च, किन्तु तत्र वर्तमानस्य शतृप्रत्ययस्य नुमागमविशिष्टत्वात् तुदन्त्+ई इत्यत्र ईकारस्य उदात्तत्वं न सम्भूतम्।

बृहन्मरुतोरुपसंख्यानम् (वार्तिक)—बृहच्छब्दात् मरुच्छब्दात् च परं

वर्तमाना नदी अजादिश्च शसादिर्विभक्तिः उदात्ता भवति। यथा—
2 2 1 2 2 1
**बृहती। बृहते** (=बृहत् + ङे)।

(७) ह्रस्वनुड्भ्या मतुप्—ह्रस्वान्तः अन्तोदात्तश्च यः शब्दः तस्मात् नुडागमाच्च परं विद्यमानो मतुप्प्रत्यय उदात्तो भवति। यथा—
2 2 1
**अब्दिमान्।** अब्दिशब्द. ह्रस्वान्त. अन्दोदात्तश्च। अतः अस्मात् पर विद्यमानस्य मतुप्-प्रत्ययस्य उदात्तत्वं जातम्। 'अनुदात्तौ सुप्—' इत्यनेन तस्य अनुदात्तत्वम्।
2 2 1 3
नुटः परो मतुप्प्रत्यय उदात्तो यथा—**अक्षण्वन्तः।**

रेशब्दाच्च (वार्तिक)—रेशब्दात् च परं विद्यमानो मतुप्प्रत्यय उदात्तो
2 1 3
भवति। यथा—**रेवतः** (< रयि+मतुप्)।

(८) नामन्यतरस्याम्—मतुप्प्रत्यये जाते यः शब्दो ह्रस्वान्तः अन्तदात्तश्च युगपद् भवति तस्मात् शब्दात् परं विद्यमानाया षष्ठ्या बहुवचनस्य 'नाम्'
1 4 4 2 1
इति विभक्तिः विकल्पेन उदात्ता भवति। यथा—चेतन्ती **सुमतीनाम्।** सुमतिशब्दः मतुप्प्रत्ययावसरे सुमतिमान् इत्येवं ह्रस्वान्त एव तिष्ठति। 'नञ्सुभ्याम्' इत्यनेन अन्तोदात्तश्च अयं शब्दः। अतः अस्मात् परस्य 'नाम्' इत्यस्य उदात्तत्वं जातम्।

(९) न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः—गो, श्वन्, सौ प्रथमैकवचने अवर्णान्तः, राट् क्विप्प्रत्ययान्तः राजधातुः, अङ् क्विप्प्रत्ययान्तः अञ्च् धातुः, क्रुङ् क्विन्प्रत्ययान्तः क्रुञ्चधातुः, कृत् क्विप्प्रत्ययान्तः कृ-धातुः कृन्त्धातुर्वा इत्येतेभ्यः शब्देभ्यः अनन्तरं तत् तत् न भवति यत् यत्
1 3
सूत्रात् पूर्वम् (६।१।१८२ सूत्रात् प्राक्) विहितम्। यथा—**गवां शता।** गो-शब्दात् परं विद्यमानायाः तृतीयाविभक्तेः 'सावेकाचस्तृतीयादिर्विभक्तिः' (६।१।१६८) इत्यनेन उदात्तत्वे प्राप्ते अनेन सूत्रेण तन्निषिद्धम्। 'अनुदात्तौ
1 3
सुप्—' इत्यनेन तस्याः अनुदात्तत्वमेव। **शुना।** पूर्ववत् उदात्तत्वे प्राप्ते

1
अनुदात्तत्वम्। तेषां पाहि श्रुधी॰ हवम्। 'तद्' इति शब्दः प्रथमैकवचने स+सुप् इति अवर्णान्त एव तिष्ठति। अतः पूर्ववत् उदात्तत्वे प्राप्ते तन्निषिध्य
1 3
अनुदात्तत्वम्। राजा (=राज्+टा)। पूर्ववत् उदात्तत्वे प्राप्ते विभक्तेः
1                                1 3
अनुदात्तत्वम्। प्राञ्चा ( =प्र—अन्च्+क्विप्+टा)। पूर्ववत्। कुञ्चा
1 3
(=कुन्च्+क्विन्+टा)। पूर्ववत्। कृता (=कृ वा कृन्त् वा+क्विप्+टा)। पूर्ववत्।

(१०) तित्स्वरितम्—तकारः प्रयोगावसरे येषां प्रत्ययानां न तिष्ठति ताद्दशप्रत्ययान्तानाम् अन्तिमः स्वरः स्वरितो भवति। यथा—
1 3
कार्यम्। कृधातोः ण्यत् प्रत्ययेन कार्यशब्दो निष्पन्नः। तस्य प्रत्ययस्य तकारः शेषतो न तिष्ठति। अतः ण्यत्प्रत्ययान्तस्य कार्यशब्दस्य अन्तिमः स्वरः स्वरितः।

(११) लिति—ल-कारो यस्य प्रत्ययस्य प्रयोगदशायां न तिष्ठति
1 2 3
तस्मात् प्रत्ययात् पूर्वं वर्तमानः स्वरः उदात्तो भवति। यथा—विश्वतः। विश्व-शब्दात् तसिल् प्रत्ययो जातः। अस्य प्रत्ययस्य ल-कारः प्रयोगदशायां न दृश्यते। अतः प्रत्ययात् पूर्वं वर्तमानः शकारवकारगतो यः अकारः स उदात्तः।

(१२) यतोऽनावः—यत्प्रत्ययान्तस्य स्वरवर्णद्वययुक्तस्य आदौ वर्तमानः यः स्वरः स एव उदात्तः नौ-शब्दं वर्जयित्वा। यत्प्रत्ययान्तो नौशब्दः
1 3
आद्युदात्तो न भवति इति तस्यार्थः। यथा—काम्या। णिङन्तात् कम्-धातोः यत्प्रत्ययेन काम्यशब्दः निष्पन्नः। तस्य द्वितीयाया द्वि-वचने विभक्तेः पूर्वसवर्णदीर्घे डादेशे वा 'काम्या' इति पदम्। 'तित्स्वरितम्' इति सूत्रं बाधित्वा इदं सूत्रं प्रवर्तते।

(१३) ईडवन्दवृशंसदुहां ण्यतः—ण्यत्प्रत्ययान्तानाम् ईड्, वन्द्, वृ, शंस्, दुह् इति धातूनाम् आदिस्वरः उदात्तो भवति। 'तित्स्वरितम्' इति सूत्रस्य अपवादभूतम् इदं सूत्रम्। उदाहरणानि—ईड्यः। वन्द्यः। वार्यम्। शंस्यम्। 'तित्स्वरितम्' इति सूत्रं यदि अत्र प्रवर्तेत तर्हि 'अनुदात्तं पदमेकवर्जम्' इत्यनेन ईकारादीनाम् आदिस्वराणाम् अनुदात्तत्वम् एव स्यात्।

1 3 (वन्द्यः), 1 3 (वार्यम्), 1 3 (शंस्यम्)

(१४) ञ्नित्यादिर्नित्यम्—ञ-कारः नकारो वा येषां प्रत्ययानां प्रयोगावस्थायां दर्शनं न लभते तादृशप्रत्ययान्तानां शब्दानाम् आदिस्वरः सर्वदा उदात्तो भवति। यथा—गार्ग्यः। गर्गशब्दाद् यञ् प्रत्ययेन गार्ग्यशब्दो निष्पन्नः। यञ् प्रत्ययस्य ञकारस्य प्रयोगकाले अवर्तमानत्वात् गार्गशब्दः आद्युदात्तः जातः। विश्वम्। विश् धातोः क्वन् प्रत्ययेन विश्वशब्दः सिद्धः। तस्य प्रत्ययस्य न-कारस्य नाशात् अनेन सूत्रेण आद्युदात्तोऽयं शब्दः।

(१५) चितः—प्रयोगकाले चकाररहितस्य प्रत्ययस्य अन्त उदात्तो भवति। यथा—भासुरम्। भास्धातोः घुरच्प्रत्ययेन अयं शब्दो निष्पन्नः। तस्य प्रत्ययस्य चित्त्वात् प्रत्ययस्य अन्तिमः स्वरः रकारगतः अकार उदात्तो जातः। चित्प्रत्यये प्रकृतिप्रत्ययसमुदायस्य अन्तिमः स्वर उदात्त इति इष्यते। यथा—नभन्ताम् अन्यके। अन्यशब्दः सर्वनामसंज्ञकः। अन्य+जस् इति स्थिते अन्य+ई (=शी) इति जाते 'अन्ये' इति पदम्। ततः 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति सूत्रेण 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच् अन्यत्र तु सुबन्तस्य टेः प्रागकच्' इति वार्तिकेन च अन्य् (=अन्य + अक् (=अकच्) + ए इति जाते 'अन्यके' इति पदं सिद्धम्। यदि 'चितः' इति सूत्रेण प्रकृतिप्रत्ययसमुदायस्य अन्तोदात्तता ईप्सिता न भवेत्

प्रत्ययस्य एव अन्त्यस्वरस्य उदात्तत्वं स्वीक्रियेत तर्हि अकच् प्रत्ययस्य अकार एव उदात्तो भवेत्, यतः उक्तप्रत्यये एकस्यैव स्वरवर्णस्य वर्तमानत्वात् स एव स्वर आदिः अन्तश्च। 'चितः' इत्यनेन प्रकृतिप्रत्ययसमुदायस्य अन्तोदात्तता-स्वीकारे यथादृष्टम् अन्तोदात्तत्वं सिद्धम्।

(१६) तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तह्न्विङोः—अस्य सूत्रस्य व्याख्यानार्थं विद्वद्वरवामनजयादित्यविरचिता काशिकावृत्तिः अस्माभिः उद्ध्रियते।

तासेरनुदात्तेतो ङितोऽदकारान्तोपदेशाच्च शब्दात् परं लसार्वधातुकम् (=लकारश्च इदं सार्वधातुकञ्च इति) अनुदात्तं भवति ह्नुङ् इत्येताभ्यां परं वर्जयित्वा। तासेस्तावत्—कर्ता (=कृ+तास्+ज)। कर्तारौ (कृ+तास् +रौ)। कर्तारः (=कृ+तास्+रस्)। प्रत्ययस्वरापवादोऽयम्। अनु-दात्तेतः—आस—आस्ते (आसधातोः अन्तिमः अकारः सकारगतः अनुदात्तः इत्संज्ञकश्च। २४३८-तमस्य सूत्रस्य व्याख्यानावसरे 'अथ पृच्यन्ता अनु-दात्तेतः' इति दीक्षितेन उक्तम्)। वग—वस्ते। ङित्—वेङ्—सूते (वेङ् धातोः ङकारः कार्यकाले अपगच्छति)। शीङ्—शेते। अदुपदेशात्—तुदतः (तुद्+श+तस्—तुद+अ+तस्। अत्र अकारात् ह्रस्वात् परं 'तस्' इति सार्वधातुकं वर्तते)। नुदतः। पचतः (=पच्+शप्+तस्—पच् +अ+तस्)। अनुबन्धस्यानैकान्तिकत्वादकारान्तोपदेश एव शप्। पचमानः। (पच+शप्+शानच्)। 'लटः शतृशानचावप्रथमासमानाधिकरणे' इत्यनेन लकारस्थाने शानच्प्रत्ययो विहितः। अतः स्थानिवदादेशोऽनल्विधौ' इत्यनेन सः लकारः। शानच्प्रत्ययस्य सकारस्य इत्संज्ञकत्वात् 'तिङ्शित् सार्वधातुकम्' इत्यनेन सार्वधातुकत्वम् अपि तस्य)। यजमानः (= यज्+ शानन्—'पूङ्यजोः शानन्'। यज् + शप् + शानन्)। यद्यत्र मुक् अकार-मात्रस्य स्यात् तदा लसार्वधातुकमदुपदेशादनन्तरमिति सिद्धो निघातः। अथाकारान्तस्याङ्गस्य तथापि लसार्वधातुकानुदात्तत्वे कर्तव्ये बहिरङ्गत्वादसिद्ध इति सिद्धम्। चित्स्वरोऽनेन लसार्वधातुकानुदात्तत्वेन परत्वाद् बाध्यते

(शानन्प्रत्ययो न लादेशः)। अह्विङोरिति किम्? ह्नुते। यदधीते। (ह्नुङ् अपनयने इङ् अध्ययने इत्यनयोः ङित्वेऽपि लसार्वधातुकम् अनुदात्तं न भूतं किन्तु उदात्तम् एव)

(क्रमशः)

# पूजाकारिणी*

रवीन्द्रनाथ-कृत "पूजारिनि" कवितायाः संस्कृतानुवादः

[ अनुवादकः—**श्रीइन्द्रमोहनचक्रवर्त्ती** ]

तदा तु शारददिनावसानम्, श्रीमतीनाम्नी सा दासी
पुण्य-शीतल-सलिल-स्नाता
पुष्प-प्रदीप-भाजन-हस्ता
राजमहिषी-चरणौ विनता नीरवं तस्थौ शुचिः।
रोमाञ्चिता सा उवाच महिषी, 'कस्येदमज्ञातम्,
घोषितमेतद् अजातशत्रुणा
स्तूपे यैः क्रियते अर्घ्यरचना
शूलेन मृत्युं यान्ति ते जना अथवा निर्वासनम्!'
प्रत्यागम्य सा सुधीरमगमद् यत्र बधूः 'अमिता'।
पुरस्कृत्य सा स्वर्णमुकुरम्
विन्यास तस्या दीर्घचिकुरम्,
सीमन्त-सीम्नि अथ सयत्नं सिन्दूराङ्कनरता।
दृष्ट्वा श्रीमतीं वक्राभूद् रेखा, कम्पितस्तस्या हस्तः—
उवाच,—'अबोधे! धिक् ते साहसम्!

---

* 'सेदिन शारद-दिवा-अवसान, श्रीमती नामे से दासी' इत्यादिः मूलकविता।

आनीता पूजा ! अपसर दूरम्—
सम्पत्स्यते, यद्येतद् दृष्टम्, विषमविपत्पातः ।'
अस्तमन-रवे रश्मेराभायां मुक्तगवाक्षपार्श्वे
कुमारी शुक्ला समासीना एका
काव्यग्रन्थ-पठने निरता,
किङ्किणी-रव-श्रुति-चकिता नेत्रमक्षिपद् द्वारे ।
दृष्ट्वा श्रीमतीं क्षिप्त्वा ग्रन्थं द्रुतं गता तन्निकटम् ।
सावधानमूचे तस्याः श्रवणे,
राज्ञ आदेशः किं न स्मरणे ?
न हि साम्प्रतं भाति मे मनने एवं मरण-वरणम् !
द्वारं द्वारम् अगमच्छ्रीमती धृत्वा अर्घ्यपात्रम् ।
'हे पुरवासिनि !' अवददाहूय,
'आगतः प्रभोः पूजायाः समयः ।'
श्रुत्वा कश्चिद् भयविह्वलः, केन वोक्तं कुवाक्यम् ॥
दिनस्य शिष्ट आलोको मिमील नगर-सौध-शीर्षे ।
जनहीनपथस्तमसि विलीनः,
कलकोलाहलः क्रमशः क्षीणः,
आरात्रिक-घण्टा ध्वनिता प्राचीन-देवमन्दिर-कक्षे ।
शारद-रात्रेः स्वच्छतिमिरे ज्वलन्ति तारा अगण्याः ।
सिंहद्वारं नादित-विषाणम्,
वन्दिना गीतं सान्ध्यं गानम्,
'मन्त्रणा-सभा गता समाधानम्' घोषितमुच्चैर्द्वारिणा ॥
विस्मितास्तदा पश्यन्ति स्म सर्वे प्रासादे ये प्रहरिण·—
अन्तः राज्ञो विजने कानने
स्तूप-पद-मूले तमसि गहने

कथं ज्वलन्ति श्रेणि-बन्धने प्रदीपाः माल्यानीव ?
मुक्तकृपाणः पुररक्षको द्रुतं गत्वा सपदि
उवाच, 'का त्वम् , अरे दुर्मते,
मरणं गन्तुमारात्रिकं ते ?'
मधुरकण्ठमिदं श्रूयते, 'श्रीमती बुद्धदासी ।'
तदा हि शुभ्र-पाषाण-फलके त्वरिता रक्तलेखा ।
तदा हि शारद-स्वच्छ-निशीथे
प्रासादकानने नीरवे निभृते
क्षणात् स्तूप-मूले आरात्रिककृतेः निर्वाणा शेषशिखा ॥

---

# उत्तरकुरुक्षेत्रम्

[ श्रीविश्वेश्वर विद्याभूषण काव्यतीर्थेन विरचितम् ]

( पूर्व्वानुवृत्तम् )

## द्वितीयोऽङ्कः—प्रथमं दृश्यम्

[ द्वारकापुरी—श्रीकृष्णस्य प्रासादः—रत्नसिंहासनोपविष्टः श्रीकृष्णः करतले न्यस्तकपोलो विमनायमानस्तिष्ठति । ]

श्रीकृष्णः—( स्वगतम् ) सुरम्यहर्म्यमालिनी कनकरत्नमयी द्वारका ! साम्प्रतमियं श्रीहीना आभाति । एषा निखिलसुषमाविमण्डितानन्तगुणमहिम्ना अमरावतीव शोभते । सा हि अचिरेणैव विलयं गमिष्यति । ( उत्थाय परिक्रमन् ) सृष्टिविलयौ मम विधानम् । तद् विश्रान्तोऽहं मर्त्यलीलां परिहरिष्यामि । ( पुनर्निवृत्य सिंहासने उपविशति ) ।

[ प्रविशति रुक्मिणीसहिता सत्यभामा ]

प्रविश्य रुक्मिणी—विजयतां द्वारकेशः ।

,, सत्यभामा—जयतु द्वारकानाथः ।

उत्थाय श्रीकृष्णः ( उभयं प्रति )—स्वागतं प्रियाणाम्। देव्यः, भवतीनामागमनमहं प्रतिपालयामि। तद् अलंक्रियतामासनद्वयमानन्देन।

[ समादरं प्रदर्शयति—उभे चोपविशतः ]

रुक्मिणी—जयतु यदुनाथ.। इत्थं विजयते खलु महनीयचरितस्य गौरवम्।

सत्यभामा—तद्धि राज्येश्वरस्य प्रसादमूलम्।

श्रीकृष्णः ( सहर्षम् )—विजयन्तां महादेव्यः। ( उभयं प्रति ) देवि रुक्मिणि, प्रिये सत्यभामे, साक्षात् श्रियः खलु भवत्यः। तत् मूर्त्तिमतोः मङ्गलविग्रहाः युष्मान् संवर्धयामि।

सत्यभामा—अहो भाग्यम्।

रुक्मिणी—विजयते खलु राजराजेन्द्राणां माहात्म्यम्। वयं तु महतां कृपाधन्याः।

श्रीकृष्णः—साधु साधु।

सत्यभामा—( सकौतुकम् ) तद् वन्दे यादवेश्वरस्य पादपद्मम् ( वन्दते )।

रुक्मिणी—अहमपि नो हृदयेश्वरं प्रणमामि। ( सहर्ष नमति )।

श्रीकृष्णः—( सानन्दम् ) उत्तमम्, उत्तमम्। यातु—प्रियतमे सत्यभामे महादेवि प्रिये रुक्मिणि, सत्यभामे—अधुना कथयामि।

रुक्मिणी सत्यभामे—अनुगृह्यतां निदेशेन।

श्रीकृष्णः—देव्यः, अस्ति किञ्चिद् गूढवक्तव्यम्। तत् सुशान्तमनसा श्रोतव्यम्।

सत्यभामा—कथयतु नाथः।

रुक्मिणी—वयं सश्रद्धमाकर्णयिष्यामः। तद् अपनयतु प्रिय, अस्मत्कौतूहलं वचनेन।

श्रीकृष्णः—महादेव्यः, साम्प्रतमहं प्रभासतीर्थं गमिष्यामि।

रुक्मिणी-सत्यभामे—( सहर्षम् ) अहो भाग्यम्! वयं पुण्यसञ्चयं करिष्यामः।

श्रीकृष्णः—( सविषादम् ) देव्यः, न तत्रेदानीं भवतीनां गमनेन प्रयोजनम्।

प्रयोजनवशादहं गच्छामि। यूयमत्रावस्थाय परिजनानां प्रजानाञ्च सौख्यविधानं कुरुत।

सत्यभामा—कथं तत् सम्भवति? सुधाकरविहीने नभसि कः खलु किरणं विकिरिष्यति?

रुक्मिणी—( सविषादम् ) न जाने, को हि विपर्य्ययः समुपतिष्ठते इति। तद् यादव, अपनयास्माकं कौतूहलं संशयं च हितवचनेन।

श्रीकृष्णः—साधु देव्यः! विजयत। सत्यं वः कथयामि। यूयं हि मम सुचिरं विग्रहांशभूता, जगत्त्राणाय मर्त्ये मामुपागताः। अधुनास्माकं लीलापरिहारकालः समागच्छति। अचिरेणैव विधिविधानाद् यादवाः क्षयं गमिष्यन्ति। भवेच्च द्वारकापुर्य्या विलयः।

रुक्मिणी सत्यभामे—(सविषादम्) अहो, दुःखम्! शोचनीयः खल्वयं सन्देशः।

श्रीकृष्णः—( सान्त्वनास्वरेण ) माऽस्तु खेदो देव्यः। अवश्यम्भाविनि भवितव्ये न खलु दुःखं समुचितम्। तस्य च हेतुभूतानि निमित्तानि साम्प्रतमुपस्थितानि। मद्वंशीयानामधर्माचरणेनात्मकलहोऽधुना तेषां क्षयाय भविष्यति। अहमपि दूरतो नरलीलाया अवसानं सङ्घटयिष्यामि।

रुक्मिणी सत्यभामे—( आर्त्तकण्ठेन ) प्रियतम—प्रियतम!

श्रीकृष्णः—अलं दुःखेन। देहान्ते च संप्राप्तदिव्यतनुभिर्युष्माभिरवश्यमेव भविता मे शुभसङ्गतिः।

रुक्मिणी सत्यभामे—( सविषादम् ) अहो, असहनीयो विच्छेदः!

श्रीकृष्णः—नहि नहि। सत्यं वो वदामि। न कदापि अन्यथा भविष्यत्यस्माकं मेलनम्। तत् प्रतीक्ष्यतामस्मत्शाश्वतसङ्गसौख्याय।

सत्यभामा—हा नारीभाग्यम्!

श्रीकृष्णः—प्रियतमाः, भवतीभ्यः सुचिराय मे हृदयं प्रदत्तम्। तत्राहं सत्यम् अपलपिष्यामि।

सत्यभामा—तथास्तु। किन्तु नाथ, अस्ति नः किञ्चित् प्रार्थनीयम्। तेन अनुमतिं ते प्रार्थयामहे।

रुक्मिणी—शाश्वतकल्याणायास्माकं देवार्चनस्वस्त्ययनादिकं काम्यते ।

श्रीकृष्णः—उत्तमम् । विधीयतां दानधर्मयज्ञादिकं प्रफुल्लचित्तेन । तद्धि शुभाय भविष्यति ।

सत्यभामा—नाथ, इच्छामि तत्तत्ब्राह्मणार्चनं पुण्यलाभाय ईप्सितसिद्धये च ।

श्रीकृष्णः—अहो सुखम् ! पूर्णोऽस्तु युष्माकं मनोरथः शुभानुष्ठानेन ।

रुक्मिणी सत्यभामे—( श्रीकृष्णस्यपादयोः पतित्वा ) प्रिय प्रिय ।

[ दूरे नारदो गायति ]

गानम्

नेपथ्ये नारदः—वृन्दावनचारण, विश्वविमोहन, वसुधाहृदिरञ्जन,

निखिलजीवन, माधव जय, नन्दनवनचारण ।

जयतु मुरारिः कलवेणुधारी

द्वारकेशो गोलोकविहारी

मनोहारी, तिमिरविदारी, विलसतु कंसघातनः ॥

प्रसीद मयि कृष्णकेशव पद्मपलाश लोचन ।

चिन्मय जय करुणामय भक्तहृदयनन्दन ॥

श्रीकृष्णः—( भार्य्याद्वयमुद्दिश्य ) देव्यः, देवर्षिरत्रागच्छति । नूनं शुभङ्करोऽयं महाजनसमागमः । स हि प्राकाम्येन मङ्गलं विधास्यति ।

रुक्मिणी सत्यभामे—( सहर्षम् ) वयं देवर्षेश्चरणवन्दनं करिष्यामः ।

[ प्रविशति वीणाकरो गायन् देवर्षिर्नारदः । रुक्मिणीसत्यभामे कृताञ्जली महर्षिमभ्यर्थयेते ]

उभे—जयति जयति देवर्षिः !

श्रीकृष्णः—( उत्थाय समुपसृत्य सादरम् ) स्वागतं देवर्षे ! हृष्यामि भवता पुण्यसमागमेन । तद् अलंक्रियतामिह रत्नासनं निजगुणेन ।

नारदः—अहो सुखम् । आनन्दः—आनन्दः ।

श्रीकृष्णः—( पत्नीद्वयं प्रति ) आनीयतां देव्यः, देवर्षेः पूजनार्थमर्घ्यसम्भारः ।

( क्रमशः )

# का नाम भारतस्य राष्ट्रभाषा ?

[ निबन्धकः — **श्रीचक्रधर आचार्यः एम्, ए, काव्यतीर्थः, कोविदः**]

प्राक्स्वाधीनतासमये भारतवर्षे राजभाषा एव राष्ट्रभाषासीत्। अधुना तु स्वतन्त्रतालाभादनन्तरं बहुविधभाषाभाषिभिरध्यूषितेऽस्मिन् देशे गणतन्त्रस्य पटभूमिकायां का नाम राष्ट्रभाषा भवेदिति समस्या देशवासिनां पुरतः प्रबलाकारेणोपस्थिता। तत्र केचिद् हिन्दीभाषामवलम्बितुमिच्छन्ति। सर्वकारोऽपि प्रधानतया तन्मत समर्थयति। येपुनरहिन्दीभाषिणस्ते इमं प्रस्तावं सर्वथा नाङ्गीकुर्वन्ति। तेषामनङ्गीकरणे हेतुरपि सम्यग् विद्यते। तत्र प्रथमः—भाषेयं न प्राचीनसुसाहित्यसमृद्धा यथान्याः काश्चिद् भाषा भारतीयानाम्। द्वितीयस्तु—संस्कृतशब्दबाहुल्येन गठिता 'खड़ी बोली'त्य-भिधानेनाभिहिता या संविधाने सर्वकारेण समर्थिता तादृशी भाषा वस्तुतो भारतवर्षस्य प्रायः कुत्रापि न हि कथ्यरूपेण सम्यक् प्रचलिता। परन्तु सा उर्दूभाषारूपेण हि बाहुल्येन दृश्यते। अन्याश्च याः छत्तीसगढ़ी, अवधी, मैथिली, ब्रजबुलि—इत्यादयः सन्ति, तासामपि परस्परपार्थक्याद हिन्दी भाषिणामाधिक्यं भारतेऽस्तीति न कथमपि वक्तुं शक्यते। तथा च समग्रेषु दक्षिणभारतीयेषु भाषेयं वैदेशिकीव प्रतिभाति। तृतीयस्तु—भाषायामस्यां राष्ट्रभाषापदवीं प्राप्तायां हिन्दीभाषिणामग्रगतिर्द्रुततरा भवेदित्याशङ्का अहिन्दीभाषिणां मनसि अवश्यं जायेत। एवं स्थितौ प्रचारमात्रद्वारेण भाषेयं जनमानसे पदं कर्त्तुमक्षमा विशृङ्खलामेव जनयेत्। यथा दक्षिण-भारते हिन्दीप्रतिरोधपराः केचित् प्राणानपि त्यक्तवन्तः। बङ्गेष्वपि महान् कोलाहलः सञ्जातः। एवमन्यत्रापि। तथाच यदास्माकं देशो बहिरागत-विविधविज्ञानपूर्त्तवाणिज्यादिविद्याभिः स्वकीयोन्नतिं विधातुमुत्सुकस्तदा कास्या भाषायाः सम्पुष्टिर्यया एतादृशान् विषयान् प्रकाशयितुं शक्नुयात्। एवमपि यदि हिन्दी राष्ट्रभाषामर्यादां लभेत तदा को नामापराधोऽधिकतरसमृद्धानां

बङ्ग-गुर्जरोत्कल-कर्णाटकादिभाषाणाम् ? अतो नास्ति काप्येकतरपक्षपातिनी युक्तिर्येन हिन्दी एव बहुभाषासंमृद्धस्य भारतबर्षस्य राष्ट्भाषापदवीं लभेत ।

केचित् पुनः प्राक्स्वातन्त्र्ययुगीयसंस्काराच्छन्नमनसः आङ्गलभाषामेव राष्ट्रभाषारूपेण स्वीकृत्य स्थितावस्थां संरक्षितुमीहन्ते। असाधुरेव एषोऽभिलाष इति मन्यामहे। यो हि देशः विशालतया महादेशायते, यस्य देशस्य संस्कृतिः समग्र-जगतो दीपवर्त्तिकायते, यस्य देशस्य भाषा जगतः सर्बास्वेव भाषासु प्राचीनतमेति परिगण्यते, यस्मिन् देशे अद्यापि वर्त्तमानानां वेदपुराणेतिहास-स्मृति-साहित्य-ज्योतिर्विज्ञान भूगोलादिविविधविषयकानां नानाविद्याप्रदायकानां पुस्तकानां महात् भाण्डारो यस्य कस्यचिदितरदेशस्य ग्रन्थभाण्डारमूनयितुं समर्थस्तत्रैव देशे समुद्रान्तरितातिविजातीया काचिद् भाषा सुसमृद्धापि कथं राष्ट्रभाषामर्यादां प्राप्नुयादिति तद्भावितचेतसामेव गम्यम्, न तु देशात्मबोधलवमप्याश्रितानाम्। एतेन आङ्गलभाषाशिक्षणं परित्याज्यमिति न ब्रूमः। अपितु प्रयोजनानुसारेण परिमितरूपेण च तथा ग्राह्यम्, यथा तदीयभारेण मातृभाषा राष्ट्रभाषा च सङ्कुचिता न भवेत्।

अथ तावत् का नाम राष्ट्रभाषा भवेदिति प्रश्ने वयं ब्रूमः—संस्कृतमेवेति। पाश्चात्यसंस्कृतीनां यदावबोधोऽपि नासीत्, ततः प्रभृति यां भाषामाश्रित्य वेदब्राह्मणोपनिषदः प्रकटिताः, या भाषा चतुःषष्टिकलानां चतुर्दशविद्यानाञ्च प्रकाशिका आसीत्, सा सर्वविधभावप्रकाशनसमर्था सुपुष्टेयं भाषा कथं नाम राष्ट्भाषापदवीमारोढुमसमर्था भवेद् येन हस्तिदर्शनन्यायेन सा इतस्ततः अन्विष्यते। तथा चेयं भाषा न कदापि कथ्यरूपेण स्थितेत्यपि न पाणिनिना स्वग्रन्थे वैदिकविलक्षणा भाषेति यदुक्तम्, सैव लौकिकी संस्कृतभाषा। तस्या एव व्याकरणं कृतं तेन। तत् प्रणीतेषु सूत्रेषु क्वचित् 'शाकटायनस्य', 'गालवस्ये'ति आचार्याणां नामग्रहणात् तथा प्राचामुदीचामिति देशविशेषग्रहणाच्च देशविशेषे वैयाकरणविशेषे च संस्कृतभाषायां किञ्चिद् वैलक्षण्यमासीदिति ज्ञायते। किञ्चेयं भाषा चेल्लौकिकव्यवहारयोग्या नासीत्तदा वर्णागम-वर्णविपर्यय-वर्णविकारनाशानामपि कुत

उद्भवः स्यात्। विषयोऽयं प्राच्यानां पाश्चात्यानामपि पण्डितानां सम्मता इति कृतमत्र वागाडम्बरेण। अस्माकन्तु वक्तव्यम्—यदि सैकदा कथ्य-भाषाभूता सर्वविद्यानां प्रकाशनक्षमा स्यात्तदा कथमधुनापि स्वतन्त्रे भारते तस्यैवेतिहासस्य पुनरावृत्तिरसम्भवेति गण्यते।

अत्र केचिदाशङ्कन्ते—प्रायः सहस्राधिकवर्षकालं कथ्यभाषारूपेणागृहीतत्वाद् भाषाया अस्याः शब्दभाण्डारे बह्वी न्यूनता सञ्जाता येनाधुनातनव्यवहृतानां बहूनामेव शब्दानामभावो विद्यते। तत् कथमेषा आधुनिकभावानां वाहिका भवेदिति!

अत्रोच्यते—तादृशानां शब्दानां यथासम्भवं परिभाषा प्रणयनं कर्त्तव्यम्। यथाधुनापि तस्या एव भाषाया आहृत्य 'अवर', 'आरक्षा' 'पर्षत्' प्रभृति शब्दानां प्रयोगस्तथा मुख्यप्रधानशब्दयोर्भेदः स्वीक्रियते तथान्यत्रापि कर्तुं शक्यते। अपि च येषां विजातीयशब्दानां परिभाषाकरणे काठिन्यमसङ्गतिर्वा जायेत तेषां स्वरूपेणैव ग्रहणे न कापि हानिः। केचन चेदनेन देवभाषा कलुषिता भवेदिति मन्येरन् तदा पृच्छ्यते—किं 'तितउ', 'उलूखल', 'अवट' प्रभृतिभिः शब्दैर्वेदोऽपवित्रः सञ्जातः? यदा कथ्यभाषासीत्तदा संस्कृतेऽपि किं बहवः प्राकृता अनार्योच्चारिताः शब्दा अनुप्रविष्टा नामवन्? उक्तञ्च पतञ्जलिना पस्पसायाम्—'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः।' शब्दानां ह्रस्वदीर्घाद्युच्चारणविधिमतिक्रम्य व्यवहाराद् हि अपशब्दत्वं जायते नतु शब्दस्वरूपादेव। पृथिव्यां न काचिद् एवंविधा भाषा प्रचलिता यस्यां विदेशीयशब्दानामनुप्रवेशो नास्ति।

यत्तु केचिदत्र व्याकरणस्य काठिन्यं मन्यन्ते तदपि वस्तुतो न। सर्वथा विवेचनं चेत् क्रियेत तदा आङ्गलापेक्षयास्याः व्याकरणविषये सारल्यमेव लक्ष्येत। हिन्दीभाषायास्तु यद् व्याकरणं तेनाद्यापि शैशवं नातिक्रान्तम्। पाणिनेर्व्याकरणमधुनापि न केवलं भारतवर्षस्य, पृथिव्याः सर्वेष्वपि व्याकरण-शास्त्रेषु सम्यक्तया, व्यापकतया च स्वकीयवैशिष्ट्यं विधत्ते। "The importance of the grammarians in the history of Sanskrit

is unequalled anywhere in the world. Also the accuracy of their linguistic analysis is unequalled untill comparatively modern times."—( T. Burrow. The Sanskrit Language. p. 47.) तथापि यत् काठिन्यमनुभूयते तत्तु सुचिरकालमनभ्यासस्यैव फलम् ।

अपि च व्याकरणं नाम शब्दानुशासनम् । तत् प्रयोजनन्तु पतञ्जलिनोक्तम् 'रक्षोहागमलध्वसन्देहाः प्रयोजनमि'ति । तेन हि अतीतवर्तमानानागतानाम् शास्त्राणा भाषागतसामञ्जस्यं स्यात् । व्याकरणस्य शैथिल्ये तु भाषाया नियतपरिवर्तनाद् भूतभविष्यतोर्योगो नश्येत् । तथापि यदा काचिद् भाषा जनमुखाश्रिता भवेत्तदा तत्र परिवर्तनं स्वाभाविकमेव । तत्तु व्याकरणे वर्णलोपादिभिः निपातनप्रयोगैश्च सूच्यते । अतो व्याकरणस्य काठिन्यं संस्कृतस्य राष्ट्रभाषाकरणे प्रतिबन्धकं भवितुं नार्हतीति मन्यामहे ।

ननु प्रस्तुतं परित्यज्य सुचिरकालं लोकमुखादपगताया अस्याः पुनरुज्जीवने को वा महान् लाभ इति चेत्—तेन सर्वरक्षा भवेदिति संक्षेपेण ब्रूमः । हिन्दीभाषायास्तथाङ्गलभाषाया राष्ट्रभाषाकरणे ये ये दोषाः प्रदर्शितास्तेषामत्र न काप्याशङ्कास्यात् । यतः संस्कृतभाषा प्राचीनसाहित्यसमृद्धा, सर्वैभारतीयैस्तथा वैदेशिकैः सममेवादृता, स्वतन्त्रभारतस्य गौरवोद्बोधिका च ।

किञ्च, स्वकीयत्वभावना एव स्वतन्त्रताया बीजम् । हिन्दीभाषायां प्रान्तीयत्वमस्तीति तस्यां सर्वभारतीयानां स्वकीयत्वभावना नोदेतुं शक्यते । आङ्गलभाषायान्तु सुदूरपराहता विदेशीयत्वात् संस्कृतं तु आहिमाचलात् कुमारिकापर्यन्तं सर्वैः स्वकीयत्वेन भाव्यते, आद्रियते, स्वधर्मीयकर्मसु व्यवह्रियते च । अतः सैव भाषा अङ्गीकर्तव्या या विशालस्यास्य देशस्याखण्डतारक्षणे साधिका भवेन्न तु बाधिका ।

अधुना तु एकैव समस्यावशिष्टा । सा च कासौ पद्धतिर्येन सत्वरं स्वल्पायासश्च भाषाया अस्याः पुनश्चरुज्जीवनं सम्भवेदिति । तत्र किञ्जिद् ब्रूमः ।

शिक्षाविभागेन या त्रिभाषासूत्री स्वीकृता तत्र क्रमः परिवर्तितव्यः ।

तद् यथा—प्रथमं प्रान्तीयभाषा, ततः संस्कृतम्, ततश्च आङ्गलम्। आसां भाषाणां पाठ्यक्रमोऽपि कीदृशो भवेदिति संक्षेपं प्रदर्श्यते।

२य कक्षा पर्यन्तम्—प्रान्तीयभाषामात्रम्—

३य कक्षातः—प्रान्तीयभाषयासह संस्कृतम् (अत्र प्राथमिक संस्कृत-शिक्षणाय आलेख्य-छन्दोभिर्मनोरञ्जकानि पुस्तकानि प्रणेतव्यानि)

६ष्ठ कक्षातः ८म पर्यन्तम—आङ्गलभाषारम्भः। (अत्र त्रिभाषापूर्त्तिः)

९म कक्षातः ११श पर्यन्तम्—मातृभाषा संस्कृतञ्च आवश्यिकरूपेण, आङ्गलं च आवश्यिकैच्छिकरूपेण।

एवं सति संस्कृतभाषायाः सम्यक् प्रसारः स्यात्तथा केवलानामनुरागिनामेव आङ्गालभाषायां प्रवेशः स्यात्। एतेन सह अर्थानुकूल्येन प्राचीन चतुष्पाठीनां सुरक्षया नूतनानाञ्च स्थापनेन संस्कृतस्य प्रसारो द्रुततरः स्यात, तेन च प्रायो विंशतिबर्षमध्ये एव षंस्कृतभाषा पूर्णाङ्गतया राष्ट्रभाषापदवीमारोढु समर्था भवेदिति मन्यामहे। एवं प्रकल्पे गृहीते वर्तमानशिक्षाधारापि व्याहता न भवेत।

अन्यथा स्वतन्त्र भारतस्योरसि आङ्गलभाषा गुरुभारं प्रस्तरमिव सदैव निहिता स्यात्, हिन्दी तु बहुभिरसमर्थिता आङ्गलपुच्छभूता एव राष्ट्रभाषेति नाममात्रमवलम्ब्य तिष्ठेदित्यस्माकमाशङ्का। तदत्र विवेचकैर्विभाव्यमित्यलम्।

---

## श्रौतो ज्ञानकर्म्मसमुच्चयवादः

[ निबन्धकः—**श्रीचारुकृष्णदर्शनाचार्यः** ]

तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु।

तदेतदित्युपसंहार उत्तरग्रन्थसङ्गत्यै, तदेतत् पूर्व्वोक्तं ब्रह्म-क्षत्र-विट्-शूद्र-रूपवर्णत्रितयमभूदित्यर्थः। क्षत्रादिसृष्टिमुक्त्वा प्रकृतोपयोगित्वाद् ब्राह्मण-सृष्टिमाह,—यद् ब्रह्म अग्निनैव रूपेण, न तु रूपान्तरेण, देवेषु मध्ये ब्रह्म अर्थात् ब्राह्मणजातिरभवत्, ब्रह्म साक्षादग्निरूपेणैव ब्राह्मणोऽभवदित्यर्थः। देवतान्तरे तु पूर्व्वम् इन्द्रादिरूपेण भूत्वा पश्चात् तत्र क्षत्रियादिरूपेणाधिष्ठाय क्षत्रियादिरभवत्, अत इन्द्रादिषु विकृतेन क्षत्रियादिरूपेणाधिष्ठाय क्षत्रियादि-वत् न अग्नौ विकृतेन ब्राह्मणरूपेणाधिष्ठाय ब्राह्मणोऽभवदित्यर्थः, एवं मनुष्येषु ब्रह्म साक्षात् अविकृतमेव ब्राह्मणजातिरभवत्, न तु पूर्व्वसृष्टेषु केषुचिन्मनुष्येषु विकृतेन ब्राह्मणरूपेणाधिष्ठाय ब्राह्मणजातिरभवत्, क्षत्रियादौ तु पूर्व्वसृष्टेषु केषुचित् मनुष्येषु विकृतेन क्षत्रियादिरूपेणाधिष्ठाय क्षत्रियादिजातिरभवदिति भेदः, अतः क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्र इत्युक्तम्, नत्वेवं ब्राह्मणेन ब्राह्मण इति, एतदेव श्रेष्ठत्वं ब्राह्मणस्य ज्ञेयम्। परैरप्युक्तं 'क्षत्रादिषु विकारापन्नमग्नौ ब्राह्मण एव चाविकृतं स्रष्टृब्रह्मे'ति। अग्निवद् ब्राह्मणस्य नामान्तराभावान्नामुकेनेत्युक्तम्। तस्मादिति यस्माद् देवेषु अग्निरेवाविकृतं ब्रह्म, मनुष्येषु च ब्राह्मण एवाविकृतं ब्रह्म तस्मादग्नेर्ब्राह्मणस्य च साक्षात् ब्रह्मत्वादित्यर्थः, अथवा देवेषु अग्नौ ब्रह्मणः साक्षात ब्राह्मणरूपेणा-विर्भावात, मनुष्येषु च केषुचित् साक्षाद् ब्राह्मणरूपेण ब्रह्मण आविर्भावात्, देवेषु मध्ये अग्नावेव इन्द्रादीनुद्दिश्य होमरूपं कर्म्म कृत्वा न तु इन्द्रादौ, मनुष्येषु च मध्ये ब्राह्मणजातावेव दानादिकर्म्म कृत्वा न तु क्षत्रियादौ, लोकं ब्रह्म द्रष्टुमिच्छन्ति मुमुक्षव इति शेषः, "स्वं लोकमदृष्ट्वा प्रैती'ति व्यतिरेके निन्दाश्रुतेः "यज्ञेन दानेन तपसानाशकेनैतमेव विदित्वा मुनिर्भवती"ति वक्ष्यमाणाच्च। एतमेव परमात्मानमेव विदित्वा साक्षात्कृत्य मुनिः समाधिमानित्यर्थः, न तु कर्म्मफलमिच्छन्ति तत्प्राप्तावग्निब्राह्मणयोर्ब्रह्मत्व-ज्ञानापेक्षाभावात् पूर्व्वतन्त्रविदां तथा दर्शनाच्च। लोकृ दीप्ताविति धातो-र्लोक्यते दीप्यतेऽसाविति लोकः प्रकृष्टभास्वरः स्वप्रकाशः परमात्मेति यावत्, "तस्य लोकाः स उ लोक एवेति"वत्। तत्र व्याख्यातं परैरप्येवमेव,

आत्मनश्च ज्योतिर्म्मयत्वं "यदतः परो दिवो ज्योतिर्द्दीप्यते" 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य" "तच्छुभ्रं ज्योतिषां ज्योतिः" "तमेव भान्तमनुभाति सर्व्वम्" इत्यादि श्रुतिसिद्धं "ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।

"दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः ॥"

इत्यादि स्मृतिसिद्धं च । सूत्रं च पारमर्षं "ज्योतिश्चरणाभिधाना"दिति । न्यायाच्च लोकपदस्य परमात्मपरत्वं बोध्यम् । तथा हि अत्र लोकपदं भुवनपरम् आत्मपरं वा, तत्र भुवनपरं प्रसिद्धम्, "लोकस्तु भुवने जने"इति कोषात्, आत्मपरं च दृश्यते वेदे "तमेतं प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" "अहरहर्गच्छन्तः प्रजा एनं ब्रह्मलोकं न विन्दन्ति" "एष ब्रह्मलोकः सम्राट् एनं प्रापितोऽसि ।" "स विश्वकृत् स हि सर्व्वकर्त्ता तस्य लोकाः स उ लोक एव", इति श्रुतिभ्यः । अतः संशये आत्मपरमेव वाच्यं, पश्चात् तद्दर्शने दोषश्रवणात् "स्वं लोकमदृष्ट्वा प्रैती"ति, अन्यत्राप्युक्तं "यो वा एतदक्षरं गार्ग्य विदित्वाऽस्माल्लोकात् प्रैति स कृपणः" इति "आत्मानमेव लोकमुपासीत" "स य आत्मानमेव लोकमुपास्ते" इत्युत्तरश्रुतिभ्यां च । यथा "अक्ताः शर्करा उपदधाती"ति श्रुतौ शर्कराणामञ्जनयोग्यत्वात् तैलेन वसया घृतेन वेति संशये अविशेषात् येन केनाप्यञ्जनप्राप्तौ पश्चात् "तेजो वै घृतमि"ति घृतप्रशंसादर्शनात् घृतेनैवाञ्जनं निर्णीतम्, तथा च पारमर्षं सूत्रम् "सन्दिग्धेषु वाक्यशेषादि"ति । इत एवारभ्यात्मपरा लोकशब्दा उक्ता उत्तरत्र । तस्मात् अग्निसम्बन्धं कर्म्म कृत्वा लोकं कर्म्मफलमिच्छन्तीत्यपास्तम् ।

तदेवमग्नेर्ब्राह्मणस्य च ब्रह्मत्वज्ञानेन तस्मिन् कर्म्म कृत्वा परमात्मानं द्रष्टुमिच्छन्तीत्यर्थः । तस्मान्नेदमग्निब्राह्मणयोः प्रशंसापरं, तयोर्ब्रह्मत्वप्रतिपादनपरमेव ज्ञेयम् । पूर्व्वोल्लिखितश्रुतौ यज्ञदानादेर्वेदनसाधनत्वमेव प्राप्तम्, न विविदिषासाधनत्वम्, आचार्येण च ज्ञानसाधनप्रकरणे "सर्व्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" "विहितत्वाच्चाश्रमकर्म्माणि" "सहकारित्वेन चे"ति सूत्रत्रय-

मुक्तम् । सहकारित्वं च भवति समकालिकयोरेव कारणयोर्नतु विदूरवर्त्तिनोः, व्याख्यातं चास्माभिः सूत्रभाष्ये तथैवेति । अत्रापि व्यतिरेके दर्शनाभाव एवोक्तः, "स्वं लोकमदृष्ट्वा ऽतीत्त"ति । न तु विविदिषाऽभावः । एवमग्नेर्ब्रह्मत्वं ज्ञात्वा साक्षाद् ब्रह्मरूपेऽग्नाविन्द्रादीनुद्दिश्य होमे लोकस्य ब्रह्मणो दर्शनं, तथा ब्राह्मणस्य ब्रह्मत्वं ज्ञात्वा साक्षाद् ब्रह्मरूपे ब्राह्मणे अग्निनिरपेक्ष-ब्राह्मणजातिमात्रज्ञानाद् देवानुद्दिश्य दानादौ कृते लोकस्य ब्रह्मणो दर्शनं भवतीत्यर्थः ।

नात्र ब्राह्मणस्य कर्त्तृत्वेन कर्म्मणा सम्बन्धः, परं कर्म्माधिकरणत्वेनैव. "देवेष्वग्नौ मनुष्येषु ब्राह्मणे" इत्यभिसमभिव्याहारात्, अग्नौ हुत्वा ब्राह्मणे दत्त्वेत्यर्थः । मन्त्रश्च—"ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमी"ति । यथा इन्द्रादिदेवतोद्देशेनाग्नौ हविषस्त्यागस्तथा विष्ण्वादिदेवतोद्देशेन ब्राह्मणे भोज्यादिदानं च शास्त्रे दृश्यते । यथा मलमासतत्त्वधृतं वामनपुराण-वचनम्,—

विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ ।
देयानि विप्रमुख्येभ्यो मधुसूदनतुष्टये ॥" इति,

तथा विष्णुधर्म्मोत्तरेऽग्निपुराणे च—

"यत्र यत्र भवेत् प्रीतिर्विषयेषु महामुने ।
तं तमच्युतमुद्दिश्य विप्रेभ्यः प्रतिपादयेदि"ति ॥

अतः पात्रे दानादिकमुक्तं शास्त्रेषु, यथा गीतासु—

"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥" इति
"देशे काले विधानेन पात्रे दत्तं विशेषतः ॥" इति च ।

अपात्रे दानं निन्दति च—

"अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥" इति

दानादिपात्रत्वं च ब्राह्मणस्यैव, तथा च दायभागधृता स्मृतिः—

"विद्याशीलो धर्म्मयुक्तः प्रशान्तः
क्षान्तो दान्तः सत्यवादी कृतज्ञः ।
वृत्तिग्लानो गोहितो गोशरण्यो
दाता यज्वा ब्राह्मणः पात्रमाहुः ॥ इति ।

अतो ब्राह्मणमुखेनैव स्वस्य भोजनमतिप्रीतिकरं मन्यते भगवान्, यथाह श्रीमद्भागवतम्—

"नाहं तथास्मि यजमानहविर्वितान
श्च्योतद्‌घृतप्लुतमदन् हुतभुङ्‌मुखेन ।
यद्‌ ब्राह्मणस्य मुखतश्चरतोऽनुघासं
तुष्टस्य मय्यवहितैर्निजकर्म्मपाकैः ॥" इति ।

यत्र देवाधीनपुरुषार्थस्तत्रापि न सर्व्वस्मिन् कर्म्मण्यग्न्यपेक्षा, परं होम-कर्म्मण्येव, विष्ण्वादिसम्प्रदानादेरपि शास्त्रेऽभिधानात्, तथाच श्रीभागवते भगवद्‌वाक्यं—

"तद्‌ यदिष्टतमं लोके यच्चातिप्रियमात्मनः ।
तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥" इति ।

तदुत्तराप्रतिपत्तिस्तु ब्राह्मण एव कार्य्या न क्षत्रियादौ,

"देवे दत्त्वा तु दानादि देवे दद्याच्च दक्षिणाम् ।
तत् सर्व्वं ब्राह्मणे देयमन्यथा निष्फलं भवेत् ॥" इति स्मृतेः ।

ब्राह्मणाधीनपुरुषार्थप्राप्तावग्न्यपेक्षाभावेऽपि सम्प्रदानभावेन ब्राह्मणनिमित्त-क्रियापेक्षा स्यादेव, ब्राह्मणसम्प्रदानकदानस्य शास्त्रे बहुलमुपलम्भात् तस्यैव पात्रत्वात् तद्दानस्यैव सात्त्विकत्वेन मुख्यत्वात्। तत एव च प्राप्यते मुख्यं फलम्। नातो ब्राह्मणजातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। न च केवलं ब्राह्मणकर्त्तृकदानादिकर्म्मणापि तत्प्राप्तेः श्रुत्यैव सहस्तितरवात्,

"यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवती"ति, उक्तं च भगवता—

यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्येव तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तममि"ति ॥
"नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते ।
मोहात् तस्य परित्यागस्तामसः परिकीर्त्तितः ॥ इति ।

काम्यकर्म्मत्यागस्यैव च सन्न्यासत्वमुक्तं "काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदु"रिति, विस्तरस्तु सूत्रभाष्येऽनुसन्धेयः । सन्न्यासिनां ध्यानस्य चात्मदर्शनहेतुत्वं चित्तशुद्धिद्वारैव न तु साक्षादसम्भवात्, श्रुतावप्युक्तम्—

"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तुतं पश्यति निष्कलं ध्यायमान" इति ज्ञानप्रसादेन चित्तस्य संशुद्धया इत्यर्थः । एवं यज्ञादेरपि ज्ञेयम्, पूजाश्राद्धादेरपि च यज्ञत्वम् । अत उक्तं याज्ञवल्क्येन—

"न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते ॥" इति ।

मनुना तु जपस्यैव प्रकरणात् "जप्येनैव तु संसिध्येदि"त्युक्तम् । न तु दानादिकमुपेक्षितं, श्रुतौ "यज्ञेन दानेन तपसेत्या"द्युक्तेः, न च ब्राह्मणस्यैव केवलं श्रौतमन्त्रजपेनेष्टसिद्धिः परं क्षत्रियवैश्ययोरपि तत्सम्भवात् न च तयोरधिकारः पारिव्राज्ये । यज्ञे हिंसासत्त्वात् तत्त्यागार्थमेव मत्र इत्युक्तं नत्वेतावता पारिव्राज्यं लक्षितं तेन, "कुर्य्यादन्यन्नवा कुर्य्यादि"ति यज्ञादेरप्यनुमोदनादनुल्लेखाच्च पारिव्राज्यस्य । क्षत्रस्य च भूरिश्रवसोऽग्निहोत्रेणैव भगवत्तुल्यरूपेण स्वधामप्राप्तिर्भगवतैव स्वयमुक्तत्वात् द्रोणपर्व्वणि, दर्शितं चास्माभिः सूत्रभाष्ये । नैष्ठिकब्रह्मचर्य्येणाप्यपुनरावृत्तिलक्षणब्रह्मलोकप्राप्तिर्मनुनैवोक्ता—

"एवं चरति यो विप्रो ब्रह्मचर्य्यमविप्लुतः ।
स गच्छत्युत्तमस्थानं न चेहाजायते पुनः ॥" इति

तत्राग्निहोत्रस्याप्यनुष्ठानात्—

"प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मन" इति। नातः पारिव्राज्यैकान्तापेक्षा मोक्षे इति भाव्यं शास्त्रतात्पर्य्यविद्भिः। स्वकल्पितैः कल्पनाजालैर्वराकान् श्रौतस्मार्त्तकर्म्ममार्गात् सुचिरानुवृत्तादकस्मात् प्रच्याव्य कथञ्चित् स्वगोष्ठीगर्त्तप्रविष्टतापादन एवाग्रहातिशय्यं परेषाम्। अतो ज्ञानकर्म्मणोः समुच्चयं श्रुतिप्रसिद्धं बलादपलपितुमतिकृच्छ्रेणाकाण्डे पारिव्राज्याकर्षणं तेषामपहेयम्।

## एताभ्यां हि रूपाभ्यां ब्रह्माभवत्

एताभ्यामिति हिरवधारणे, ब्रह्म एताभ्यामग्निब्राह्मणाभ्यां कर्म्माधिकरणरूपाभ्यामेव साक्षादभवत्, न तु क्षत्रियादिरूपैरित्यर्थः। एतेनाग्नेर्ब्राह्मणस्य च ब्रह्मत्वविद्यया मुमुक्षुभिः कार्य्यं कर्म्मेति प्राप्तम्, यथा—"अस्थूलमनन्वह्रस्वमदीर्घमि"त्यक्षरतत्त्वमुक्त्वा "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेव तस्य तद्भवती"त्युक्तं तथा "अग्नावेव देवेषु लोकमिच्छन्ते मनुष्येषु ब्राह्मणे" इत्युक्त्वा एतच्छ्रुत्युक्तमेव लोकं स्वपदेन स्पष्टीकृत्य स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति "यदिह वा अप्यनेवंविद्महत् पुण्यं कर्म्म करोति तद्धास्यान्ततः क्षीयत एवे"ति व्यतिरेके निन्दाऽभिहिता। अतोऽग्नेर्ब्राह्मणस्य च ब्रह्मत्वज्ञानेन तस्मिन् होमे दानादौ च कृते ब्रह्मण्येव होमो दानं च कृतं भवतीति ब्रह्मण एवोपासनारूपत्वाच्च ज्ञानसमुच्चितस्य कर्म्मण आत्मदर्शनहेतुत्वमिति भावः। अत्राग्निब्राह्मणयोर्ब्रह्मत्वप्रतिपादनं यज्ञे दाने च तदुभयरूपेण ब्रह्मण एवोपासनाविधानार्थं तत्प्रयोजनं च तथाभूताभ्यामेव यज्ञदानाभ्यां स्वच्छन्दं मोक्षप्राप्तिः, सा चात्मदर्शनद्वारा न साक्षात्, ब्रह्मवेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" "ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते" "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिभ्यः। एवञ्च ज्ञानसमुच्चितकर्म्मणैवात्मज्ञानात् सुलभोऽक्षयफलं मोक्षः कर्मिणामिति प्रदर्शितं श्रुत्या कृपया, अत एतयोरेव लोकमिच्छन्तेति भवन्ती श्रुतिर्ब्रह्मैव द्रष्टुमिच्छन्ति प्राप्तुं वेति ब्रूते, न तु कर्म्मफलमिति सुव्यक्तम्

कर्म्मफलप्राप्तौ तयोर्ब्रह्मत्वज्ञानापेक्षाभावादित्युक्तम्। अतः स्वच्छन्दं मोक्षप्राप्तये यज्ञदानादिभिर्ब्रह्मण एवोपासने यतितव्यं धीमद्भिरिति व्यवस्थापितम्। उक्तं च भगवता—

"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥"

तथा—"योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छती"ति। मुनिर्मननवान्। अतोऽग्निब्राह्मणयोस्त्यागोद्देश्यदेवतादेस्त्यज्यमानहविरादेश्च ब्रह्मज्ञानवान् सन् कर्म्मयोगं कुर्व्वन् शीघ्रमेव पश्यति परमात्मानं कर्म्मीत्यर्थः।

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणाहुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिने"त्युक्तेरिति ज्ञेयम्।

अत्र होमदानाधिकरणयोरग्निब्राह्मणयोर्ब्रह्मत्वं दर्शितम्, उपरिष्टाद् यागदानोद्देश्यानां देवतादीनामात्मनामपि ब्रह्मत्वं वक्ष्यति। नात्र वर्णाश्रमाचारप्रचारार्थं चातुर्व्वर्ण्यसृष्टेरुल्लेखस्तदकरणात्, न चेदं सृष्टिप्रकरणं परं "यदहं ब्रह्मास्मी"ति ब्रह्मात्मैकत्वदर्शनात् सर्व्वभवनमुक्तं तस्यैव प्राप्तिसाधनज्ञानकर्म्मसमुच्चयोपासनाङ्गयोरग्निब्राह्मणयोर्ब्रह्मत्वप्रतिपादनार्थमेव। न चाविद्याधिकारे कर्म्माधिकारार्थं वर्णविभागः श्रुतौ याजनादेरनुल्लेखात् तेजःशौर्य्यकृषिवाणिज्यसेवादेरप्यनुल्लेखाच्च, किन्तु अग्नौ होमेन ब्राह्मणे दानेन चात्मदर्शनं वक्तुमेव, तेन "स्वं लोकमदृष्ट्वे"ति स्वशब्दः स्पष्टार्थमेवोक्तः न त्वन्यधीनलोकनिवृत्त्यर्थमिति। प्रक्षेपेण पुनस्तस्यैव प्रतिनिर्द्देशादिति।

**अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति, यथा वेदो वाऽननूक्तोऽन्यद्वा कर्म्माकृतम्।**

व्यतिरेके दोषमाह अथेति, अथेति त्वर्थे, पूर्व्वोक्तज्ञानसमुच्चितयागदानाभ्यां स्वं लोकमात्मानमदृष्ट्वा यः पुमान् प्रैति देहं त्यक्त्वा गच्छति, तमेनं पुमांसम् अविदितः अज्ञातः स आत्मा न भुनक्ति न पालयति संसारभयान्न रक्षतीति

यावत्, अत्र दृष्टान्तमाह यथाऽनधीतो वेदो ब्राह्मणं न पालयति, यथा वा यागदानादिकर्म्माननुष्ठितं सत्लोकं न पालयति तद्वदित्यर्थः। अत्र ज्ञानकर्म्मणोः समुच्चयापातभियैव सन्निहितेनात्मोपासनेन सङ्गतिमदर्शयन्नति-व्यवहितेन कथञ्चित् तत्प्रदर्शनप्रयासः परेषां मनोविलास एव। आत्म-दर्शनप्रकरणे तद्विरुद्धोपासनप्रकारप्रपञ्चनमपि लोकानां बुद्धिव्यामोहनार्थमेव ज्ञेयम्। अत्राग्नौ ब्राह्मणे च लोकमिच्छन्तीत्यस्य अग्नौ होमेन ब्राह्मणे च दानेनात्मानं प्राप्तुमिच्छन्तीत्यस्यार्थस्य दर्शितत्वात् ज्ञानसमुच्चितेन कर्म्मणात्म-ज्ञानमेवोदेतीत्युक्तं भवति कर्म्मणां पुमर्थसाधनत्वेऽपि येन केनापि कर्म्मणा न यस्य कस्यापि पुमर्थस्य प्राप्तिः परं कर्म्मविशेषेणैव पुमर्थविशेषप्राप्तिरित्यवश्यं वाच्यम्, एवं चेत् मोक्षोऽपि पुमर्थोऽग्निब्राह्मणयोर्ब्रह्मत्वज्ञानयुक्तेनैव कर्म्मणा प्राप्यते, 'तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु' "यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवती"ति श्रुतिभ्याम्। लोकमिच्छन्ते आत्मानं द्रष्टुमिच्छन्तीत्यर्थः। विदित्वा साक्षात्कृत्य, मुनिर्भवति समाधि-मान् भवति, अत एतादृशेन कर्म्मणात्मदर्शनमेव भवतीति प्राप्तम्। तद्दर्शनाच्च तत्प्राप्तिर्देहपातादूर्द्ध्वमेव ब्रह्मलोके न तु ततः प्राक् प्रारब्धप्रतिबन्धात्। "ब्रह्म-विदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" "ब्रह्म-लोकमभि संपद्यते न च पुनरावर्तते" "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति श्रुतिभ्यः। विस्तरस्त्वाकरेऽनुसन्धेयः। "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमान" इति श्रुतेर्यथा सन्न्यासी ध्यानेन चित्तस्य विशुद्धतामापाद्य तेन विशुद्धेन चित्तेनात्मानं पश्यति तथा कर्म्मी च कर्म्मणा निष्कामेण चित्तस्य विशुद्धतामापाद्य तेनैव चित्तेनात्मानं पश्यतीति शास्त्रार्थोऽविकलः सिध्यति अतो "यत् कर्मिणो न प्रवेदयन्तो"ति कर्मिणां ब्रह्मज्ञानाभावापादिका या श्रुतिः सा सकामकर्म्मपरैव ज्ञेया "रागात् तेनातुराः क्षीणलोकाश्च्यवन्ते" "नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ती' त्युत्तरश्रुतिभ्याम्। न च निष्कामाणां यावज्जीवमिहोत्रादिकारिणां सावित्रीजपादिमतां वा नाकलोकप्राप्तिर्भवति युज्यते वा। तथाच मनुः—

"योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान् ॥
जप्येनैव हि संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्नवा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥" इति

नित्याग्निहोत्रिणं भूरिश्रवसं प्रति भगवताप्युक्तं याहि त्वं गरुड़ारूढ़ो मद्धामेति दिक् । एवञ्च ज्ञानयुक्तात् कर्म्मणश्चित्तस्य वैशद्यादात्मनो दर्शनादेव ब्रह्मप्राप्तेः प्राप्ते "रविदितोऽपि परमात्माख्यो लोकः प्राप्यते' इति पूर्व्वपक्षकल्पनं परेषां कल्पनमेव । एवञ्चात्मदर्शनं मोक्षहेतुस्तच्चात्मोपासनरूपेण ज्ञानसमुच्चितेन यागदानादिकर्म्मणा द्रुतं प्राप्यते तेन चाविद्याख्यं कर्म्म बन्धहेतुः क्षीयते "क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथे"ति श्रुतिस्मृतिभ्याम्, कर्म्मणा च बन्धहेतूनामभावाद्देहान्मुक्तौ परमात्मलोकप्राप्तिरिति वेदान्तदुन्दुभिः ।

**यदि ह वा अप्यनेवंविद् महत् पुण्यं कर्म्म करोति तद्धास्यान्ततः क्षीयत एव ।**

ननु कर्म्मणैवाश्वमेधादिना महताऽक्षयं फलं स्वर्गरूपं प्राप्यते किमात्मविद्यया ? तत्राह 'यदि ह वा' इति, इतःपूर्व्वं तस्मादिति पठितव्यम् आत्मदर्शिन आत्मकर्तृकपालनाभावादित्यर्थः । अनेवंवित् ब्रह्मैवाग्निरूपेण ब्राह्मणरूपेण चोपास्यते एवं ज्ञानाभाववानित्यर्थः । यदि महत् पुण्यं कर्म्माश्वमेधादिकमपि करोति तदाऽस्य तत् महदपि कर्म्माश्वमेधादि अर्थात् तज्जन्यमदृष्टमन्ततः फलभोगावसाने क्षीयत एव, कर्म्मत्वाभाव्यात् लौकिककर्मवत् । तथा च श्रुत्यन्तरं तद् यथेह कर्मचितो लोकः क्षीयते तथाऽमुत्र पुण्यचितो लोकः क्षीयते इति, आह च श्रीभगवान्—

"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्व्वकम् ॥"

तथा—"अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥" इति

**आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न ह्यास्य कर्म्म क्षीयते।**

इन्द्रादयो देवा न मत्तो भिन्ना मद्विभूतित्वादतस्तद्रूपेणाहमेवोपास्य इत्येवं विधिं हित्वा मद्भिन्नत्वेन तेषामुपासनात् तदुपासनमविधिपूर्व्वकमेव भवतीत्यर्थः। "अतोऽपाम सोमममृता अभूमे"त्यमृता अमरा देवता अभूम न मुक्ता इत्यर्थः। अनेवंविदः कर्म्मफलश्रवणोत्तरं तर्हि एवंविदः कर्म्म कीदृशं स्यादित्येवंविदः कर्म्मश्रवणाकाङ्क्षायाः स्वत एवोदयादनेवंविदः कर्म्मणां क्षयिष्णुत्वं प्रदर्श्य एवंविदः कर्म्मणामक्षयत्वं दर्शयितुमभिन्नब्राह्मणयोर्ब्रह्मत्वविदस्तदधिकरणकहोमदानाभ्यां ब्रह्मण एवोपास्यत्वात् तदुपासनरूपकर्म्मणामक्षयत्वमाह "आत्मानमेव लोकमुपासीते"ति, तस्माद् विप्रह्यायात्मनिरपेक्षं कर्म्म अक्षयकर्म्मप्राप्तयेऽभिन्नब्राह्मणयोर्ब्रह्मत्वज्ञानपूर्व्वकतदधिकरणकहोमदानयोरात्माधिकरणकत्वेनात्मोपासनरूपत्वात् तादृशेन कर्म्मणात्मोपासनमेकार्यमित्यर्थः। तस्यफलमाह—स य आत्मानमेव लोकं स्वप्रकाशमयं तत्त्वं यागदानादिभिः कर्म्मभिरुपास्ते, अस्योपासितुः कर्म्म यागदानादिजन्यमदृष्टं न क्षीयते फलं च तस्याक्षयो मोक्ष एव स्यान्न स्वर्गादि, राजाश्रितदुर्बलस्येव तस्य बलवत्तरत्वात्, तदुक्तम्—

"अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितै"रिति॥

यदेव कर्म्मज्ञानविधुरेण कृतं क्षयशीलमेव स्यात् तदेवोक्तप्रकारेण ज्ञानवता कृतं चेत् तदात्मोपासनरूपं सदक्षयमेव स्यादित्यर्थं एतस्यैव प्रकृतत्वात्। अतो ज्ञानसमुच्चितमेव कर्म्म कर्त्तव्यं मुमुक्षुभिरिति प्राप्तम्। न च सर्व्वकर्म्मसन्न्यासेन श्रवणादिमात्रेणात्मोपासनं कार्यं मोक्षप्राप्तये इति मन्तव्यं तथा श्रुत्यभावात् कर्म्मणामेव ज्ञानसमुच्चितानां तत्र तत्रोल्लेखात्, "तमेतं प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्त्ये"त्येतावन्मात्रं तु तत्र प्रासङ्गिकमागन्तुकमेव न तु सन्न्यासस्यावश्यकतापरम्, आत्ममहिमोद्घोषणस्यैव तत्र प्रकृतत्वादित्युपरिष्टात् प्रतिपादयिष्यते। ब्राह्मणाश्च प्राय एवासन् ज्ञानकर्म्मणोः समुच्चयो-

पासकाः, केचिदेव स्वल्पे सांख्ययोगिन आसन् सन्न्यासिन इति दृश्यते पुराणभारतादौ। न च विना सन्न्यासमात्मज्ञानेऽनधिकारः प्रमाणाभावात्, सन्न्यासिन एवात्मज्ञानं लभेरन् मुक्ताश्च भवेयुर्नान्य इति श्रुत्यभावात्, अतोऽत्रोपासनं यागादिभिरेवाराधनं भगवतः परात्मनो ज्ञेयम्। ज्ञानसमुच्चितस्य च कर्म्मणो बलवत्तरत्वमुक्तं श्रुत्यैव "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति। "यदेव विद्ययेति ही"ति न्यायश्चाह। उपनिषदा ब्रह्माभिन्नत्वधिया, एतेन तत्तद्देवतोपासनकर्म्मणां क्षयिष्णुत्वादात्मोपासनकर्म्मणां चाक्षयत्वात् संयोगपृथक्त्वन्यायात् तत्तत्कर्म्मभिर्देवतोपासनां हित्वा तैरात्मोपासनमेव कार्यमित्युक्तं भवति, चरुपुरोडाशादिवद् देवतानां कर्माङ्गत्वात् तत्तद्देवताककर्म्मभिरात्मानमेवोपासीत नत्विन्द्रादीन्, उपासनाप्रकारं चानुपदमेव वक्ष्यति श्रुतिरेव स्वयम्, इन्द्राय स्वाहा, अग्नये स्वाहा, वरुणाय स्वाहेतीन्द्रादिसम्प्रदानकहोमेऽपि समुच्चयमार्गे तत्तद्देवतात्मत्वेन परमात्मन एवोपास्यत्वात् तदुपासनं फलतः परमात्मन एव भवति नत्विन्द्रादेरित्यर्थः। यथा पितुरसन्निधाने तत्प्रतिनिधीभूतपुत्रस्य पितृत्वेन सेवने तच्छ्रवणात् पितृप्रीत्युदयात् तदुपासनं पितुरेव स्यात् तद्वदित्यर्थः। तथाच विष्णुपुराणम्—

"कव्यं यः पितृरूपधृग् विधिहुतं हव्यं च भुङ्क्ते प्रभु-
र्देवत्वे भगवाननादिनिधनः स्वाहास्वधासंज्ञितम्॥" इति,

"यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताव्ययात्मा हरिरीश्वरोऽत्रे"ति च वितनिष्यते चोपरिष्टात्।

न च कर्म्माभावादेव कर्म्मक्षयाभावः, यस्यैव महतोऽपि कर्म्मणः क्षयः प्रागुक्तस्तस्यैव प्रकृतस्याक्षयत्वप्रापकोपायस्य विवक्षितत्वात्, सम्भवति च विधित्वे नित्यानुवादस्यायुक्तत्वात्। दृष्टं च विदुषामपि व्यासजनकादीनां कर्म्माचरणम्, उक्तं च भगवता—

"गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते॥" इति

"यावज्जीवमग्निहोत्रं जुहो"तीति श्रुतेश्च। एवञ्च ज्ञानसमुच्चितमेव कर्म्म

कार्यमित्यायातम् । तथाच न्यायाः "विहितत्वाच्चाश्रमकर्म्मापि" "सहकारित्वेन च" "अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनादि"ति च ।

**अस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत् सृजते ।**

न केवलमक्षयमोक्षफलप्राप्तिरेवात्मनः सकाशात् परं सकामानां तत्तत्फलप्राप्तिरपि तत एवेत्याह "अस्माद्ध्येवे"ति, ये हि सकामाः फललोलुपाः कुर्वन्ति सकाममेव कर्म्म तत्तद्देवताकं ज्ञानविधुरं, तेऽपि तत्तद्देवताभ्यो यद्यत् फलं धनपुत्रादि कामयन्ते तत्तदस्मादेवात्मनः सकाशात् परमेश्वरादेव फलतो लभन्ते नत्वग्नीन्द्रादेः, तत्तद्देवतान्तर्यामितया ह्येतस्यैव फलदातृत्वात् । "एको बहूनां यो विदधाति कामान्" "अन्नादो वसुदान" इति श्रुतिभ्याम्, अन्नादश्चरुपुरोडाशादिभोक्ता, वसुदानो धनप्रदाता, आह च स्वयमेव श्रीभगवान्—

"कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥"
"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥"
"स तया श्रद्धया युक्तस्तस्याराधनमहीते ।
लभते च ततः कामान् मयैव विहितान् हितान् ॥"

तथा—"अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव चे"ति हृतज्ञाना इति, अहमेव तत्तद्देवतात्मत्वेन यज्ञीयद्रव्याणां भोक्ता, तेषामन्तर्यामित्वेन तत्तत्फलदाता चेत्येवं ज्ञानं विनष्टं येषा ते तथाभूता इत्यर्थः ।

मयैवेति मयैव तत्तद्देवतान्तर्यामिना विहितान् सृष्टान् कामान् पुत्रवित्तादिफलानि ।

**अथो अयं वा आत्मा सर्व्वेषां भूतानां लोकः, स यज्जुहोति यद्यजते तेन देवानां लोकोऽयं यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणाम्, अथ यत् पशुभ्य-**

**स्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वया यंस्थानि-पीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथाह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवंविदे सर्व्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमांसितम् ॥**

ननु यागदानादिभिः कथमात्मोपासनं स्यात् तैरिन्द्रादीनामेवोपासना-दर्शनादतस्तैस्तैः कर्म्मभिर्यथात्मोपासनं स्यात् तमेव प्रकारं दर्शयितुमादावु-द्देश्यीभूतानामिन्द्रादीनामात्मनां परमात्माभिन्नत्वं दर्शयति "अथोऽयं वा" इति। अथो इति शिष्टवाक्यान्तरारम्भे, वा इत्यवधारणे, अयं पूर्व्वोक्त आत्मा ब्रह्मैव सर्व्वेषां भूतानां प्राणिनां लोकः स्वप्रकाशचैतन्यस्वरूप आत्मा जीव इति यावत् पूर्व्वोक्तव्युत्पत्तेः, पूर्व्वं लोकपदाभिधानात् तदुल्लेखस्तदर्थ-स्मृतिदाढ्यार्थः "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" "ब्रह्मदासा ब्रह्मदाशा ब्रह्मेमे कितवाः" इत्यादिश्रुतिभ्यस्ततो भिन्नाभिन्नस्तदंशो जीवो ब्रह्मैव न ततो भिन्नो गवाश्ववत्। "अंशो नानाव्यपदेशादन्यथाचापी"त्यादि-न्यायादित्यर्थः। 'स उ लोक एवे"ति श्रुतिव्याख्यायां "लोकशब्देनात्मा उच्यते" इति वक्ष्यते परैरपि, मुमुक्षुभिर्न केवलमग्निब्राह्मणयोरेव ब्रह्मत्वाव-धारणं कार्य्यं परं यागाद्युद्देश्यानामिन्द्रादीनामपि तथेति प्राप्तम्, तेन स उपासक इन्द्राय स्वाहा, अग्नये स्वाहा इत्यादि मन्त्रैर्यत् जुहोति इन्द्राय नम इत्यादिमन्त्रैर्यद् यजते पूजयति तेन देवानाम् इन्द्रादीनां लोक आत्मा ब्रह्मांश एव प्रीणितो भवति, एवमुत्तरत्र ; अतः सर्व्वासामेव देवतानामात्मत्वेन तेषामंशी परमात्मैव फलत उपासितो भवतीति प्राप्तम्। अत्र लोकपदस्य भोग्यो नार्थः प्रकरणेऽस्मिन्नात्मपदसमभिव्याहारेणैव लोकपदाभ्यासात्", स्वं लोकमदृष्ट्वा प्रैति""आत्मानमेव लोकमुपासीत" 'स य आत्मानमेव लोकमुपास्ते" इति, "अग्नावेव देवेषु लोकमिच्छन्ते" इति लोकपदमप्यात्मपरमेव दर्शित-मस्माभिः। न च हि पशुपक्षिपिपीलिकादिभ्यः खाद्यप्रदानात् कश्चिद् गृहस्थस्तपस्वी प्रेत्य कुक्कुरमार्जारकाकचटकपिपीलिकाकीटादीनां दासत्वं प्राप्तस्तेषां चिरं भोग्यो भवतीति शास्त्रमस्ति लोकप्रसिद्धिर्वेति शास्त्रार्थोन्मथन एव

साहसस्तेषा सर्व्वथेति हेयं तथा व्याख्यानम् । एवञ्च देवर्षि-पितृ-मनुष्य पशुपक्षि-प्रभृतिप्राणिमण्डलसेवया परमात्मोपासनमेव कार्य्यं विवेकिभिरिति भागवती श्रुतिः कृपया निर्द्दिशति । एवं ज्ञानसमुच्चितेन कर्म्मजातेन यः श्रुति-तात्पर्य्यवित् तत्तद्देवपित्राद्यात्मरूपपरमात्मानमेव लोकमुपास्ते तस्य तद्वीर्य्य-वत्तरं कर्म विश्वप्रलयेऽपि न क्षीयते, चिरादेव परमानन्दमयानन्तब्रह्मप्राप्ति-हेतुत्वादिति वाक्यसमुदयस्यार्थः ।

एवंविदे इति, सर्व्वप्राणिनामात्मनां परमात्माभिन्नत्वज्ञानेन जीवसेवया परमात्मसेवनविद्याभिज्ञायोपासकाय सर्व्वे प्राणिनः स्वस्योपकारकत्वादविनाश-मिच्छन्तीत्यर्थः ।

कर्म्म ज्ञानसमुच्चितं प्रददते मोक्षं फलं वीर्य्यवद्,
वेदान्ताः शतशो रटन्ति महता गाढ़ं प्रबन्धेन तत् ।
एतद् विश्वजनीनमेव भगवद्गीतासु तत्त्वं मुहुः
प्रोक्तं श्रीहरिणादरेण महता स्वच्छन्दमुक्त्यै स्फुटम् ॥
महर्षयोऽन्ये च नृपर्षयो यच्छश्वत् कर्म्म कुर्व्वन्ति परादरेण ।
अतोऽधुनापीश्वरविद्ययाढ्यं कर्म्मैव कार्य्यं न चिराद्विमुक्त्यै ॥इति ।



# वररुचि-कृतः प्राकृत-प्रकाशः

[ सम्पादकः—श्रीसत्यरञ्जन-वन्द्योपाध्यायः ]

( पूर्वानुवृत्तः )

## षष्ठः परिच्छेदः

[ श्रीविद्याविनोदाचार्यकृता प्रकृतपादटीका ]

[ अथ तिङ्विधिः ]

**कृ-दा-श्रु-वचि-गमि-रुदि-दृशि-रूपाणां**
**काहं दाहं सोच्छं वोच्छं गच्छं रोच्छं दच्छं ॥१६॥**

कृ-दा-श्रु-वचि-गमि-रुदि-दृशि-रूपाणामेकवचनान्ताना काहं दाहं सोच्छं वोच्छं गच्छं रोच्छं दच्छं सप्तानां धातूनां भविष्यदुत्तमैकवचनान्तानां रूपाणां स्थाने यथाक्रमेणैते सप्तादेशा भवन्ति। क्वचिदन्येषामन्यच्च। मोच्छं मोक्ष्यामि छेच्छं छेत्स्यामि। भोच्छं भोक्ष्ये। विच्छं वेदिष्यामि। लिङ्-लुटोरप्येवमुदाहार्यम् ॥

**श्रवादीनां त्रिष्वनुस्वारवर्जं हिलोपश्च वा ॥१७॥**

श्रु इत्यादीनां धातूनां श्रु वचि-गमि-रुदि-दृशीनां त्रिष्वपि प्रथम-मध्यमोत्तमेषु यथाक्रमं पूर्वोक्ता आदेशा अनुस्वारवर्जं भवन्ति। तत्र वादेशा अनुस्वाररहिता भवन्तीत्यर्थः। हि-विकरणस्य लोपो वा स्यात्। सोच्छिति सोच्छिहिंति श्रोष्यन्ति। सोच्छिसि सिच्छिहिसि श्रोष्यसि। सोच्छिह सोच्छिहिह सोच्छित्था सोच्छिहित्था श्रोष्यथ। सोच्छिमि सोच्छिहिमि श्रोष्यामि। सोच्छिमो सोच्छिहिमो श्रोष्यामः। एवं वच्यादीनामप्युदाहार्यम्। लिङ्-लुटोरप्येत एव प्रयोगाः ॥

**. उ सु मु लोड्विध्यादि-लिङोरेकस्मिन् ॥१८॥**

लोटो . विध्यादिलिङश्च त्रयाणां प्रथम-मध्यमोत्तमानामेकस्मिन्नेकवचने

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

Vol. L. } १८८६ शकीये कार्तिके { November
१३७४ वङ्गाब्दीये
No. 7 } ५०तम-वर्षस्य ७म सख्या { 1967

## सम्पादकीयम्

परिषत्प्रणयिनो वाचकमहाभागाः, विदितमेतद् भवतां यत् संस्कृत-साहित्य-परिषत्-पत्रिकेयं वर्षद्वयं यावत् प्रतिमासं न प्रकाशमधिगता, परन्तु मासद्वयस्य मासत्रयस्य वा कृते चैकैका प्राकाश्यमापन्ना। प्रकाशनविधौ या काचित् त्रुटिर्जाता सा तु भवद्भिः सहृदयैः क्षन्तव्येति। मुद्रणालयस्य कार्य्यान्तर-व्यपदेशादेतत् संघटितमिति। सौभाग्यात् साम्प्रतं सर्वमेतत् सुष्ठु समाहितम्, आशास्महे इतःपरं प्रतिमासं पत्रिकेयं प्राकाश्यं नीयेत।

---

## आपस्तम्बाश्वलायनयोर्मतविमर्शः

[ निबन्धकः—डः भवानीप्रसादभट्टाचार्यः ]

आपस्तम्बश्रौतसूत्रे आश्वलायनश्रौतसूत्रे च प्रथमं दर्शपूर्णमासयोर्निरूपणमुपलभ्यते। पर्वकाले पूर्णिमायाममावास्यायाश्चारभ्य तदुत्तरदिने प्रतिपदि

समापनीयेष्टिः दर्शपूर्णमासेष्टिरिति व्यवह्रियते। ओषधिप्रभवैर्व्रीहियव-नीवारादिभिः दधिपयःप्रभृतिभिर्वा द्रव्यैः साध्या यागा इष्टय इत्युच्यन्ते। सर्वासामिष्टीनां दर्शपूर्णमासप्रकृतिकत्वं शास्त्रसम्मतम्। निखिलानामैष्टिकानामङ्गानां दर्शपूर्णमासप्रकरण एव समाम्नातत्वादयं दर्शपूर्णमासयागः प्रकृतिरिति परिगण्यते। अन्यासामिष्टीनां प्रकरणे समग्राङ्गोपदेशाभावेन विकृतित्वं सिद्धम्। अतः प्रकृतिभूताया अस्या इष्टेः स्वरूपं प्रथमं निरूपणीयम्। यद्यपि सोमयागानां दर्शपूर्णमासयोश्च न प्रकृतिविकृतिभाव इति सोमयागस्वरूपमपि प्रथमं निरूपयितुं शक्यते, तथापि सर्वेषु सोमयागेषु अङ्गतया बह्वीनामिष्टीनामनुष्ठेयत्वेन विहितत्वात् तासां दर्शपूर्णमाससापेक्षत्वात् प्रथमं दर्शपूर्णमास-स्वरूपनिरूपणस्यैवौचित्यात्तदेव निरूप्यते।

'ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ' [1]इत्यापस्तम्बवचनाद् वेदद्वयेन दर्शपूर्णमासयोः स्वरूपमवगन्तव्यं भवति। तत्र ऋग्वेदमवलम्ब्याश्वलायनः, यजुर्वेदमवलम्ब्यापस्तम्बः कल्पसूत्रप्रणयनं चक्रतुः। दर्शपूर्णमासयोरनुष्ठाने द्वौ कल्पौ भवतः—आधानोत्तरं सायं प्रातरग्निहोत्रमनुष्ठाय पर्वकाले सम्प्राप्ते दर्शपूर्णमासौ कर्त्तव्यावित्येकः। अयमेवेष्टिपूर्वत्वकल्पः। अपरस्तु आधानेनाग्नीन् सम्पाद्य सोमयागार्थं सङ्कल्प्याग्निष्टोमसंस्थाकं ज्योतिष्टोमं निर्वर्त्य तत्समाप्त्यनन्तरं सायं प्रातरग्निहोत्रं कृत्वा प्राप्ते पर्वणि दर्शपूर्णमासौ यावज्जीवं कुर्यादिति। अयमेव सोमपूर्वत्वकल्पशब्देन व्यवह्रियते। तत्रभवान् आश्वलायनः 'ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके प्रागपि सोमेनैके' [2]इति सूत्रयन् इदमेव कल्पद्वयं प्रदर्शयामास।

तत्र सोमपूर्वत्वपक्षे 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति विधिबलात् एकादश्यां सोमार्थं सङ्कल्प्य पर्वणि प्रधानसोमयागं परिसमाप्य परेद्यवि प्रतिपदि दर्शपूर्णमासेष्टिरनुष्ठेया। तत्रापि

---

1 आप० श्रौ० २४।१।५ 2 आ० श्रौ० ४।१।२

प्राथम्यं पौर्णमासेष्टेः, 'पूर्वां पौर्णमासीमुत्तरां वोपवसेत्'[1] इति कात्यायनवचनात्। शतपथब्राह्मणे प्रथमं पौर्णमास्या इष्टेरेवोपक्रान्तत्वात् तदनुसारित्वाच्च कात्यायनश्रौतसूत्रस्य कात्यायनो महर्षिः पौर्णमास्या एव प्राथम्यमभिप्रैति।

आपस्तम्बाचार्यस्तु दर्शेष्टेः प्राथम्यं प्रतिपादयति। अन्वाधानं समाम्नाय तदनन्तरं 'सन्नयतः पलाशशाखां शमीशाखां वाऽऽहरति'[2] इति प्रथमं पलाशशाखायाः शमीशाखाया वा आहरणं विदधानः सूत्रकारो दर्शेष्टेरेव प्राथम्यमवद्योतयति। तैत्तिरीयसंहितायां प्रथमम् 'इषे त्वोर्जे त्वा' इति दर्शमन्त्राणामेवोपक्रमो दृश्यते। अतस्तदनुसारित्वादापस्तम्बश्रौतसूत्रस्य तत्र प्रथमं दर्शेष्टिरेव निरूपिता।

आश्वलायनोऽपि 'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः'[3] इत्यविशेषेणारभ्य यज्ञदेशे होतुरागमनप्रकारं सामिधेनीमन्त्रपठनप्रकारमार्षेयवरणविधिञ्च प्रतिपाद्यानन्तरमावाहननिगदपठनावसरे 'अग्निमग्नीषोमाविति पौर्णमास्याम्' 'अग्नीषोमयोः स्थाने इन्द्राग्नी अमावास्यायामसन्नयतः'[4] इति सूत्रयन् पौर्णमासेष्टेः प्राथम्यं ज्ञापयति। आश्वलायनश्रौतसूत्रन्तु ऐतरेयब्राह्मणमवलम्ब्य प्रवृत्तमिति बहूनां मतम्। ऐतरेयब्राह्मणे च यद्यपि सोमयागाङ्गभूताया दीक्षणीयेष्टेरेवोपक्रमो दृश्यते तथापि सूत्रकारः सर्वासामिष्टीनां प्रकृतिर्दर्शपूर्णमासौ तत्रैव 'तन्त्रस्य समाम्नातत्वात्' इति हेतुं वर्णयन्, दीक्षणीयेष्टिः पौर्णमासान्तर्गताग्नीषोमीयपुरोडाशस्यैव विकृतिरिति पौर्णमासेष्टिरेव प्रथमं कर्त्तव्येत्यभिप्रैति।

एवं क्वचिद्भेदे सत्यप्यापस्तम्बाश्वलायनसूत्रयोः परस्परपूरकत्वमङ्गीकर्त्तव्यम्। आध्वर्यवं निरूपयितुमापस्तम्बः, हौत्रञ्च निरूपयितुमाश्वलायनः प्राधान्येन प्रवृत्तौ। सर्वेषु क्रतुषु यजमानः सङ्कल्पानन्तरं प्रथममध्वर्योर्वरणं करोति। अध्वर्युश्च वृतः स्वीयानि कर्माण्यारभत इति स्थितिः। तत्र दर्शपूर्णमासयोः सम्बन्धीनि हवींषि यथायथं सम्पाद्य वेद्यां तान्यासाद्याध्वर्युः 'होतरेहि' इति

---

1 का० श्रौ० २।१।१ 2 आप० श्रौ० १।१।८

3 आ० श्रौ० १।१।३ 4 आ० श्रौ० १।३।६-१०

होतारमामन्त्रयति। एवमामन्त्रितस्य होतुः कर्माण्याश्वलायनः प्रदर्शयति। अग्निप्रणयनमारभ्याध्वर्युकर्तृकहोत्रामन्त्रणान्तानि यानि कर्माणि तान्याश्वलायनसूत्रे न सन्ति। तत्पूरकत्वमापस्तम्बस्य। एवम् 'हविःष्वासन्नेषु होताऽऽमन्त्रित' इत्यारभ्य 'प्रेषितो जापति' इत्यन्तं यानि होतुः कर्माणि तान्यापस्तम्बसूत्रे न सन्ति। अतस्तत्पूरकत्वमाश्वलायनस्य। एवं विभिन्नविषयकत्वेन द्वयोः परस्परं पूरकत्वे सत्यपि क्वचिदेकस्मिन्नङ्गे तत्र तत्र मतवैषम्यं परिदृश्यते। तदत्र सम्प्रदर्श्य विवेचयामः।

सर्वास्विष्टिष्वार्षेयवरणं नाम किञ्चिदङ्गम्। तदध्वर्युणा होत्रा च कर्त्तव्यं भवति। तत्र होतृवरणावसरे क्रियमाणमार्षेयवरणमध्वर्युकर्त्तृकम्, सामिधेन्यनुवचनानन्तरं क्रियमाणनिगदपाठावसरे होतृकर्त्तृकमार्षेयवरणम्। यस्य यजमानस्य य ऋषयो गोत्रर्षित्वेनोपाख्यायन्ते तस्य त आर्षेयाः। तेषां कीर्तनेन वरणं कर्त्तव्यमित्यार्षेयवरणशब्दार्थः। आर्षेयप्रवरशब्दौ पर्यायौ। गोत्रप्रवरशब्दौ च भिन्नार्थकौ। क्वचिद्धर्मसूत्रेषु समानप्रवरमात्रोपाधिवचनो गोत्रशब्दो दृश्यते। अस्तु यथा तथा वा। अस्मिन्नार्षेयवरणे इमान्यापस्तम्बसूत्राणि—'ऊर्ध्वज्ञुमासीनं होतारं वृणीते' 'अग्निर्देवो होता देवान् यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवदमुवदमुवदि'ति यथार्षेयो यजमानः' 'त्रीन् यथर्षि मन्त्रकृतो वृणीते' 'अपि वैकं द्वौ त्रीन् पञ्च' 'न चतुरो वृणीते न पञ्चातिवृणीते' 'इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होता' 'पुरोहितस्य प्रवरेण राजा प्रवृणीते' 'अपि वा नाऽऽर्षेयं वृणीते मनुवदित्येव ब्रूयात्'[1] इति।

अत्र होतुर्वरणं देवेज्याप्रार्थनारूपम्। अयं होता, अग्नि[2]र्देवः—अग्निदेवतारूपः। य एव देवानां होता स एवायमिति विभाव्य होतारं वृणुयादध्वर्युरिति तात्पर्यम्। देवानामयं यष्टा, विद्वानयम्, ज्ञानवानयम्, मनुष्य-

---

1 आप० श्रौ० २।१६।५-११।

2 होतुरग्नित्वेन विभावनं यजमानस्य कर्मबन्धाद्विमोचनरूपमिति बृहदारण्यकोपनिषदि तृतीयेऽध्याये प्रतिपादितम् ( बृ० उ० ३।१।१ )

रूपोऽयं देवः, भरतवत् भरणशीलश्च। यजमानस्य यः प्रवरः, तस्य य ऋषयः, तान् अमुवत् अमुवत्—भार्गववत् वीतहव्यवत् सावेतसवत् इत्येवंरूपेण सङ्कीर्त्य होतारमध्वर्युर्वृणीत इति प्रथमसूत्रस्यार्थः। यजमानस्य गोत्रर्षित्वेन ये मन्त्रकृत ऋषयस्तेषु त्रीन् कीर्त्तयेत्। अत्र 'त्रीन्' इत्युपादानेन पञ्चार्षेयस्यापि यजमानस्य त्रीनेव कीर्त्तयेदिति द्वितीयस्यार्थः। पक्षान्तरं गृह्णाति—'अपि वेति'। एकार्षेय एकम्, द्व्यार्षेयश्च द्वौ, त्र्यार्षेयश्च त्रीन्, पञ्चार्षेयश्च पञ्चेत्यर्थः। चतुरृषिसम्भवे पञ्चभ्योऽधिकसम्भवे च तेषां वरणनिषेधपरमिदं चतुर्थं सूत्रम्।

अत्रेमान्याश्वलायनसूत्राणि—'यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः' 'परं परं प्रथमम्' 'पौरोहित्यान् राजन्यविशाम्' 'राजर्षीन् वा राज्ञाम्' 'सर्वेषां मानवेति संशये'[1] इति। अत्र 'अपि वैकं द्वौ त्रीन् पञ्च' इत्यापस्तम्बसूत्रस्य 'यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः' इत्याश्वलायनसूत्रस्य चैकरूपत्वं प्रतीयते। यस्य यजमानस्य यावन्त आर्षेयास्तस्य तान् कीर्त्तयेदिति सूत्रद्वयस्याप्यर्थः। 'त्रीन् यथर्षि मन्त्रकृतो वृणीते' इत्यापस्तम्बः स्वीयं मतं प्रतिपाद्य मतान्तरम् 'अपि वे' त्यनेन गृह्णाति। आश्वलायनस्तु 'यावन्तः स्युः' इत्यनेन स्वीयं मतं प्रदर्शयन् पञ्चार्षेयस्य यजमानस्य पञ्चप्रवरत्वमेवेत्यभिप्रैति। आपस्तम्बस्य तु पञ्चार्षेयस्यापि यजमानस्य त्रिप्रवरत्वमेवेत्यभिप्रायः।

आर्षेयवरणविषये मूलतया श्रुतिद्वयमुदाह्रियते—'आर्षेयं प्रवृणीते यथर्षि, मन्त्रकृतो वृणीते, न चतुरो वृणीते न पञ्चातिवृणीते' इत्येका श्रुतिः। अपरा च 'आर्षेयं प्रवृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इति।

तत्राद्यायां श्रुतौ त्रीणि वाक्यानि। यथर्षिवरणं प्रथमस्यार्थः। मन्त्रकृतामेव वरणं द्वितीयस्यार्थः। तत्रापि यथेष्टसंख्याकानां वरणे प्राप्ते चतुर्णामतिपञ्चानाञ्च प्रतिषेधस्तृतीयस्यार्थः। द्वितीयायाः श्रुतेरयमर्थः—

---

1 आ० श्रौ० १।३।१-५

आर्षेयं, यजमानपूर्वजभूतो मन्त्रद्रष्टा ऋषिः, तस्यापत्यमित्यर्थः। तस्य होत्रोच्चारणं वरणमुच्यते। तच्च एकस्य द्वयोः त्रयाणां पञ्चानाञ्च वरणम्, चतुर्णामतिपञ्चानाञ्च वरणाभाव इति।

अत्र मीमांसकाः षष्ठाध्यायस्य प्रथमपादस्य दशमाधिकरणे पूर्वप्रदर्शितां द्वितीयां श्रुतिमुदाहृत्य तत्र 'त्रीन् वृणीते' इत्येव विधिः, 'एकं वृणीते द्वौ वृणीते' इति त्रित्वस्तुत्यर्थोऽप्ययुत्यानुवादः, 'न चतुरो वृणीते' इत्याद्यपि नित्यानुवाद इति सिद्धान्तितवन्तः। अत्रेदं जैमिनिसूत्रम्—'अत्रार्षेयस्य हानं स्यात्'[1] इति।

अयमत्र मीमांसकानामाशयः—'आर्षेयं वृणीते' इति सामान्यविधिः, स च विशेषापेक्षः सन् 'त्रीन् वृणीते' इति विहितत्रित्वेनैव विशेष्यते। अन्यथा त्रित्वश्रुतिरनर्थिका स्यात्। प्रमाणान्तरेण त्रित्वस्याप्राप्तत्वेनास्य नानुवादकत्वं, नित्यवच्छ्रुतत्वेन च नास्य पाक्षिकानुवादत्वम्। अनेन त्रित्वविधाने सति [2]वैश्वानराधिकरणसिद्धेन 'शते पञ्चाशन्न्यायेन' 'एकं वृणीते द्वौ वृणीते' इत्यनयोः त्रित्वस्तुत्यर्थत्वमुपपद्यते। 'निर्विशेषं न सामान्यम्' इति न्यायेन सामान्यविधिनैव त्रित्वप्राप्तिरिति यदीष्यते तर्हि एकत्वादीनामिव चतुरादीनामपि प्राप्तौ सत्यां 'न चतुरो वृणीते न पञ्चातिवृणीते' इति निषेधस्य वाक्यभेदमङ्गीकृत्यैवोपपादनीयत्वं स्यात्। वाक्यभेदस्तु महते दोषाय भवति मीमांसकानाम्।

---

१ जै० सू० ६।१।४३

२ 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति वैश्वानरेष्टिं विधाय श्रुतानां 'यदष्टाकपालो भवति' इत्यादिवाक्यानां द्वादशकपालस्तुतिपरत्वं यथा सिद्धान्तितं तथैव 'एकं वृणीते' इत्यादीनां त्रित्वस्तुत्यर्थत्वमिति।

अतः 'न चतुरो वृणीते' इत्यादेर्नित्यानुवादत्वमन्तरिक्षे[1] चयनन्याय इव स्वीकर्त्तव्यम्। तथा सत्येकवाक्यत्वं सिद्धं भविष्यति। एवञ्च चतुःषडादीनामिव पञ्चार्षेयस्याप्यप्राप्त एवाधिकारः, तथापि यथा 'त्रीन् वृणीते' इति न परिसंख्याविधिः किन्तु त्रित्वगुणविधिः, तथैव यस्य यावन्त्यार्षेयाणि तस्य तानि सर्वाणि वरयितव्यानीत्यपि नार्थः, किन्तु यः त्रीण्यार्षेयाणि सम्पादयितुं शक्नोति तस्य वरणविधानमिति पञ्चार्षेयस्यापि त्र्यार्षेयवत् त्रित्वविशिष्टवरणसम्पादने न यथाऽधिकारस्तथा चतु.षडार्षेयाणामपि तत्सम्पादनेऽधिकार इति निष्कर्षः सिध्यति।

आपस्तम्बसूत्रं द्वितीयां श्रुतिमवलम्ब्य प्रवृत्तम्, आश्वलायनसूत्रन्तु प्रथमा श्रुतिमवलम्ब्य प्रवृत्तमिति मतभेदे मूलं वक्तव्यं भवति। आपस्तम्बसूत्रं मीमांसान्यायानुकूलम्, आश्वलायनसूत्रन्तु तद्विपरीतमिति प्रतीयते। किन्तु अध्वर्युकर्तृकं होतृकर्तृकञ्चेति द्विविध आर्षेयवरणोऽङ्गीकृत्य यदि पश्यामस्तर्हि आश्वलायनसूत्रस्यापि मीमांसान्यायानुकूलत्वं साधयितुं शक्नुमः। अत एव भाट्टदीपिकायां श्रीखण्डदेवाचार्याः 'तदेतद्भगवतो जैमिनेर्मतमृष्यन्तरैरभ्युपगतम्' इत्यादिना मनुवत्पक्षमाश्रित्य मीमांसान्यायानुगुणत्वं कात्यायनापस्तम्बाश्वलायनादिसूत्राणां प्रदर्शयन्ति।

---

१ 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यत्राग्नेश्चयनं पृथिव्यां प्राप्तं प्रतिषिध्यते 'हिरण्यं निधाय चेतव्यम्' इति विधेः स्तुत्यर्थम्। तथा अन्तरिक्षे दिवि च चयनं सर्वथाऽप्राप्तं निषिध्यते। अतोऽनयोर्वाक्ययोर्नित्यानुवादत्वं स्वीकृतं तद्वदित्यर्थः।

बभूव। एकदा एकाकी भ्रमन् धुनिचुमुरिनामदानवाभ्याम् इन्द्र इति धृतो वधार्होऽभवत्। विपदं ज्ञात्वा प्रत्युत्पन्नमतिः स दानवौ निकषा इन्द्रस्तुतिं कर्त्तुमारेभे। तेन स्तोत्रेण तौ असुरौ भीतत्रस्तौ बभूवतुः। तस्मिन् काले देवराज इन्द्रस्तत्रोपस्थितः आततायिनौ जघान। तस्मादेव शुनहोत्रपुत्रः रक्षितः। तत्रभवान् बहुस्तुतिभिः प्राणदातारं तुष्टाव। हृष्ट इन्द्रतस्मै "गृत्समद" इत्युपाधिं दत्त्वा ऋषिश्रेष्ठत्वेनाभिहितवान्। उक्तञ्च—

गृणान्मदयसे यस्मात् त्वमस्मादृषिसत्तम।
तस्माद् गृत्समदो नाम्ना शौनहोत्रो भविष्यसि॥

—बृहद्देवता—४।७८

येन मन्त्रेण शुनहोत्रतनयो देवराजस्य स्तुतिं चकार तत् सर्व्वम् ऋग्वेदस्य द्वितीये मण्डले अस्त्येव। बृहद्देवताग्रन्थे तत्सर्व्वं सूचिरूपेण संनिबद्धमेव।

वैदिकग्रन्थादौ कुत्रापि शुनकस्य शुनहोत्रस्य च गोत्रनामवंशनामादिकं विना पितृपरिचयो न दृश्यते। अनेन कारणेन एतयोः प्रकृतं कालं परिचयञ्च निर्णेतुम् असमर्थाः। एतेभ्यो ग्रन्थेभ्यो एवं ज्ञायते यत्, शुनकभार्गवः शुनहोत्राङ्गिरसश्च उभावेव ऋषिप्रवरौ। दत्तकग्रहणकार्यन्तु शुनहोत्रपुत्रस्य ऋषेर्गृत्समदरूपेणाभिधानात् परमेव बभूव। मन्ये ऋषिकुले एव ऋषेर्जन्म स्वाभाविकम्। अतएवासौ स्वभावऋषिः ऋषिश्रेष्ठमेकं पितृत्वेन स्वीकर्त्तुं शक्नुयात्। दत्तकग्रहणात् परमेव ऋषेर्गृत्समदस्य पूर्णं नाम गृत्समद आङ्गिरसः शौनहोत्रः पश्चाद् भार्गवः शौनक इति च बभूव। महाभारते पुराणादौ च त्रयो गृत्समदा द्वौ शुनकौ च दृश्यन्ते।

चन्द्रवंशीयनरपतिनहुषवंशधरकाशीराजवंशस्य प्राचीनानां राज्ञाम् अन्यतमक्षत्रवृद्धस्य पौत्रः गृत्समदः। क्षत्रवृद्धस्य शुनहोत्रनामधेयः पुत्र आसीत्। काश-शाल-गृत्समदनामानस्त्रयो वंशधराः शुनहोत्रस्य आसन्। गृत्समदपुत्र एव शुनकः शुनकादेव शौनकगोत्रीयाणां ब्राह्मणक्षत्रियवैश्यशूद्राणामभ्युदयः। (वायुपुराण ९२।२-४ ; विष्णु ४।८।१. ब्रह्म ११।३१-३३ ; हरिवंश

१।२६।५-८ )। उल्लिखितात् प्रमाणनिचयादेव गृत्समदस्तत् पुत्रः शुनकश्च प्राचीनौ भार्गवौ एवेति ज्ञायते।

हैहयतालजङ्घवंशोद्भूतस्य महाराजस्य वीतहव्यस्य वंशधरः वैतहव्यः, तस्य पुत्रश्च गृत्समदः। महाभारत अनुशासनपर्वणि त्रिंशत्तमेऽध्याये अयम् ऋषिगृत्समद एव ऋग्वेदोक्त ऋषिरित्युक्तम्। निबन्धेऽस्मिन् गृत्समद-वंशस्य यत् प्रमाणं पुराणेतिहासादिभिः प्रदत्त तस्मादेव ज्ञायते शुनको गृत्समदात् अधस्तनश्चतुर्दश· पुरुष एव। अस्मादेव प्रमाणादपरमपि ज्ञायते यत्, अयोध्यापतेर्दशरथात् पुरुषोऽयं प्राक्तन एव।

शुनककृता ऋष्यनुक्रमणी आर्षानुक्रमणी च दृश्यते। ऋग्वेदस्य षष्ठ-मण्डले सुहोत्र-शुनहोत्र-गर्ग-नरद्धिश्वना ऋषय· सर्व्वे एव मन्त्रद्रष्टारः। एते सर्वे भारद्वाजाः ख्याताः। तेष्वेव गर्गात् गार्ग्यगोत्रः। अतएव मन्यते भरद्वाजवंशधराः केचिद् भुवमन्युप्रभृतयः अधिष्ठितसिंहासना अपि ब्राह्मणत्वस्य पुनः प्राप्तये भरद्वाजपदाङ्कानुसरण कृतवन्तः।

महाभारते आदिपर्वणि ( ५।१-११ ) भृगोर्वंशस्य यत् संक्षिप्त वृत्तं प्रदत्तं तत्रैव कुलपतिना शौनकेन अनुरुद्धः सौतिरुग्रश्रवाः पूर्वपुरुषवृत्तान्तं श्रावयामास। तत्रैव कोरवो वेदपारगः शुनकभार्गवत्वेन स्पष्टीभूतः। तस्य मातुर्नाम प्रमद्वरा। तस्या माता अप्सरा मेनका। स्थूलकेशनामधेयस्य कस्यचिन्महर्षेः पालिता कन्या प्रमद्वरा इति ख्यातम्।

उक्तञ्च भारते अष्टमेऽध्याये :—

> रुरोरपि सुतो यज्ञे शुनको वेदपारगः।
> प्रमद्वरायां धर्मात्मा तव पूर्वपितामहः ॥१०
> तपस्वी च यशस्वी च श्रुतवान् ब्रह्मवित्तमः।
> धार्मिकः सत्यवादी च नियता नियताशन· ॥११

ऋग्वेदीयशाङ्खायनश्रौतसूत्रे ( १।७।३ ) वशिष्ठकण्वत्रिप्रभृतिभिः ऋषिभिः तुल्यः शुनकः स्वयमेव मन्त्रद्रष्टा।

भृगोर्जाता यथा भार्गवाः, अत्रेरात्रेयास्तद्वत् शुनकात् शौनकाः। ऋषिः शुनकः महाराजभरतात् अधस्तनः षष्ठः, महाराजदशरथात् द्वादशः त्रयदशा वा प्राक्तनः पुरुषः इति सिद्धान्तितं व्यासादिभिर्मुनिभिः। शुनकानामितिवृत्तं संक्षेपत एतावदेव विवृतम्।

---

# आरण्यकविलासम्

( खण्डकाव्यम् )

## उत्तरारण्यम्

[निबन्धकः—श्रीयादवेन्द्रनाथन्यायतर्कतीर्थः]

[ पूर्वानुवृत्तम् ]

सहस्रशीर्ष्णः पुरुषात् परात्मनो ये ब्राह्मणक्षत्रविशश्च शूद्रकाः।
जाताः क्रमादास्यभुजोरुपादतस्ते धर्मनिष्ठा व्रतिनोऽभवन् पुरा ॥१॥
सत्त्वाश्रया ज्ञानविशेषचिन्तया रजोविशिष्टा अवनादिकर्मभिः।
कृष्यादिभिस्तामसभावभावितास्तृप्ताश्च शेषाः स्वसमाजसेवया ॥२॥
अङ्गैश्चतुर्भिर्विधृता वसुन्धरा परस्परप्रेमनिबद्धसौहृदैः।
न तत्र विद्वेषलवोऽप्यदृश्यत शिरः कदा पादमुपेक्ष्य जीवति ॥३॥
समाज एकालयवद् व्यवस्थितो वर्णाश्रमाचाररतैर्मनोः सुतैः।
आर्योपदेशाननुवर्त्य निर्वृतैर्नालभ्यताशर्मकलेति निश्चितम् ॥४॥
गृहाश्रमे लब्धविपत्तयो जना अरण्यमेनत् शरणं ययुः सुखम्।
तीर्णो विपत्तिं पुनरेति वा गृहं तत्रैव वासं क्वचिदभ्युपैति वा ॥५॥
विहाय राज्यं भगवान् वनं गतो रामः ससीतः सहलक्ष्मणस्तथा।
निस्तीर्य्य सन्धां पितृसत्यसम्मतामभूदयोध्याधिपतिः स्वतेजसा ॥६॥

चित्रं किलाहो नियतेर्विधानकं सीता पुनस्तद्विपिने विवासिता ।
द्वारं हि दैवस्य पिधातुमीशते के वा पृथिव्यां जनिधर्ममाश्रिताः ॥७॥
सीतापि वाल्मीकिवने स्वगेहवल्लब्धादरा शोकविदीर्णमानसा ।
उवास निःशङ्कमतीव लज्जिता पतिं विना का सुखमाप्नुयात् सती ॥८॥
सुरक्षिता तत्र तपोवने प्रसूः प्रासूत पुत्रौ यमजौ गुणान्वितौ ।
आर्येण भावेन च संस्कृतावुभौ कालेन तौ विश्वजितौ बभूवतुः ॥९॥
भ्रष्टाः स्वराज्याच्च युधिष्ठिरादयो वनं निवासं जगृहुर्निराश्रयाः ।
फलैर्जलैर्द्वैतवनं पुपोष तान् परोपकारः प्रकृतेः कुलव्रतम् ॥१०॥
भूपा दरिद्रा यतिनस्तपस्विनश्चक्रुर्वनं सौधसुखान्महत्तरम् ।
हिंसादिशून्यं विजनं शमालयं तपःप्रभावान्ननु दुष्करं किमु ॥११॥
मनुष्यजन्मातिसुदुर्लभं भवे न देवतिर्य्यग्जनिरेवमुन्नता ।
भवार्णवात् सन्तरणाय ते सुखं गोविन्दपादप्लवसंश्रये क्षमाः ॥१२॥
कालक्रमात् तद्विपिने सुरालया विनिर्मिता राजकुलेन भक्तितः ।
संस्थापिताः शम्भुमुकुन्दमूर्तयो गङ्गाप्रवाहोक्षितसैकते तटे ॥१३॥
कलेः प्रभावाद्विलयं गतं समं ध्वंसावशेषैरधुनापि शोभितैः ।
साक्ष्यं वहद्भिः सुपुराणशिल्पिनो गवेषके कीर्तिकथा निवेद्यते ॥१४॥
औत्तानपादेः सुतपोनिदर्शनं तपोवनं तत् तमसासमीपतः ।
तमोवियुक्तोऽत्र भवेद् विचक्षणस्तपःप्रभावानुभवेन बुध्यते ॥१५॥
ये सन्ति तत्राद्य सुशीलवृत्तयो जीवन्ति भिक्षामुपजीव्य यद्यपि ।
कार्पण्यहीना हरिनामकीर्तनैरानन्दमेवानुभवन्ति नित्यशः ॥१६॥
वैखानसं न प्रतिषिध्यतेऽञ्जसा क्लेशैः कथं पञ्चभिरेव पीड्यते ।
पञ्चाशदूर्ध्वं विपिनं समाश्रयन् प्रशान्तचित्तो नु शिवं न सेवते ॥१७॥
नित्याभियुक्तस्य शरीरपोषणं करिष्यतेऽसौ जगतां प्रपालकः ।
श्रद्धां भजस्व श्रय देवकीसुतं विधास्यते येन तवान्तिमं सुखम् ॥१८॥
अहो विचित्रः खलु कामचिन्तकः क्लेशान् सुखत्वेन च मन्यते मृषा ।
विपच्यते नारक एव पत्तने वृद्धेतिशब्दैरुपहस्यते जनैः ॥१९॥

या यौवने सर्वसुखावहाऽङ्गना सुधासमैर्वाक्यरसैरतोषयत् ।
सा वार्धके नैति समीपमीप्सिता चित्रा नु माया जगतः प्रकल्पना ॥२०॥
कान्ता सुतो वा न हि बन्धुरन्तिमे सम्बन्ध एषां हि धनाशयाऽभवत् ।
न वित्तहीनं सहधर्मचारिणी न बान्धवाः श्रद्धधते जरातुरम् ॥२१॥
अंशांशिभावेन भवेन संयुतिर्न भार्य्यया मित्रसुतैश्च काचन ।
मिथ्याभिमानात् कलितात्ममानिना कथं त्वया शान्तिलवोऽप्यवाप्यते ॥२२॥
रसस्वरूपो भगवान् स्वयं हरिर्विहाय तं कुत्र रसानवाप्स्यसि ।
रसेश्वर धारणया विधारयन् लभस्व शान्तिं सुकृतैर्निरूपिताम् ॥२३॥
अनित्यता चिन्तय देहगेहयोः सुचिन्तितं शास्त्रनिदेशमास्मर ।
ईशस्य भक्तिं समवाप्य चेतसा शोकः क्व मोहो भविता यतात्मनः ॥२४॥
ईशस्तु सर्वत्र विराजतेऽद्वयः संयोजयन् तेन सह स्वकाशकम् ।
नगापगानामुदधौ रतिर्यथा पूर्णो रसास्वाद इहैव लभ्यताम् ॥२५॥
परात्मजीवौ मिलितौ यदास्थितौ क्लेशास्तदा नैव भजेत जीवकः ।
गङ्गाम्बुनि स्नानरतः कदापि किं स्याच्छुष्ककण्ठश्च पिपासयार्दितः ॥२६॥
भयं द्वितीयाभिनिवेशतो भवेद् देहात्मबुद्धिर्भयकारणं महत् ।
ईशादपेतस्य तथा भवेन्मतिस्तमेव मायोद्धरणं समाश्रय ॥२७॥
उपासना नौर्भवसिन्धुतारिका सा शेमुषी तच्छ्रवणादिभिर्भवेत् ।
अन्तर्बहिस्तं परिपश्यतः सदा भयानुभूतेः समयागमः कुतः ॥२८॥
तत्कीर्तनं तन्मननं जडात्मना चित्तं पुनीते सुरनिम्नगा यथा ।
विशुद्धचित्ते प्रतिविम्बितो हरिर्धुनोत्यघं शान्तिसुखं च यच्छति ॥२९॥
माया समाकर्षति पृष्ठदेशतो मुहुर्मुहुर्लोभयति प्रियाननम् ।
तां छेत्तुकामाः श्रयत श्रियः पतिं तस्मिन् प्रसन्ने किमिहास्ति दुर्लभम् ॥३०॥
संसारसारं न कलत्रवैभवं न तल्पभोगादि सुखं न पत्तनम् ।
ज्वलच्छिखो मुग्धहृदो बलादहो कर्षन्ति जीवान् पतगानिवानलः ॥३१॥
जीवो न मायां मृगवागुरोपमा छेत्तुं समर्थो यत एष दुर्बलः ।
आसक्तिशून्येन बुधेन केवल सा छिद्यते ज्ञानमहासिधारया ॥३२॥

पुत्रादिषु स्नेहरसास्पदेषु चेदीशत्वबुद्धिः क्रमशोऽभिजायते ।
जगत्सु सर्वेषु तथोपलब्धितो माया शनैर्दूरतरं प्रयास्यति ॥३३॥
आरण्यकैर्यत् तपसोपभुज्यते तज्जीवकाम्यं सुखमेव शाश्वतम् ।
प्राप्तुं सुखं तद्गृहिभिः सदेष्यते ह्यासक्तिशून्यस्य गृहं तपोवनम् ॥३४॥
नासक्तिनृष्णे न च मत्सरादया नाहङ्कृतिर्वा मदमानसम्भवा ।
न यत्र विद्वेषविषं भयं क्वचित् तपोवनं तन्मुनिभिर्निरूपितम् ॥३५॥
न सन्ति रूढ़ा वनशब्दशङ्कयः सैवाटवी यत्र मनो न तृप्यति ।
संसारकूपाद् विनिवृत्तचेतसा शान्तात्मनां तद् भवनं तपोवनम् ॥३६॥
इत्थं वनं तद् भवनं प्रसाधित भार्यादिभिर्यत्र निपीड्यते क्षणम् ।
वासो न कार्योऽत्र जनैर्विवेकिभिः पिपासुभि· किं ज्वलनेऽवगाह्यते ॥३७॥
आरामतुल्यं सदनं मनोरम स्वर्गादपि श्रेय इहातिदुर्लभम् ।
पुत्रैः कलत्रैः सह बान्धवैर्मुदा कालो गतश्चेद् भगवत्-प्रसङ्गतः ॥३८॥
सवः प्रयत्नैर्भवनं तपोवनं विधातुमिच्छुर्दृढता समाश्रयन् ।
तृणादपि क्षुद्रतरः स्वयं भवन् यतेत तर्त्तुं विनयैर्भवार्णवम् ॥३६॥
पुत्रैश्चरित्रैर्विजिताः समीपगाः शास्त्रानुशिष्टस्य निदेशकारिणः ।
प्रशान्तचित्ता भवितार इत्यमो आदर्शवादस्य जयोऽस्ति सर्वतः ॥४०॥
आतिथ्यसत्कृत्यरता हितार्थिनो गृहे वसन्तोऽप्यमृतं पिबन्ति ते ।
आचार्यमातापितृदैवतो बुधोऽश्नुतेऽत्र वैकुण्ठसुखं दुरासदम् ॥४१॥
तस्यैव सौख्यैर्महिमा हि गण्यते सुखी भवेद् यः सुखितेषु जन्तुषु ।
ऋतम्भरो ज्ञानवतां महत्तमः स शोकपात्रं न विपत्सु चञ्चलः ॥४२॥
दोषं स्वकं यो निपुणं दिदृक्षते तथा परेषां गुणदर्शनोत्सुकः ।
दोषज्ञ इत्येव यथार्थसंज्ञकं तं धारयन्ती धरणी वसुन्धरा ॥४३॥
वसुस्वरूपोऽयमचिन्त्यवैभवः पुनाति सद्दृष्टिवशाद् वसुन्धराम् ।
यः शास्त्रतत्त्वार्थमनाविलं चरन् तद् ग्राहयत्याश्रितसज्जनान् सदा ॥४४॥
भागैकमूर्तिर्गिरिराजकन्यका तद्वल्लभस्त्यागगुणैरलङ्कृतः ।
तदादिपित्रोर्व्यवहारदर्शनाद् गार्हस्थ्यधर्माननुवर्तयन् सुखी ॥४५॥

भोगस्तु काम्यो ननु देहधारिभिः स शोभते त्यागनयान्वितो भवन् ।
द्वयोः समावेशवशात् सुकौशली भोगञ्च मोक्षञ्च समश्नुते भुवि ॥४६॥

आपातरम्यं सरसं सुचिक्कणं भोगं विहातुं न च जन्मिनः क्षमाः ।
तेनैव मार्गेण चलंस्तु निस्पृहः शान्तिं विवेकी लभते सनातनीम् ॥४७॥

वर्णाश्रमाचाररतैर्विचक्षणैरासक्तिशून्यैः कृतनित्यकर्मभिः ।
शास्त्राश्रितत्वाच्च विशुद्धमानसैर्द्विसंश्रया प्रीतिरवाप्यते जनैः ॥४८॥

प्रेम्णः सुमूर्तिर्हृदयेषु चेज्जनैः संस्थाप्यते सत्त्वगुणैर्विनिर्मिता ।
न नश्वरा सा प्रलयान्तवर्तिनो कृतज्ञतागीतिमलं प्रगास्यति ॥४९॥

संसारमिथ्यात्वविनिश्चयेन वा क्लैव्यं न जाड्यं सममाश्रयेत् सुधीः ।
यद् यत्र युक्तं विदधत् समन्ततो निर्लिप्तवत् तिष्ठति निर्मलान्तरः ॥५०॥

त्रिवर्गसम्पत्समसेवनाद् बुधैर्मलाद् विमुक्तैर्विबुधत्वमाप्यते ।
प्रक्षाल्य दौर्बल्यमलं स्वचित्ततो वीर्य्यैः समं स्वात्महिताय यत्यताम् ॥५१॥

न लङ्घयन् श्रेष्ठगुणान्वितान् जनान् दुर्नीतिमार्गे न कदापि पर्य्यटन् ।
इहैव काम्यं सुखमाप्नुयाज्जनः कर्तव्यनिष्ठा हि सुखस्य जन्मभूः ॥५२॥

एवं संयमवृत्तिभिः प्रथमतो भित्तिं प्रतिष्ठापयन्
यो निर्माति मुदा प्रवृत्तिनिवहैर्गार्हस्थ्यसौधं दृढम् ।
निर्भीतिः सुरपूजितः स निपुणः संसारभोगात् परं
ब्रह्मास्वादसुखं परात्परतरं त्यागेन किं नाश्नुते ॥५३॥

उद्यानं भवनं कलेवरमिदं रम्यं विभोर्मन्दिरं
सर्वान् पुत्रकलत्रबान्धवजनानावेशिकानुत्तमान् ।
भोगान् प्राक्तनकर्मजान् क्षयवशादुल्लाघमाचिन्तयन्
निर्लिप्तो हरिनाममात्रनिरतश्चित्तं प्रशान्तं कुरु ॥५४॥

अव्यात् संस्कृतभारती वसुमतीं क्षेमं सदा तन्वती
यायाद् भारतभूतलं मनुष्यतो माभूत् ततो विच्युतम् ।

देयाच्छान्तिसुधारसानविरतं नीतौ स्थितेभ्यः क्षितौ
पायान्मृत्युभयाच्च संश्रितजनान् विश्वेश्वरः श्रीहरिः ॥५५॥

इति श्रीयादवेन्द्रविरचिते आरण्यकविलासनाम-
खण्डकाव्ये **उत्तरारण्यम्** ॥

श्रीकालीपदपादपद्मयुगलं पाथेयवच्चिन्तयन्
ध्यायन् श्रीयुतरामजीवनपदं श्रीयामिनीकान्तकम् ।
काव्यं यद् व्यलिखन्मुदे त्रिजगतां श्रीयादवेन्द्रो द्विजः
सुप्रीतो भगवान् कृपाजलनिधिः क्षेमं भुवे यच्छतात् ॥
श्रीदेवकी प्रसूर्यस्य नरनारायणः पिता ।
तं यादवेन्द्रशर्माणं पान्तु गुरुशुभाशिषः ॥
पश्यन् दुर्नयलालितं जगदिदं म्लानं च वर्णाश्रमं
कश्चिच्छ्रीचरणेषु वाञ्छिततमेष्वेवं गुरूणां नमन् ।
शिष्टाचारमनुस्मरन् व्यरचयत् सत् खण्डकाव्यं मुदा
शाके सिद्धिनगाष्टचन्द्रविमिते श्रीकृष्णजन्माहनि ॥

इति श्रीयादवेन्द्रविरचितम् आरण्यकविलासं नाम खण्डकाव्यं सम्पूर्णम् ।
॥ ॐ तत् सत् । श्रीकृष्णार्पणमस्तु ॥

# उत्तरकुरुक्षेत्रम्

[ श्रीविश्वेश्वर विद्याभूषण-काव्यतीर्थेन विरचितम् ]

( पूर्व्वानुवृत्तम् )

रुक्मिणी-सत्यभामे—अहो भाग्यम् ! अहो भाग्यम् !

[ अभ्यन्तरं गत्वा स्वर्णपात्रस्थमर्घ्यादिकमुपानीय देवर्षेश्चरणयोरुपहरतः वन्देते च महामुनिम् । ]

—नमोऽस्तु देवर्षये ।

नारदः—स्वस्ति स्वस्ति । ( अर्घ्यं गृह्णाति ) नारायणो ऽत्रभवतीना मनोरथं पूरयतु ।

रुक्मिणी-सत्यभामे—विजयतां दिव्यतापसः ।

नारदः—नारायणः, नारायणः । जयति मधुसूदनः ।

श्रीकृष्णः—( नारदं प्रति ) देवर्षे, आगमनं ते मनसा प्रतिपालयामि । अधुना लीलापरिहारात् प्राक् प्रेमसिद्धं महात्मानं त्वां सम्प्राप्य तृप्यामि ।

नारदः—जयति लक्ष्मीकान्तः । द्वारकेश, अचिन्तनीयस्ते लीलामहिमा मामाकर्षति । तेन ते भुवनमङ्गल-नरविग्रह-दर्शनेनाहं कृतार्थः सञ्जातः ।

श्रीकृष्णः—अलं विनयेन । किन्तु देवर्षे, अपरिशोधनीयस्ते प्रेमानुग्रहोऽनुक्षणं मामानन्दयति । इत्थं सर्वथा विजयते हि त्वदीया त्रिलोकदुर्लभा प्रेमभक्तिर्जगतां कल्याणाय ।

नारदः—लीलामय, अपार्थिवं ते लीलाचातुर्य्यं मनो हरति । तव प्रसादेनाहं गतसंशयो मोहमुक्तोऽस्मि । तद् वन्दे त्वामानन्देन । ( वन्दते )

श्रीकृष्णः—( उत्थाय करे धृत्वा हसन् ) भो भक्तचूडामणे, एवमपार्थिवप्रेम सम्पदा त्वं विजयसे । तेन च धन्योऽहं भक्तसङ्गलाभेन । तत् कथ्यतां किं ते प्रियं करोमि ?

नारदः—( सगद्गदम् ) विजयतां भक्तवत्सलः। सर्वकालेषु यथा ते लीलासङ्गी भवामीति प्रार्थये।

श्रीकृष्णः—तथास्तु। लोकपावनो ते प्रेमभक्तिश्चिरं मां बध्नाति। तेन नाहं त्वां परिहरामि।

नारदः—अहो, धन्योऽस्मि। ( रुक्मिणीसत्यभामे समुद्दिश्य ) तन्महादेवि रुक्मिणि, कृष्णप्राणवल्लभे सत्यभामे च, यूयमपि देवदुर्लभ-पातिव्रत्य-माहात्म्येन त्रिलोकपतिं जनार्दनमनुगताः सुचिरं सङ्गसौख्येन मोदध्वम्। [ प्रस्थानार्थमुत्तिष्ठति, पश्यति च प्रेमोत्फुल्लनयनेन रुक्मिणी-सत्यभामा-समेतं वासुदेवामानन्देन। ]

नारदः—जय जनार्दन—जय मधुसूदन।

रुक्मिणी-सत्यभामे—विजयतां देवर्षिः।

[ नारदो गायन् प्रस्थानं करोति ]

गानम्

तमसः पारे ज्योतिर्म्मयः कलुषतिमिरहारी,
भक्तहृदयरञ्जनहरिर्जयतु मनोहारी।
प्रेममय श्रीमाधव
कमलेश जय केशव
युगयुगान्त-लीलामयतनु-मोहनमूर्त्तिधारी।
जयतु वैकुण्ठविहारी॥

**इति द्वितीयेऽङ्के प्रथमं दृश्यम्।**

---

## द्वितीयं दृश्यम्

[ द्वारका-राजपथे पानमत्ता यादवा आनन्देन कोलाहलं कुर्वन्ति—नृत्यन्ति, गायन्ति च। अग्रतो गच्छति च नारीवेशः शाम्बः। ]

[ यादवानां गानम् ]

कुरुत कुरुत सुखगानम्,
नृत्यकेलिपरा कुरुत मधुपानम्।

प्रथमयादवः— अयमेति मधुमासः,
द्वितीययादवः— विकशतु मुखहासः—
तृतीययादवः— स्फुरति हृदये मुहु रसविलासः—
सर्वे— अधरे अधरे, नयने नयने कुरुत सुधादानम्,
आनन्दनिर्झरस्नानम्॥

[ प्रविशन्ति नारदपुरःसरास्तपोधनाः ]

प्रविश्यादूरतो नारदः—( तपस्विगणं प्रति ) अब्रह्मण्यम्, अब्रह्मण्यम्। एते यादवाः कालप्रेरिता इव प्रमत्ता उल्लसन्ति। अहो केशव, केशव!

[ यादवास्तपस्विनो विलोक्य सदम्भमुल्लासेन तानाह्वयन्ति ]

यादवाः—भो भोस्तपस्विनः! आगच्छत, आगच्छत। कुरुतपानोत्सवम्।

नारदाद्याः—नारायणः, नारायणः। ( ऊर्द्ध्वं निरीक्ष्य ) केशव, रक्ष भुवनम्।

प्रथमयादवः—( उपसृत्य ) कथं नालपथ? अरसिका यूयम्।

द्वितीययादवः—एत महाभागाः। अत्रानन्दोत्सवे सम्मिल्य सुखं कुरुत।

नारदाद्याः—नारायणः—नारायणः!

तृतीययादवः—भो भोः! पिवत, खादत। कुरुत नृत्यम्।

सर्वे यादवाः—मधुरम्—मधुरम्—अहो सुखम्! ( सानन्दं नृत्यन्ति )

नारदाद्याः—नारायणः — नारायणः!

प्रथमयादवः—( उपगम्य ) गच्छतु तावत्। भो तपोधनाः, सर्वज्ञाः खलु भवन्तः। ( नारीवेशिनं शाम्बं निर्दिश्य कथयन्ति ) अत उच्यतां

केवलमस्मत्कौतूहलनिवारणाय किमेषास्माकं सहचरी प्रसविष्यते पुत्रं कन्यकां वेति।

यादवाः—( हसन्तः ) साधु—साधु !

नारदः—( विरक्तः ) एष मूषलं प्रसविष्यते। भविता च तेन युष्माकं संहारः !

प्रथमयादवः—( पानेन स्खलितवचनः ) किं कथयन्ति भवन्तः? मूषलं जनयिष्यति सहचरी ?

अन्ये—( मदविह्वलाः ) आनन्दः आनन्दः। मूषलं जनिष्यते। अहो मूषलम् !

नारदः—अथ किम्। छद्मवेशिनोऽस्य उदरात् मूषलं समुद्भूय सर्वान् संहरिष्यति। ( द्रुतं स्थानं परित्यजन्ति नारदाद्याः। )

यादवाः—( उच्चैरुपहसन्ति ) हाः—हाः—हाः ! पलायन्ते तापसाः ! ( उल्लसन्ति )

प्रथमयादवः—चलत चलत सखायः। मूढाः खलु तपस्विनः किमपि न जानन्ति।

सर्वे—आनन्दः—आनन्दः। प्रचलत प्रचलत। रे रे! चलत चलत। ( सोल्लासं प्रस्थानं कुर्वन्ति। )

[ नेपथ्ये वज्रनादः—दूरागतः प्रचण्डजलकल्लोलरवः—ध्वनति च दूरतः सकरुणं विषादवीणा ]

**इति द्वितीयाङ्के द्वितीयं दृश्यम्**

---

## तृतीयं दृश्यम्

[ श्रीहीना शून्या द्वारका—दूरे शिवारुतपेचकशब्दसंमिश्रो झटिकारवः ].

[ नेपथ्ये पुरलक्ष्मीर्गायति विषादगानम् ]

गानम्

अन्धकारे शून्यपुरे ध्वनति दुःखवीणा,
क्रन्दति मौनं जनहीना नगरी विषाददीना।

शोचन्ति जना हा केशवेति
यदुनाथ कृष्ण यादवेति
गर्ज्जति मत्तः प्रलयसिन्धुर्दिग्वधूः शोकलीना ॥
प्रसरति घोरतिमिरः पुरः आलोकहरणकारी,
मज्जति पुरी अतललीना नास्ति तिमिरहारी,—
नीरवा विहगकण्ठगीतिः
स्तब्धा शङ्खनादस्तुतिः
न चरति पुरकामिनीगणो वसुधा प्राणहीना ।
क्रन्दति मधुवीणा ॥

[ ततः प्रविशति दारुकपुरःसरोऽर्ज्जुनः ]

प्रविश्यार्जुनः—( दारुक प्रति ) धीमन्, कथ्यतामतः कथं परित्यजति कनकद्वारकां तुलभगवान् श्रीयदुकुलनाथ इति ।

दारुकः—( सविषादम् ) किं कथयामि प्रिय ? अधर्मोन्मत्ताना यादवानां विनाशोऽवश्यम्भावीति विज्ञाय प्रभासं प्रस्थितः सपरिगणो भगवान् मधुसूदनः ।

अर्जुनः—( विषण्णः ) अहो, शशाङ्कविहीना यामिनीव प्रतिभाति सर्वम् । तेन प्राणहीनामिव श्रीविहीनां शून्यनगरी पश्यामि । ( सोच्छ्वासम् ) अहो, स्वप्नमयी यादवराजधानी !

दारुकः—किं वद्यामि प्रिय ? अद्य नैव श्रूयन्ते पुष्पवनेषु मधुकर-कोकिल-गुञ्जितानि । न कापि ध्वनति शङ्खनादो मङ्गलवीणा वा । विरमन्ति च विप्रकण्ठोदीरिता उदात्तगम्भीरा वेदपाठाः ।

अर्जुनः—( निःश्वस्य करुणम् ) अहो, अस्तं गतो यदुकुलचन्द्रमाः । स हि भूतभावनो विश्वप्राणानन्दविग्रहो विलयं गच्छति स्वकीयविधानेन । तेनात्र न स्फुरति कुत्रापि प्राणानां स्पन्दनम् !

दारुकः—अथ किम् । सर्वशक्तिं बिभ्राणोऽपि करुणामयो भगवान् शोक-विह्वलायास्तत्रभवत्याः कौरवजनन्या अभिशापमनुस्मरन् कुलक्षयदर्शनं

परिहर्तुकामः प्रभासमुपगतो लीलां परिजहार। रौहिणेयः, सपत्नीको वसुदेवः श्रीकृष्णभामिन्यश्च योगरता यादवानुु चिराय दिवं गताः।

अर्जुनः—( सखेदम् ) अहो वासुदेवः, प्रियसखः केशवः! अधुना मुरारिसङ्ग-विहीना वयं कथं जीवामः?

दारुकः—( स्वगतम् ) कृष्णविरहितं जीवनं विडम्बनमेव। ( प्रकाशम् ) धनञ्जय, विरहखिन्ना वयम्। तथापि वासुदेवपोदिष्टं कथयामः। लीला-परिहारात् प्राग् भगवताहं समादिष्टो यदुपतिना यत् समागतायात्र-भवते विदेह-स्वजनानां सद्गतिविधानार्थमन्त्यकृत्यसम्पादनाय भगवन्नियोगं ज्ञापयेति।

अर्जुनः—( सोच्छ्वासम् ) बन्धूनामुदककृत्यानि सम्पादयिष्यामि। ( ऊर्द्धं विलोक्य ) ते हि देहबन्धमुक्ताः स्वर्गतिं लभन्ताम्।

दारुकः—तदेव आयोज्यताम्।

अर्जुनः—साधु! विजयेतां रामकृष्णौ। तदचिरेण बन्धुकृत्यं समाप्य स्वस्थानं प्रत्यावर्तिष्ये।

दारुकः—तथास्तु। ततश्च भगवदादेश-पालनार्थमवशिष्टत्त्रवीराः सहपुरकामिनी-वर्गा यादवा शिशुवृद्धसमेता अन्यत्र योग्यस्थानेषु प्रतिष्ठापनीयाः।

अर्ज्जुनः—नूनमवशिष्टान् यदुवंशीयास्तथा पुरयोषितश्च रक्षिष्यामि। तत् प्रिय, विधीयतां पौराणां प्रास्थानिकमायोजनमचिरेण।

दारुकः—( निःश्वस्य ) तदेव भविष्यति! एषोऽहमुद्युक्तो भवामि। किन्तु हन्त! ( स्वगतम् ) क्षणेनैव अस्माकं प्रस्थानात् परं सिन्धुतलेषु विलयं गमिष्यति यादवपुरी द्वारका।

अर्जुनः—वीरधानी द्वारका! अहो, केशवप्रियभूमिर्द्वारका विलयं गच्छति!

[ नेपथ्ये विपुलजलकल्लोलः—समुद्रोच्छ्वासो ध्वनति ].

इति द्वितीयाङ्के तृतीयं दृश्यम्

**समाप्तो द्वितीयोऽङ्कः।**                    ( क्रमशः )

---

## शोकसन्देशः

गीर्वाणवाणीप्रणयिनां क्लेशनिदानमेतद् यद् विद्वत्संसदि लब्धकीर्तयः पण्डितमूर्धन्याः सर्वतन्त्रस्वतन्त्रा महामहोपाध्यायपदलाञ्छना **डः उमेश मिश्र-** महोदया विगते भाद्रपदे मासि यशःशरीरं विहाय स्वर्लोकं प्रस्थिताः। भारतीयदर्शनस्य विभिन्नेषु प्रस्थानेष्वेतेषां वैदुष्यं विदग्धजनानां मनांसि चिरमावर्जयति स्म। पिता तस्य मिथिलावास्तव्यो महामहोपाध्याय-जयदेव-मिश्रमहोदयः। तेनैव प्रोत्साहितोऽयं न्यायवैशेषिकप्रस्थाने आत्मानमन्वयुङ्क्त, पश्चात् वाराणसीक्षेत्रे च महामहोपाध्याय-वामाचरणन्यायाचार्य-महामहोपाध्याय-फणिभूषणतर्कवागीश-महामहोपाध्याय-डः श्रीगोपीनाथकविराजमहोदयानाम् अन्तेवासित्वमधिगम्य दर्शनग्रन्थेषु सम्यक् निष्णातोऽयं पुरुषधौरेयः एलाहावाद-विश्वविद्यालयस्याध्यापकत्वेन वृतः। काले गते अध्यक्षपदमप्यलंचकार। ततश्च गृहीतेऽवकाशे द्वारभाङ्गा-संस्कृत-विश्वविद्यालयस्योपकुलपति-पदमारूढः। पश्चात् प्रयागस्थ-गङ्गानाथझा-अनुसन्धानसंस्थानस्य सञ्चालक-पदं स्वीकृत्य जीवनपर्यन्तं भारतीयदर्शनस्य सेवां विधायान्वरज्यत। मिश्र-महोदयः देवभाषायां हिन्दी-मैथिलाङ्गलभाषासु च अनेकान् ग्रन्थान् प्राणयत्, तेषां केषाञ्चित् नामानि निर्दिश्यन्ते—

(१) Conception of Matter according to Nyāya-Vaiśeṣika. (ग्रन्थमिमं शोधनिबन्धरूपेणोपस्थाप्य अनेन एलाहवाद-विश्वविद्यालयतो डि. लिट्. इति विरुदा भूषितः) एलाहवाद, १९३६

(२) History of Indian Philosophy (Vol. I), एलाहवाद, १९५७

(३) पद्मपादाचार्यकृत-विज्ञानदीपिका। आङ्गलभाषामय-विवृतिसहिता।

(४) Nimbarka School of Vedānta.

---

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

Vol. L. No. 8 | १८८९ शकीये अग्रहायणे १३७४ वङ्गाब्दीये ५०तम-वर्षस्य ८म संख्या | December 1967

## भाषापरिच्छेदे पदार्थनिरूपणम्

[ निबन्धकः—श्रीदीननाथत्रिपाठी महाचार्यः । ]

( पूर्वानुवृत्तम् )

**हेत्वाभासाः**—यद्विषयकत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वम्—इति हेत्वाभासस्य लक्षणम्, अनुमितिप्रतिबन्धकत्वमित्यत्र अनुमितितत्करणान्यतरप्रतिबन्धकत्वं बोध्यम्, अन्यथा अनुमित्यप्रतिबन्धके सव्यभिचारादौ अव्याप्तिः स्यादिति। अनुमितितत्करणान्यतरप्रतिबन्धक-ज्ञानविषयत्वस्य यथायथं द्रव्यादौ सत्त्वात् हेत्वाभासस्य द्रव्यादावन्तर्भावः। ते च हेत्वाभासाः पञ्च, उक्तं च न्यायसूत्रे—'सव्यभिचारविरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः" [ न्याः सूः १।२।४ ] इति। यद्यपि न्यायसूत्र तद्भाष्ये च स्पष्टतया हेत्वाभासानां सामान्यलक्षणं नोक्तं तथापि हेतुवदाभासन्ते इति हेत्वाभासशब्दस्य साधनात्, पञ्चरूपोपपन्नत्वाभाववत्त्वं हेत्वाभाससामान्यस्य लक्षणम्। सद्धेतुश्च पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वा-

वाधितत्वासत्प्रतिपक्षितत्वरूपैः पञ्चरूपोपपन्नः। असद्धेतुश्च तादृशपञ्चरूपोपपन्नत्वाभाववान् अपि हेतुवद् भासमानो भवति। केषाञ्चिन्मते तु सव्यभिचारादिपञ्चान्यतमत्वं लक्षणम्। अस्तु तथा, तथापि पञ्चान्यतमत्वस्य द्रव्यादिषु सम्भवाद् द्रव्यादिषु हेत्वाभासानामन्तर्भावः। वार्तिके तु कालपुरुषवस्तुभेदेन हेतुहेत्वाभासा अपरिसंख्येया इत्युक्ताः सामान्यतस्तेषा षट्सप्ततिशतं भेदाः कथिताः।

छलम्—अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानं छलम्। तत्र अभिधानस्य शब्दात्मकत्वात् छलस्य गुणेऽन्तर्भावः। छलस्य सामान्यलक्षणमुक्तं न्यायसूत्रे—"वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" [ न्याः सूः १।२।१० ]। तद्व्याख्यायां तात्पर्यटीकाकारैर्महामतिभिर्वाचस्पतिमिश्रैरुक्तं—यथा वक्तुरभिमतोऽर्थः ततो विरुद्धोऽर्थः, तस्य विकल्पः कल्पना सैवोपपत्तिः तथा। तच्छलं त्रिविधं—उक्तं च न्यायदर्शने—"तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति।" [ न्याः सूः १।२।११ ]

तत्र वाक्छलं "अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्।" [ न्याः सूः १।२।१२ ]। अविशेषेण अभिहितार्थे शब्दे प्रयुक्ते वक्तुरीप्सितादर्थादर्थान्तरं परिकल्प्य दूषणाभिधानं वाक्छलम्। यथा—'नेपालादागतोऽयं नवकम्बलवत्त्वात्' इति नूतनतात्पर्येण वक्त्रा नवशब्दे प्रयुक्ते—'कुतोऽस्य नव कम्बलाः दरिद्रत्वात्' इति नवशब्दस्य वक्तुरविवक्षितनवत्वसङ्ख्याविशिष्टार्थं परिकल्प्य दोषदानं वाक्छलम्।

सामान्ययोगात् तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् सामान्यच्छलम्। उक्तं न्यायसूत्रे—'सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्।' [ न्याः सूः १।२।१३ ]। सामान्यविशिष्टस्य सम्भवतः अर्थस्याभिप्रायेण उक्तस्य अतिसामान्ययोगादसम्भवदर्थकल्पनया दूषणाभिधानं सामान्यच्छलम्। यथा—ब्राह्मणोऽसौ विद्याचरणसम्पन्न इति केनचिदुक्ते अपर आह यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति व्रात्येऽपि सम्भवेत्, व्रात्योऽपि ब्राह्मणः। अत्र ब्राह्मणविशेषस्य विद्याचरणसम्पदा सम्भवतः, अतिसामान्यस्य

ब्राह्मणत्वस्य योगात् व्रात्ये असम्भूतार्थकल्पनया विद्याचरणसम्पदः प्रतिषेधः कृत इति अस्य सामान्यच्छलत्वम् ।

शक्तिलक्षणयोरन्यतरवृत्त्या प्रयुक्ते शब्दे अपरवृत्त्या प्रतिषेधः उपचारच्छलम् । आह न्यायसूत्रम् "धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ।" [ न्याः सूः १।२।१४ ] । वृत्तिकृता च व्याख्यातम् , धर्मः शब्दस्यार्थेन सह सम्बन्धः तस्य विकल्पः विविधः कल्पः शक्तिलक्षणान्यतररूपः । तस्य निर्देशे वक्त्रा उच्चारिते शब्दे अर्थस्यापरस्य वाच्यस्य वा लक्ष्यस्य वा सद्भाव-प्रतिषेधः उपचारच्छलम् । यथा मञ्चाः क्रोशन्ति इत्युक्ते अपर आह मञ्चस्थाः पुरुषा एव क्रोशन्ति न तु मञ्चाः । अत्र वक्त्रा मञ्चशब्दस्य लक्षणावृत्त्यभि-प्रायेण प्रयोगः कृतः । दूषकः पुरुषस्तु मञ्चशब्दस्य मुख्यवृत्त्यभिप्रायेण अर्थ-निषेधं कृतवान् इति एतादृशदूषणाभिधान शब्दतया गुणेऽन्तर्भवति ।

**जातिः**—असदुत्तररूपाया जातेर्गुणेऽन्तर्भावः । उत्तरस्यासत्त्वं च नील-कण्ठैरुक्तम्—'उत्तरस्यासत्त्वं तु स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वम् ।' स्वाभिमतार्थव्याघातकस्योत्तरवाक्यमेव जातिरिति फलितम् । न्यायसूत्रं च "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" [न्याः सूः १।२।१८]। प्रयुक्ते हेतौ हेत्वाभासे वा यः प्रसङ्गो जायते स जातिरिति टीकाकृतः। भाष्ये तु जायमानोऽर्थो जातिरिति व्युत्पत्तिनिमित्तं जातेः प्रदर्शितम् । जल्पविचारे नास्तिकैः यदा वेदाप्रामाण्यं वा अनीश्वरत्वं वा जगतः स्थाप्यते, तदा आस्तिकानां प्रतिपक्षाणां सदुत्तराप्रतिभाने जातिप्रयोगेणापि वेदप्रामाण्यं वा सेश्वरत्वं वा स्थापनीयमन्यथा पृथग्जनानां शास्त्रादौ प्रत्ययापहृतौ धर्मकर्मादिलोपेन संसारमर्यादा हीयेतेति जातेः प्रयोजनवत्त्वम् । साधर्म्येण वैधर्म्येण वा प्रत्यवस्थानं जातिरिति तु जातेर्लक्षणमव्यापकम् । साधर्म्य-प्रत्यवस्थानस्य लक्षणत्वे वैधर्म्यप्रत्यवस्थानेऽव्याप्तिः । वैधर्म्यप्रत्यवस्थानस्य लक्षणत्वे साधर्म्यप्रत्यवस्थानेऽव्याप्तिः । उभयप्रत्यवस्थानस्य लक्षणत्वे प्रत्येक-प्रत्यवस्थानेऽव्याप्तिः । तस्माद् व्याप्तिनिरपेक्षतयाऽन्यतरप्रत्यवस्थानं जाते-र्लक्षणम् । वस्तुतस्तु व्याप्तिनिरपेक्षतया दूषणाभिधानं जातिरिति जाते-

लक्षणं वक्तव्यम्। अन्यतरप्रत्यवस्थानस्य सर्वत्र जातावभावात्। प्रतीपं प्रतिकूलतया अवस्थानं प्रत्यवस्थानमिति।

सा च जाति चतुर्विंशतिविधा। उक्तं च न्यायदर्शने "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्ति--प्रसङ्ग--प्रतिदृष्टान्तानुत्पत्ति--संशय--प्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः" ॥ [न्याः सूः ५।१।१]॥ द्वन्द्वान्ते श्रूयमाणसमाशब्दस्य प्रत्येकं योगात् साधर्म्यसमा वैधर्म्यसमा इत्यादिरूपैश्चतुर्विंशतिर्जातयो बोध्याः।

तत्र व्याप्तिनिरपेक्षसाधर्म्येण साध्यासाधकहेतुदूषकमुत्तरं साधर्म्यसमा। यथा—आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत्, क्रियाहेतुगुणश्चात्र वायुसंयोगादिरेवेति वादिना सक्रियत्वस्य साधने प्रतिवादी उत्तरयति यदि सक्रियसाधर्म्यात् सक्रियस्तदा विभुत्वरूपनिष्क्रियसाधर्म्यात् निष्क्रिय एव किं न स्यात्। अत्र निष्क्रियत्वसाधने व्याप्तिनिरपेक्षं विभुत्वसाधर्म्यं प्रयुक्तम्, तच्च साधर्म्यं निष्क्रियत्वसाध्यस्यासाधकमिति असदुत्तरमेतत्। अथवा शब्दोऽनित्यः कृतकत्वाद् घटवत्, इति अन्वयेन, व्यतिरेकेण वा आकाशवदित्युक्ते प्रतिवादिन उत्तरं यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद् वा अनित्यः स्यात्तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यात् इति साधर्म्य-समा ॥१॥

व्याप्तिनिरपेक्षवैधर्म्येण साध्यासाधकहेतुदूषकमुत्तरं वैधर्म्यसमा। यथा—तत्रात्मनि क्रियावतो लोष्टस्य साधर्म्याद् यदि क्रियावानात्मा तदा विभुत्व-रूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात्, न हि तत्साधर्म्यात् क्रियावान् भवेत् तद्वैधर्म्यात् निष्क्रियो न भवेदित्यत्र किञ्चिन्नियामकमस्ति। अथवा शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्ते अनित्यघटसाधर्म्याद् यदि शब्दोऽनित्यः स्यात्तर्हि तद्वैधर्म्यान्नित्यः स्यात्, न चात्र किञ्चिन्नियामकमस्ति इति वैधर्म्यसमा ॥२॥ [साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्य-वैधर्म्यसमौ ॥ न्याः सूः ५।१।२

परोक्तसाधनादेव तदव्यापकस्य धर्मस्य पक्षे आपादनमुत्कर्षसमा। यथा—शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्ते अपरः कश्चिदाह यदि कृतकत्वेन

हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना शब्दो घटवत् सावयवः स्यादिति। शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्ते अपर आह अनित्यत्वं कृतकत्वं च घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यात्। अत्र धर्मान्तरोत्कर्षापादनम्। उक्तं च न्यायसूत्रे "साध्यदृष्टान्तयोर्धर्मविकल्पादुभय-साध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः॥" [न्याः सूः ५।१।४]॥३॥

परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावापादनम् अपकर्ष-समा। यथा—शब्दोऽनित्यः कृतकत्वाद् घटवत् इत्युक्तेऽपरो ब्रूते—यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना घटवच्छब्दोऽश्रावणः स्यात्। यद्वा शब्दोऽनित्यः कृतकत्वाद् घटवदित्युक्ते आह यदि अनित्यसहचरितकृतकत्वाद् घटधर्मात् शब्दोऽनित्यः स्यात्तर्हि कृतकत्वा-नित्यत्वसहचरितघटधर्मरूपवत्त्वाभावात् शब्दे कृतकत्वानित्यत्वयोरभावः स्यात्। अत्र श्रावणत्वधर्मस्य कृतकत्वानित्यत्वयोर्वा धर्मयोरपकर्ष इति अपकर्षसमा॥४॥

( क्रमशः )

# वैदिकस्वरालोचनम्

[ निबन्धकः—**श्रीअमरकुमारचट्टोपाध्यायः** ]

( पूर्व्वानुवृत्तम् )

अधुना वयं समासबद्धेषु पदेषु यथा स्वरो निर्णीयेत तथा विचारयामः।

(१) समासस्य—समासबद्धस्य शब्दस्य अन्त्यः स्वर उदात्तो भवति।

2 2 1 3

यथा—यज्ञश्रियम्। यज्ञस्य श्रीः इति विग्रहे यज्ञश्रीशब्दः षष्ठीतत्पुरुषसमास-बद्धः। तस्य अन्तिमस्वरस्य ईकारस्य अनेन सूत्रेण उदात्तत्वम्। अमू-

विभक्तेः 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वम्। (श्री + अम्—श्रिय् + अम्)।

(२) बहुव्रीहौ प्रकृत्या पूर्वपदम्—बहुव्रीहिसमासे पूर्वपदं प्रकृत्या तिष्ठति। पूर्वपदस्य यः स्वरः स एव समग्रस्य समासस्यापि स्वर इत्यर्थः।

2 13444

यथा—चित्रश्रवस्तमः। चित्रं श्रवो यस्य स इति चित्रश्रवाः। तस्मात् तमप् प्रत्ययः। तस्य प्रत्ययस्य 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वम्। ततो बहुव्रीहिसमानबद्धस्य 'चित्रश्रवस्' इत्यस्य 'चित्र' इति पूर्वपदम्। तस्य 'फिषोऽन्त उदात्तः' इत्यनेन अन्तोदात्तत्वम्। एतदेव समुदायस्य स्वरः।

(३) नञ्सुभ्याम्—बहुव्रीहिसमासे नञः सुशब्दाच्च परं विद्यमानम् उत्तरपदम् अन्तोदात्तं भवति, अतोऽत्र समासः अन्तोदात्तो भवतीत्यर्थः

2 22 21

आयातः। पूर्वसूत्रस्य अपवादभूतम् इदं सूत्रम्। सुऽउपायनः। सु

221

शोभनम् उपायनं यस्य स इति विग्रहः। अव्रीहिः। नास्ति व्रीहिर्यस्य स इति विग्रहः।

(४) वीरवीर्यौ च—बहुव्रीहिसमासे सुशब्दात् परं विद्यमानौ वीरशब्दः वीर्यशब्दश्च आद्युदात्तौ भवतः। पूर्वसूत्रस्य अपवादभूतं सूत्रम् इदम्।

2134 2134

यथा—सुवीरेण। सुवीर्यस्य। विभक्तेः 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वात् समासस्य स्वर एव तिष्ठति।

(५) क्रत्वादयश्च—बहुव्रीहिसमासे सुशब्दात् परं विद्यमानाः क्रतुप्रभृतयः

213

शब्दा आद्युदात्ता भवन्ति। यथा—सुक्रतुः। 'नञ्सुभ्याम्' इत्यस्य अपवादभूतम् इदं सूत्रम्। क्रतुः, दृशीकः, प्रतीकः, प्रतूर्तिः, हव्यम्, भव्यम्, भग इति सप्तसंख्याका इमे क्रत्वादयः शब्दाः।

(६) कार्तकौजपादयश्च—कार्तकौजपौप्रभृतयो द्वन्द्वसमासनिष्पन्नाः शब्दाः पूर्वपदप्रकृतिस्वरं भजन्ते। तेषु शब्देषु 'समासस्य' इत्यनेन विहितम् अन्तो-

दात्तत्वं न भवति इति भावः। कार्तकौजपौ, सावर्णिमाण्डूकेयौ ( सावर्णि-माण्डूकेयो वा ), अवन्त्यश्मकाः, पैलश्यापर्णेयाः, कपिश्यापर्णेयाः, शैतिकाक्ष-पाञ्चालेयाः, कटुकवार्चलेयाः, शाकलशुनकाः, शाकलशणकाः, शणकबाभ्रवाः, आर्चाभिमौद्गलाः, कुन्तिसुराष्ट्राः, चिन्तिसुराष्ट्राः, तण्डवतण्डाः, अविमत्त-कामविद्धाः, बाभ्रवशालङ्कायनाः, बाभ्रवदानच्युताः, कठकालापाः, कठकौथुमाः, कौथुमलौकाक्षाः, स्त्रीकुमारम् , मौद्गपैप्पलादाः, वत्सजरन्तः, सौश्रुतपार्थिवाः, जरामृत्यू , याज्यानुवाक्ये इति इमे शब्दाः कार्तकौजपादयः ।

यदि इमे एव परिगणिताः शब्दाः कार्तकौजपादिगणान्तर्गता भवेयुः, तर्हि 'दोषावस्तर्धिया वयम्' इत्यत्र 'दोषावस्तः' इति पदस्य कार्तकौजपादित्वात् आद्युदात्तत्व सायणाचार्येण स्वभाष्ये कथं प्रसाधितम् इति चिन्तनीयम् ।

(७) उभे वनस्पत्यादिषु युगपत्—वनस्पतिप्रभृतयः केचन शब्दाः सन्ति । तेषां पूर्वपदस्य उत्तरपदस्य च यौ स्वरौ तौ उभौ अपि अन्ततः तिष्ठतः । यथा—शचीपतिम् (1 2 1 3)। शार्ङ्गरवादित्वात् शचीशब्दः आद्युदात्तः। पतिशब्दः पाधातोः डतिप्रत्ययेन निष्पन्नः। तत्र 'आद्युदात्तश्च' इत्यनेन प्रत्ययस्वरः। इमौ उभौ अपि स्वरौ युगपत् तत्र वर्तेते। न तु 'समासस्य' इत्यनेन अन्तो-दात्तत्वं जातम्। वनस्पतिः, बृहस्पतिः, शचीपतिः, तनूनपात्, नराशंसः, शुनःशेफः, शण्डामर्कौ, तृष्णावरूत्री, लम्काविश्ववयसौ, मर्मृत्युः इति इमे दश शब्दा वनस्पत्यादयः।

(८) देवताद्वन्द्वे च—देवतावाचिनां शब्दानां द्वन्द्वसमासे जाते उभौ अपि समासघटकौ शब्दौ स्वरविषये प्रकृत्या तिष्ठतः। यथा—इन्द्रावरुणौ (1 3 1 3 4)। इन्द्रशब्दः रन्प्रत्ययान्तः। अतः स आद्युदात्तः। वरुणशब्दश्च उनन्-प्रत्ययान्तत्वात् 'ञ्नित्यादि—' इत्यनेन आद्युदात्तः। उभौ अपि इमौ स्वरौ शेषं यावत् तिष्ठतः।

(९) तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः—तत्पुरुष-

समासे तुल्यार्थकः, तृतीयान्तः, सप्तम्यन्तः उपमानार्थकः, अव्ययः, द्वितीयान्तः, कृत्यप्रत्ययनिष्पन्नाश्च (= तव्या-नीय-ण्यत् क्यप् प्रत्यययुक्ताः) शब्दा यदि पूर्वपदभूता भवेयुः, तर्हि एषाम् एव स्वराः प्रकृत्या तिष्ठन्ति। एषां शब्दाना ये स्वराः समुदायस्य समासस्यापि त एव स्वराः न तु 'समासस्य'

1 3 4 4

इत्यनेन अन्तोदात्तता इति सरलार्थः। यथा—तुल्यश्वेतः। 'यतोऽनावः' इत्यनेन तुल्यशब्दः आद्युदात्तः। 'कृत्यतुल्याख्या अजात्या' इति सूत्रेण अत्र

2 1 3 4

तत्पुरुषसमासो भूतः। किरिकाणः। किरिणा काण इति विग्रहः। 'कृगॄशृकुठिभिदिच्छिदिभ्यश्च' इति औणादिकसूत्रेण कॄधातोः उत्तरम् इ प्रत्ययो जातः। अस्य प्रत्ययस्य तेनैव सूत्रेण कित्वात् 'कितः' इत्यनेन प्रत्ययस्य अन्त्यः स्वर

2 21 3 4

स एव समासस्यापि स्वरः। मन्दयत्सखम्। मन्दयति मादके इन्द्रे इत्यर्थः। मन्दयति सखा इति विग्रहात् सप्तमीतत्पुरुषः समासः। अत्र समासे सप्तमी विभक्तिर्न श्रूयते अतः पूर्वपदं न सप्तम्यन्तमिति शङ्का न कर्तव्या। विग्रहवाक्यं मनसि निधाय तृतीयान्तं सप्तम्यन्तं द्वितीयान्तम् इत्युक्तम्। मद् + णिच् + शतृ इत्यनेन 'मन्दयत्' इति शब्दो निष्पन्नः। शतृप्रत्ययस्य अकारः 'आद्युदात्तश्च' इत्यनेन उदात्तः। सति शिष्टस्वरात् स एव बलीयान्। एवं मन्दयच्छब्दः अन्तोदात्तो जातः। स एव समासस्यापि स्वरः। अव्ययानां मध्ये नञ्कुनिपाता एव यदि पूर्वपदभूताः स्युः, तर्हि पूर्वपद-

1 3 4

प्रकृतिस्वरत्वं भवति। अन्येषाम् अव्ययानां पूर्वपदत्वे तु न। अवज्ञः।

2 1 3 4 4

स्नात्वाकालकः। मयूरव्यंसकादित्वात् अत्र तत्पुरुषसमासो जातः। पूर्वपदस्य क्त्वाच्प्रत्ययनिष्पन्नत्वात् निपातत्वम्। क्त्वाच्प्रत्ययस्य चकारस्य प्रयोगकाले अदर्शनात् 'चितः' इत्यनेन पूर्वपदम् अन्तोदात्तम्। इयम् अन्तोदात्तता

2 2 1 3 4

समासस्यापि। मुहूर्तसुखम्। 'अत्यन्तसंयोगे च' इत्यनेन अत्र द्वितीया-

तत्पुरुषः समासः। मुहूर्तशब्दो विग्रहवाक्ये द्वितीयान्तः। अयं शब्दः अन्तोदात्तः। अतः समासस्यापि स एव स्वरः। भोज्योष्णम्। 'कृत्य-तुल्याख्या अजात्या' इत्यनेन अत्र तत्पुरुषः समासो जातः। भोज्यशब्दः ण्यत्प्रत्ययान्तः। अयं ण्यत्प्रत्ययः कृत्यसंज्ञकः। अस्य प्रत्ययस्य तकारस्य कार्यकाले अपगमात् 'तित्स्वरितम्' इत्यनेन भोज्यशब्दस्य अन्तिमः स्वरः स्वरितः। समासस्यापि स एव स्वरः। उष्णशब्दस्य उकारेण सह स्वरितस्य अकारस्य 'आद्गुणः' इत्यनेन एकादेशे गुणे कृते यः ओकारः समुत्पन्नः सोऽपि 'अनुदात्तोदये पुनः स्वरितं स्वरितोपधे' (३।१२) इति ऋक्प्रातिशाख्य-वचनात् स्वरितः।

1 3 4 (above भोज्योष्णम्)

(१०) तृतीया कर्मणि—कर्मवाच्ये विहितो यः क्त-प्रत्ययः तस्मिन् परतः तृतीयान्तं पूर्वपदं तत्पुरुषे स्वरविषये प्रकृत्या तिष्ठति। स्वस्वरं परित्यज्य 'समासस्य' इत्यनेन अन्तोदात्तत्वं न अङ्गीकरोति इति भावः। अहिहतः। हन्धातोः अनन्तरं कर्मवाच्ये क्त-प्रत्ययं कृत्वा हतशब्दः सम्पन्नः। तस्मिन् परतः अहिशब्दो विग्रहवाक्ये तृतीयान्तः स्वस्वरं न परित्यक्तवान्। अहिशब्दः अन्तोदात्तो व्युत्पादितः। अयमेव समासस्यापि स्वरः। कर्मवाच्यभिन्ने वाच्यान्तरे यः क्त-प्रत्ययो विहितः, तत्र तु तृतीयान्तं पूर्वपदं प्रकृत्या न तिष्ठति। यथा—**रथयातः**। रथेन यातः इति विग्रहः। अत्र याधातोः कर्तृवाच्ये एव क्तप्रत्ययो भूतो न कर्मवाच्ये। अतो न पूर्वपदप्रकृति-स्वरत्वम्।

2 1 3 4 (above अहिहतः); 2 2 2 1 (above रथयातः)

2 1 3 4 (above अहिहतः)

ननु 'अहिहतः' इत्यादिषु "तत्पुरुषे तुल्यार्थ—" इति सूत्रेणैव पूर्वपद-प्रकृतिस्वरत्वं सिध्यति। अतः किमर्थम् इदं सूत्रम् आचार्येण पाणिनिना कृतम्। (पूर्वः पक्षः)

'गतिकारकोपपदात् कृत्' इत्यनेन उत्तरपदप्रकृतिस्वरविधायकेन सूत्रेण 'तत्पुरुषे तुल्यार्थ—' इति सूत्रं बाधितम्। (उत्तरः पक्षः)

यदि एवं तर्हि 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरत्वं कथं न भूतम्। ( पूर्वः पक्षः )

इदं सूत्रं पुन. 'थाथघञ्क्ताजबित्रकाणाम्' इति उत्तरपदान्तोदात्तत्व-विधायकेन सूत्रेण प्रतिहतम्। ( उत्तरः पक्षः )

( क्रमशः )

# उत्तरकुरुक्षेत्रम्

## [ श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन विरचितम् ]

( पूर्वानुवृत्तम् )

### तृतीयोऽङ्कः—प्रथमं दृश्यम्

[ हस्तिनापुरप्रासादः—बहिःकक्षे युधिष्ठिरो विमनायमानः सञ्चरति।]

युधिष्ठिरः—( स्वगतम् )अहो कष्टम्! धनञ्जयोऽद्यापि न प्रत्यागच्छति। न जाने, द्वारकायाः का वार्तेति। (गत्वा सिंहासने उपविशति) अद्य वासुदेवस्य संवादं विज्ञातुं मनो मे व्याकुलीभवति!

[ प्रविशति दारुकः ]

( प्रविश्य ) दारुकः—जयतु धर्मनन्दनः। राजन्, एषोऽहमागच्छामि।

युधिष्ठिरः—( ससम्भ्रममुत्थायाभ्यर्थयते ) अहो दारुक! आगम्यतां प्रिय बन्धो। कथय वार्त्ताम्।

[ दारुको मौनी तिष्ठति—अधोमुख उच्छ्वसिति ]

युधिष्ठिरः—कथ्यतां दारुक, किं कुशलं वर्तते केशवस्येति। द्वारकायाः शुभ-सन्देशं कथयित्वा प्रशमय मम उद्वेगम्।

दारुकः—महाराज! ( इत्युक्त्वा बाष्परुद्धकण्ठो विरमति )

युधिष्ठिरः—( सोत्कण्ठः ) उच्यतां प्रिय अकपटं सर्ववृत्तान्तः।

[ प्रविशति विषण्णमूर्तिरर्जुनः ]

( प्रविश्य ) अर्जुनः—आर्य ! वन्दे भगवन्तम् ।

युधिष्ठिरः—एह्येहि प्रिय । युष्मत्प्रतीक्षयाहं व्याकुलः क्षणं प्रतिपालयामि । तद् आगच्छ । उपविश । कथय सर्वम् ।

[ अर्जुनस्तूष्णीं तिष्ठति ]

युधिष्ठिरः—( सोद्वेगमुत्थाय भ्रातरं करे धृत्वा ) धनञ्जय, कथं तूष्णीं तिष्ठसि ? कथय प्रिय, वासुदेवस्य वृत्तान्तम् ।

अर्जुनः—( सोच्छ्वासम् ) आर्य, दारुकस्त्वां सर्वं कथयिष्यति ।

[युधिष्ठिरो विस्मयविह्वलो दारुकं निरीक्षते ]

दारुकः—( युधिष्ठिरं प्रति ) धर्मराज, किं वक्ष्यामि ? नास्ति केशवः ।

युधिष्ठिरः—( सोद्वेगम् उच्चैः ) नास्ति केशवः ?

दारुकः—अथ किम् ? ( स्खलितकण्ठः ) स हि निखिलबान्धवो विश्वात्मा लीलां परिहाय मर्त्यं त्यजति ।

युधिष्ठिरः—( सिंहासनाद् भूतले पतितः शोकविह्वलकण्ठः ) वासुदेवो मर्त्यं त्यजति ? ( खिन्नकण्ठः ) अहो हन्त, सर्वमद्य शून्यं पश्यामि !

[ दारुकार्जुनौ सत्वरं धर्मराजं सयत्नमुत्तोल्य सिंहासने स्थापयतः ]

दारुकार्जुनौ—धैर्यमवलम्बस्व धीमन् ।

युधिष्ठिरः—अहो केशव !

दारुकः—मतिमन् , तत्त्वज्ञो भवान् विवेकी सर्ववेत्ता च । अतः किं वदामः ? विधृत्य चात्मानं शमयतु विषादं स्वभावगुणेन ।

युधिष्ठिरः—कथय प्रिय, सर्वमाकर्णयामि ।

दारुकः—राजन् , धनञ्जयोऽपि विषादविह्वलः । अतोऽहं सर्वं कथयामि ।

युधिष्ठिरः—कथय प्रिय, उत्सुकोऽस्मि श्रोतुमानुपूर्व्येण ।

दारुकः—धर्मनन्दन, अचिन्त्यनीयं हि दैवविधानम् । मतिभ्रमात् प्रमत्ता

यादवा दुराचरणकलुषिता मुनिभिरभिशप्ताः। ते हि प्रकाशं भोग-विलासपरायणा अधर्माभिभूता श्रद्धार्हान् अवमानयन्ति।

युधिष्ठिरः—अहो पापम्!

अर्जुनः—तेषां पापताण्डवेर्द्वारका शान्तिहीना परस्परकलहेन विनाशपथ-मुपगता।

दारुकः—तदा हि वासुदेवो विलसितेषु दुर्लक्षणेषु महादेव्या गान्धार्य्या अभिशापवाणीं स्मरन्, प्रत्यासन्नकुलक्षयमवगम्य परिजनैः सह प्रभास-तीर्थं प्रस्थितः।

अर्जुनः—प्रस्थिते च यदुनाथे, तदुपदेशाद् वसुदेवगर्हिताः श्रीकृष्णमहिष्यो द्वारकायां ध्यानयोगपरायणा व्रतमाश्रित्यावस्थिताः।

युधिष्ठिरः—अहो कष्टम्! ततस्ततः?

दारुकः—ततश्च प्रभासेऽपि अधर्मेण नृत्यगीतमदिरात्सर्वविह्वला यादवाः काल-प्रेरिता इव परस्परं मुषलेनाक्रम्य विनाशं जग्मुः।

युधिष्ठिरः—( सखेदम् ) अहो, यदुकुलं निःशेषं क्षयमुपगतम्!

अर्जुनः—ततश्चाकर्णयतु शेषवृत्तान्तम्।

दारुकः—तदा च महावीरो रौहिणेयः कुलक्षयदर्शनेन व्यथित आत्मनश्च महाप्रयाणकालं विज्ञाय योगेन तनुं तत्याज।

युधिष्ठिरः—अहो, वीरोत्तमो हलधरो भगवान् अनन्तः!

दारुकः—ततश्च महाराज! ( स्खलितवाक् मौनी तिष्ठति )

युधिष्ठिरः—कथ्यतां प्रिय, परिणामवृत्तान्तश्रवणाय व्याकुलस्तिष्ठामि।

दारुकः—व्यथितोऽस्मि महाराज अनुवृत्तं कथयितुम्। तथापि कथयामि। प्रस्थिते च रेवतीकान्ते श्रीभगवान् महाप्रयाणेप्सुर्योगेन शेष-शयनमाश्रितः।

युधिष्ठिरः—( शोकविह्वलः ) कथं कथं हि, भूतभावनस्य विश्वपतेरुत्क्रमणम् ?

दारुकः—श्रूयतां मतिमन्, तदा हि विहगोऽयमिति भ्रान्त्या जराख्यनिषादेन योगाविष्टः श्रीभगवान् सुतीक्ष्णसायकेन पादकमले संविद्धः। स हि सर्वज्ञो विभुर्भगवान् करुणापारावारः पीताम्बरश्चतुर्भुजमनोहरमूर्तिधरो देवगन्धर्वमहर्षिगण-संस्तुतः स्वकीयालौकिकोज्ज्वल-प्रभापुञ्जेन दिङ्मण्डल-मुद्भासयन् सुरलोकाय प्रतस्थे।

युधिष्ठिरः—स हि योगेश्वरो विश्वात्मा वासुदेवः। ( सोच्छ्वासं विलपति ) ( क्षणेनात्मानं संयम्य ) अहो, अचिन्तनीयो भगवन्महिमा ! ( खिन्नकण्ठः ) ततश्च ?

दारुकः—ततश्च राजन्, पूर्वादिष्टः केशववचनाद् द्वारकामागम्य मया श्रीभगवत आदेशः प्रतिपालितः।

अर्जुनः—मयापि श्रीहीनां शून्यां द्वारकामुपस्थाय महात्मनोऽस्य श्रीमुखात् केशवस्यान्तिमोपदेश आकर्णितः। तेन महागुरोर्मातुलवसुदेवस्य सकाशं गत्वा विषादखिन्नं तं कृष्णकामिन्यश्च समाश्वासयम्।

युधिष्ठिरः—अहो ततस्ततः ?

अर्जुनः—ततश्च योगेन त्यक्तकलेवरे सपरिजने यदुवृद्धे, तपसा दिवं प्रस्थितासु च पतिध्यानपरासु रुक्मिणीसत्यभामादिकृष्णभामिनीषु, सम्पादितं मया दिव्यधामगतानामन्त्येष्टिकृत्यादिकम्।

दारुकः—ततश्चावशिष्टान् सहनारीजनान् यदुवंशीयान् संनीय प्रस्थितेषु अस्मासु, संप्लाविता कनकहर्म्यमालिनी द्वारका सिन्धुसलिलेन।

युधिष्ठिरः—( निःश्वस्य ) अहो, फलितस्तावत् कौरवमातुरभिसम्पातः। येन सर्वशक्तिमानपि भगवान् सतीशिरोमणेरभिशापं शिरोधार्यं कृत्वा धर्मार्थं कुलक्षयं स्वीकरोति !

अर्जुनः—अहमपि, आर्य, वासुदेवविहीनो निःशक्तिः सञ्जातः। तेन पथि

दस्युभिराक्रान्तं रमणाकुलं रक्षितुमसमर्थो हतावशिष्ट-यदुरमणी-समेतान् क्षत्रियान् इन्द्रप्रस्थं समानीयात्र आगच्छामि। प्रद्युम्नतनयं वज्रं च तत्र सिंहासने समारोप्य प्रत्यागच्छामि।

युधिष्ठिरः—अलं शोकेन प्रिय, पश्य—कालो हि बलवत्तरः। स हि भगवद्विधानमनुगच्छति। तेन सर्वशक्तिमान् योगेश्वरो वासुदेवः सृष्टि-स्थितिविलयाख्यां लीलां करोति। नात्र अस्माकं प्रतीकारोपायः।

अर्जुनः—( सविषादम् ) एभिर्विपर्ययैर्विमूढोऽस्मि देव। अहो प्राणानन्दं श्रीकृष्णमपश्यन् सर्वमहं तिमिराच्छन्नं पश्यामि। सर्वं मयि शून्यमा-भाति।

दारुकः—अधुना कर्तव्यमुपदिश्यतां महाराज, नियोज्यतां च धनञ्जयः पुण्यकृत्येषु विषादप्रशमाय।

युधिष्ठिरः—जयतु धर्मज्ञः। ( दारुकार्जुनौ समुद्दिश्य ) तद् धनञ्जय, अधुना वसुदेवसहितानां सपरिजनरामकृष्णादीनामुद्देशतः उदकदानपूर्वकं श्राद्धा-दिकमनुष्ठेयम्। तेन, नारदद्वैपायन-भरद्वाजादीनामामन्त्रणं विधाय ब्राह्मणभोजन-कनकवस्त्रगवादिदानानि आयोज्यन्ताम्।

अर्जुनः—जयति धर्मराजः।

दारुकः—विजयतां धर्मनन्दनः।

[ उभौ प्रस्थानं कुरुतः ]

युधिष्ठिरः—( स्वगतम् ) उत्तमम्। सर्वमधुना यथायथं समाप्यते। ततश्च आत्मनः शेषकृत्यम्। अतः किं पुनरनन्तरं राजहर्म्यवासविलासेन? तेन परीक्षिति समर्पितराज्यभारो निश्चिन्तः स्वच्छन्दचेतसा महाप्रस्थानाय प्रवर्तिष्ये।

इति तृतीयाङ्के प्रथमं दृश्यम्

**समाप्तस्तृतीयोऽङ्कः**

---

## चतुर्थोऽङ्कः—प्रथमं दृश्यम्

( हस्तिनापुर-राजपथः )

[उत्सववेशसज्जिता पुरी—उभयतः कदलीतोरणमङ्गलघटाद्यलङ्कृता हर्म्यमालाः—विद्यन्ते च पथि श्रेणिशः सुसज्जितगजाश्वरथादीनि सैनिकाश्च—नेपथ्ये मङ्गलशङ्खा ध्वनन्ति ]

[ प्रविशति वैदेशिकः ]

प्रविश्य वैदेशिकः सुलोचनः—अहो, उपस्थितोऽस्मि कुरुराजधानीम्। किन्तु बन्धुर्विनोदः पृष्ठतस्तिष्ठति। श्रान्तश्चाहम्। तेनात्र विश्रामशिलायामुपविशामि। ( पथिपार्श्वे शिलायामुपविशति )

[ प्रविशति विनोदः ]

प्रविश्य विनोदः—अरे मां पृष्ठतो विहाय आगच्छसि ? अनुसृत्य त्वां क्लान्तो भवामि।

सुलोचनः—आगच्छ बन्धो, अहमपि परिक्लान्तः। तदिह विश्रामशिलायामुपविश्य क्रियतां सुखेन श्रमापनोदनम्। ( श्रमं नाटयति )

विनोदः—( उपविशति ) भ्रातः, सुसमृद्धमेतद् राज्यम्। ननु शासति महीं धर्मनन्दने, प्रजानां सुखसमृद्धिः कुरुवीराणां महत्त्वं सूचयति। अतो नितरां धन्योऽस्ति धर्मपालो युधिष्ठिरः।

सुलोचनः—स हि पुण्यात्मा धर्मनन्दनो राजर्षिकल्पः पूर्वपुरुषाणां पुण्यचरितमनुपालयति। अतो विलसति सर्वतस्तस्य गुणमहिमा कीर्तिगौरवेण।

विनोदः—अथ किम्। पुण्यश्लोकः सोऽयं मुमुक्षुः सर्वसौख्यविलासं परिहाय पौत्राय सिंहासनमर्पयति।

सुलोचनः—धन्योऽस्ति धर्मराजो युधिष्ठिरः। सहि अक्षयां कीर्तिं प्रतनोति।

विनोदः—साधु युधिष्ठिरः। जयति महात्मा गौरवेण।

सुलोचनः—यातु, पथिषूत्सवसज्जां निरीक्ष्य कृतार्थो भवामि। अहो,

विनोदः—( दधिजीविकं प्रति ) भोः, उन्मोच्यतां ते दधिभाण्डम्। दीयतां च सशर्करदधिकं, पश्चाच्च तक्रमास्वादयामः।

सुलोचनः—साधु, साधु। दधिमोदकभोजनान्ते तक्रपानेन जठरं शीतलं भविष्यति। तच्च उत्तमं पानीयम्।

विनोदः—भोः, वैदेशिका वयं राज्याभिषेकोत्सवदर्शनार्थमागच्छामः। तद् दीयतां तूर्णमीप्सितं द्रव्यजातम्।

विक्रेतारौ ( पृथक्पृथग् द्रव्यम् उपस्थापयतः )—साधु साधु। गृह्यन्तां द्रव्याणि महाभागैः।

[ विनोदसुलोचनौतृप्त्या स्वादयतः ]

विनोद-सुलोचनौ—अहो उत्तममुत्तमम्। तृप्ता भवामः। तदुच्यतां किं किं मूल्यार्थं दद्मः।

विक्रेतारौ—( सविनयम् ) अलं मूल्यदानेन महाभागाः, अभ्यागता यूयम् अतिथिस्वरूपाः। अतोऽस्माभिः संवर्धनीयाः।

विनोदः—नहि—नहि। कथं सम्भवति तत्?

दधिविक्रेता—नाहं ग्रहीष्यामि मूल्यम्। अनेन नोऽतिथिसेवाऽस्तु।

मोदकविक्रेता—अहमपि माननीयान् आनन्देन तोषयामि। एतदेवास्माकं द्रव्यमूल्यम्।

विनोदः—( उभावुद्दिश्य ) अहो धन्या यूयम् औदार्यगुणेन। तद् धन्याः सन्ति नितरा हस्तिनापुरवासिनः। एतत् खलु स्मरणीयं भविष्यति।

सुलोचनः—भ्रातरौ, मुग्धा वयं युष्माकं महत्त्वेन। तथापि नोचितम् अस्माभिर्युष्माकं क्षतिसाधनम्। तद गृह्यतां किञ्चिन्मूल्यरूपेण। ( मुद्रादानाय करं प्रसारयति )

विक्रेतारौ—नहि—नहि। वयं तृप्ता भवामः। अतो गच्छामः स्वकार्याय। जयोऽस्तु महाभागानाम्। ( प्रस्थानं कुरुतः )

( नेपथ्ये दधिविक्रेता )—दधि—सुमिष्टं दधि।

( नेपथ्ये मोदकविक्रेता )—मधुरो मोदकः—मोदकः। मोदकः।

विनोदः—अहो, सुशीलाः खलु कुरुराज्यवासिनः। प्रशंसनीयमेषां सौजन्यम्।

सुलोचनः—एतद्धि कुरुनृपतीनां सुशासनमाहात्म्यं प्रकटयति। तद् बन्धो, जठरं सन्तृप्तम्। अधुना उत्थीयतामुत्सवस्थानगमनाय।

विनोदः—एष उत्तिष्ठामि। ( उत्थाय दण्डायमानः सर्व पश्यन् )

—अहो, आनन्दमयी कुरुराजधानी विशालराजपथ-मनोरमपुरोद्यान-मण्डिता शोभते। मनोहरहर्म्यमालिनीध्वजपताका तोरणमङ्गल-घटान्विता विचित्रकुसुममाल्यालङ्कृतेयं महानगरी गुणमहिम्ना द्वारकामनु-करोति।

इति चतुर्थेऽङ्के प्रथमं दृश्यम्।

( क्रमशः )

---

## वररुचि-कृतः प्राकृत-प्रकाशः

[ सम्पादकः—**श्रीसत्यरञ्जन-वन्द्योपाध्यायः** ]

( पूर्वानुवृत्तः )

### षष्ठः परिच्छेदः

**[ श्रीविद्याविनोदाचार्यकृता प्रकृतपादटीका ]**

**लट्लुट्लोश्च ज्ज ज्जा वा ॥२०॥**

एकस्मिन् बहुष्विति द्वयमनुवर्तते। लोट्-विध्यादिलिङोर्लट्लुटोश्च एक-वचने चोत्पन्नानां प्रत्ययानां ज्ज ज्जा इत्येतावादेशौ भवतः। एसो मुणेज्ज एसो मुणेज्जा एष जानाति जानीते वा। पक्षे एसो मुणए वा। एदे मुणेज्ज एदे मुणेज्जा एते जानन्ति जानते वा। पक्षे एदे[1] मुणंति। तुमं मुणेज्ज

---

1 A drops एदे.

तुमं मुणेज्जा त्वं जानासि जानीषे वा। पक्षे तुमं मुणसि मुणसे वा। तुम्हे मुणेज्ज तुम्हे मुणेज्जा यूयं जानीथ जानीध्वे वा। पक्षे तुम्हे मुणह। अहश्रं मुणेज्ज मुणेज्जा अहं जानामि जाने वा। पक्षे अहश्रं जाणामि। अम्हे मुणेज्ज अम्हे मुणेज्जा वयं जानीमः जानीमहे वा। पक्षे अम्हे मुणिमो।[1] लुटि। एसी णच्चावेज्ज एसो णच्चावेज्जा। एष नर्तयिता। पक्षे णच्चावेहिइ। एदे णच्चावेज्जा एते नर्तयितारः। एदे णच्चवेहिंति। तुमं णज्जावेज्ज तुमं णच्चावेज्जा त्वं नर्तयितासि। पक्षे तुमं णच्चावेहिसि[2]। तुज्झे णच्चावेज्जा तुज्झे णच्चावेज्जा यूयं नर्तयितास्थ नर्तयिताद्धे वा। पक्षे तुज्झे णच्चावेत्था.। हं णच्चावेज्ज[3] हं णच्चावेज्जा अहं नर्तयितास्मि नर्तयितास्मि नर्तयिताहे वा। पक्षे हं[4] णच्चावेसु'। अम्हे णच्चावेज्ज अम्हे णच्चावेज्जा वयं नर्तयितास्मः नर्तयितास्महे वा। पक्षे णच्चावेहिस्सा। लृटि तु णच्चावेहिइ णच्चावेहिति इत्यादि। लोटि। सो कुणेज्ज सो कुणेज्जा स करोतु स कुरुता वा। लिडयप्येकं सव्वो कुणेज्ज सव्वो कुणेज्जा सर्वे कुर्वन्तु सर्वे कुर्वन्तां वा। पक्षे सव्वे कुणंतु। तुमं कुणेज्ज तुमं कुणेज्जा त्वं कुरु त्वं कुरुष्व वा।[5] पक्षे तुम्हे कुणह। हं कुणेज्ज हं कुणेज्जा अहं करवाणि करवै वा। अहह कुणामु। अम्हे कुणेज्ज अम्हे कुणेज्जा वयं करवामः करवामहै वा[5]। पक्षे अम्हे कुणामो। **लिङ्लेतो लिङ्विधानात्तत्राप्येवं द्रष्टव्यम्।** यथा जइ भुज्जेज्ज ता थिप्पेज्ज। यदा भोद्‌यन्ते तदा अतर्पस्यत। पक्षे जइ भुज्जंतो ता थिप्पंतो। **ज्जहि ज्जो चैव दृश्येते विध्यादिष्वपि वा क्वचित्।** कुणेज्जहि कुणेज्जा करोतु कुरुता वा। कुर्यात् कुर्वीत इत्यादिषु **सर्ववचनेष्वेतावेव प्रयोगौ द्रष्टव्यौ इति वररुचिः।** पक्षे **सर्वेषु वचनेषु इज्जश्च**

1 A has मुणमो. 2 Not found in A.

3 After this A has repeated the lines, e. g. तुमं णच्चावेज्ज etc. upto हं णच्चावेज्जा. 4 After this A has लिडयप्येवम्.

5 After this A has लिडयप्येवम्.

**हिश्र सह स्यातां भविष्यति।** मए सो सुमरिज्जिहिइ मया स स्मरिष्यते। मए तुमं सुमरिज्जिहिसि मया त्वं स्मरिष्यसे। तए अहअं सुमरिज्जिहिमि त्वयाहं स्मरिष्ये। मए एदे सुमरिज्जिहिंति मया एते स्मरिष्यन्ते। मए तुम्हे सुमरिज्जिहिह मया यूयं स्मारिष्यध्वे। तए अम्हे सुमरिज्जिहिमो त्वया वयं स्मरिष्यामहें॥

## मध्ये च ॥२१॥

पूर्वोक्त-लकारेषु लट्-लुट्-लोट्-विध्यादिषु लिङ्सु परेषु धातोर्मध्ये ज्ज-ज्जा इत्येतौ विकरणौ वा भवतः। सो देज्जइ स ददाति। पक्षे सो देज्ज सो देज्जा विकरणादेशाभ्यामन्यत्र सो देइ। **ज्जा-विकरणः प्रायिक इति कात्यायनः।**[1] तेन यत्र विकरणः सर्वत्र ते देज्जंति ते ददति ददते वा। पक्षे ते देज्ज। विकरणादेशाभ्यामन्यत्र ते देंति। एवं मध्यमोत्तमपुरुषयोरप्युदाहार्यम्। लुटि। सो होज्जइ स भविता। पक्षे सो होज्ज सो होज्जा। विकरणादेशाभ्यामन्यत्र [सो][2] होहिइ। ते होज्जंति ते भवितारः। पक्षे ते होज्ज ते होज्जा। विकरणादेशाभ्यामन्यत्र ते होहंति। एवं मध्यमोत्तमयोरपि। लोट्। एसो लेज्ज एसो लेउ। लिङ्यप्येवम्। पक्षे एसो लेज्ज एसो लेज्जा। एवमन्यत्राप्युदाहार्यम्॥

## नानेकाचः ॥२२॥

अनेकाचो धातोर्मध्ये ज्ज-ज्जा इत्येतौ विकरणौ भवतः। घोलेज्ज घोलेज्जा घूर्णते। पक्षे घोलइ घोलए। एवमन्यत्राप्युक्तम्। **अनेकाचोऽपि विध्याज्ञौ ज्ज-ज्जा मध्ये तु दृश्यते।** कुणेज्जसु कुणेज्जासु कुरु कुरुष्व कुर्याः कुर्वीथा वा॥

## ईअ भूते ॥२३॥

भूतकाले विहितानां लङ्-लिङ्-लुङामनेकाचो धातोः परेषाम् ईअ इत्यादेशः

---

1 A has कात्वः. 2 Not found in A.

स्यात्। एकस्मिन् बहुष्वित्यनुवृत्तेः सर्वेषु वचनेषु विधीयते। हुवीअ अभवद् बभूव अभूद्वा। लहीअ अलब्ध अलभत लेभे वा ॥

**एकाचो हीअ ॥२४॥**

भूतविहितस्य तिङ्स्थाने हीअ इत्यादेशो भवति। होहीअ अभवद् बभूव अभूद्वा। काहीअ अकरोद् अकुरुत वा अकार्षीद् अकृत वा। सोहीअ श्रृणोतीत्यादि ॥

**आसिरस्तेस्तिङा ॥२५॥**

भूतकाले विहितेन तिङा सह स्ते. स्थाने आसिर्भवति। आसि राअणो आसीद् रावणः। बभूव अभूद्वा। बहुलवचनादप्येवम्।

**णिच एदादेरात् ॥२६॥**

णिचः स्थाने एद्भवति। धातोरादेः स्थाने आच। कारेइ कारयति कारयते वा। पाठयति पाठयते वा ॥

**आवे च ॥२७॥**

धातोरुत्तरे णिचः स्थाने आवे इत्यादेशो भवति। पृथग् उक्तकरणादादेत्वाभावः। करावेइ कारयति कारयते वा। पढावेइ पाठयति पाठयते वा ॥

**आविः क्त-भाव-कर्मसु वा ॥२८॥**

क्तप्रत्यये भावविहित-प्रत्यये कर्मविहित-प्रत्यये च परे आविरादेशो भवति। वा वचनादादेराच। पक्षे न तु एदाव इत्येतौ भवतः। नैदावे इति प्रतिषेधस्य वक्ष्यमाणत्वात्। हसाविओ हासितः। पक्षे हासिओ। पढाविओ पाठितः। पक्षे पाढिओ। केचित्तु यत्र आविरादेशस्तत्रापि लक्ष्यवशादात्वमिच्छन्ति। हासाविओ पाढाविओ। भावकर्मणोर्यथा। चोरावीअइ चोराविज्जइ चौर्यते। चिंतावीअइ चिंताविज्जइ चिन्त्यते। धारावीअइ धाराविज्जइ धार्यते। धृग् अवस्थाने इति[1] धातोः[2] अरादेशः[3]। पक्षे

---

1 A drops it. 2 A has धातुः क्तः.

3 Not found in A.

चोरिअइ चोरिज्जइ चिंतिअइ चिंतिज्जइ धारिअइ धारिज्जइ। त्वर् त्वरणे इत्यादौ तुरोविअं इत्यादि केचिन्न मन्यन्ते ॥

**नैदावे ॥२९॥**

क्त-भावे कर्मसु परे णिचः स्थाने एदाव इत्यादौ न भवतः। हसाविओ हसितः। पक्षे हासिओ हसाविअइ हसाविज्जइ हासिअइ हासिज्जइ हास्यते ॥

**अत आदुत्तमवचने वा ॥३०॥**

उत्तमपुरुषैकवचने परेऽतः स्थाने आद्वा भवति। जाणामि जाणेमि जानामि जाने वा। सहामि सहेमि सहे ॥

**इच्च बहुवचने ॥३१॥**

उत्तमपुरुषबहुवचने परेऽतः स्थाने आद्वा भवति इच्च। णिअच्छामो णिअच्छिमो पश्यामः। लहामो लहिमो लभामहे ॥

**क्ते ॥३२॥**

क्त-प्रत्यये परेऽतः स्थाने इद्भवति। भविअं भूतम्। जणिअं ज्ञातम्। पाढअं पठितम्।

**ए च क्त्वा-तुमुन्-तव्यङ्-भविष्यत्सु ॥३३॥**

क्त्वा-तुमुन्-तव्यङ्-भविष्यत्-कालविहित-प्रत्ययेषु परेषु धातोरेतः स्थाने इकारो भवति। एकारादेशश्च। हरिऊण हरेऊण हृत्वा। हरिउं हरेउं हर्तुम्। हविअव्वं हरेअव्वं हर्तव्यम्। हरिहिइ हरेहिइ हरिष्यति ॥

**वा लडादावादिष्टे ॥३४॥**

कृतादेशलडादौ परेऽतः स्थाने एद्वा स्यात्। हसेइ हसइ हसति। रमेइ रमइ रमते। खामंतो खमंतो क्षयमाणः। वढेंति वढंति वर्धन्ते। विरमेउ विरमतु। तुमं विरमेसु विरमसु त्वं विरम ॥

**इति विद्याविनोदाचार्यकृतौ प्राकृतपादे तिङ्विधिः**

**षष्ठः परिच्छेदः ॥**

## सप्तमः परिच्छेदः

अथ धातुविधि·

### भुवो हो-हुवौ ॥१॥

भू सत्तायामित्यस्य स्थाने होहुव इत्येतावादेशौ भवतः। होइ हुवइ भवति। होंति हुवंति भवन्ति ॥

### क्ते हूः ॥२॥

क्ते परे भुवः स्थाने हू आदेशो भवति। हूअ भूतं। अ संदुरुदश्च प्रादेः। सं दुर् उद् इत्येतैर्वर्जितात् प्रादेरुत्तरस्य भुवः स्थाने क्ते परे हूरादेशो भवति। परिहूओ परिभूतः अणुहूओ अनुभूत। समादेस्तु। सभूओ संभूत इत्यादि। निहिभूओ निधिभूत इत्येके ॥

### प्रादेर्भवः ॥३॥

प्रादेरुत्तरस्य भुवः स्थाने भवादेशो भवति। होहुवयोर्बाधकोऽयम्। पभवेइ पभवए प्रभवति। पहवंति पहवेंति प्रभवन्ति ॥ संभवेइ संभवए संभवति। संभवेंति संभवन्ति। क्वचिदप्रादेश्च। भवेइ भवइ भवति। प्रादेर्हुप्प इत्येके। पहुप्पेइ पहुप्पइ ॥

### त्वरस्तुवरः ॥४॥

ञित्वरा संभ्रमे इत्यस्य स्थाने तुवर इत्यादेशो भवति। तुमं तुवरसे त्वं त्वरसे। पक्षे तुमं तुवरेसि तुमं तुवरसे ॥

### घुर्णों घोल-घुम्मौ ॥५॥

घूण घूर्ण भ्रमणे इत्यस्य घोल्ल घुम्म इत्येतावादेशो भवतः। घोलंत घोलमाणो घुम्मतो घूर्णमाणः ॥

### नुदोणोल्लः ॥६॥

नुद प्रेरणे इत्यस्य णोल्ल इत्यादेशो भवति। पणोल्लि प्रणुन्नः ॥

### दूङो दूमश्च ॥७॥

टुदूङ् पतितापे इत्यस्य स्थाने दूमादेशो भवति। अहअं दूमामि अहं दूये ॥

**पाटेः फालः ॥८॥**

पाटेः फालो भवति। तुम्हे फालावेह यूयं पाटयथ। फालाविअं पाटितम्।

**वृषादीनामृतोऽरिः ॥९॥**

वृषु सेचने इत्यादीनां ऋत स्थानेऽरिरादेशो भवति। एसो वरिसउ एष वर्षतु। तुमं वरिससु त्वं वर्ष वरिसेऊण वर्षित्वा। मरिस अव्वं मर्षितव्यं। करिसेइ कर्षति। वृषादीनामिति असर्व्वविषयतासूचनार्थम्। यथा नच्चइ नृत्यति॥

**अन्तेऽरः ॥१०॥**

धातोरन्ते वर्तमानस्य ऋत· स्थानेऽर इत्यादेशो भवति। अम्हे हरिमो अम्हे हरामो वयं हरामः। वेरमो वरामो वृणुमः वृणीमहे वा। धरइ धरए ध्रियते। धृञ् अवस्थाने धातुः॥

**कृञः कुणश्च ॥११॥**

कुणइ कुणए करोति कुरुते वा। पक्षे करइ करए वा॥

**जृम्भेर्जंभा ॥१२॥**

जृम्भेः जंभा भवति। जंभाअइ जृम्भते। जृम्भेति चादेशः सोपसर्गस्य नेष्यते। आअंभइ॥

**ग्रहेर्गेण्हः ॥१३॥**

ग्रहेर्गेण्हो भवति। गेण्हीअइ गेण्हीअइ गेण्हिज्जइ गृह्यते॥

**घेत्तुः क्त्वा तुमुन् तव्येषु ॥१४॥**

क्त्वादिषु परेषु ग्रहेर्घेत्तुर्भवति। घेत्तुण गृहीत्वा। घेत्तुं ग्रहीतुं। घेत्तव्वं ग्रहीतव्यं॥

**कृञः का भूतभविष्यतोः ॥१५॥**

क्त्वादिषु परेषु भूतभविष्यत्काले विहिते च प्रत्यये परे कृञः स्थाने कादेशो भवति। काहीअ अकरोत् अकार्षीत् चकार वा काहिह करिष्यति कर्त्ता क्रियाद्वा। क्त्वा काऊण। तुमऊंतव्यड्। काअव्वं॥ (क्रमशः)

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्


| Vol. L. No. 9 | १८८९ शकीये पौषे<br>१३७४ वङ्गाब्दीये<br>५०तम-वर्षस्य ९म सङ्ख्या | January 1968 |
|---|---|---|


## भाषापरिच्छेदे पदार्थनिरूपणम्


[ निबन्धकः—श्रीदीननाथत्रिपाठी महाचार्यः ]


( पूर्वानुवृत्तम् )

वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनं वर्ण्यसमा । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यनुमाने कश्चित् आह—लोष्टस्य क्रियाहेतुनोदनादिसंयोगरूपगुणवत्त्वात् सक्रियत्वम् । आत्मनोऽपि लोष्टवत् क्रियावत्त्वे लोष्टवत् नोदनादिसंयोगवत्त्वमपि स्यात् । आत्मनो यदि न नोदनादिवत्त्वं तर्हि क्रियावत्त्वमपि नेष्यताम् । लोष्टवत् क्रियावत्त्वमात्रमिष्यते नोदनादिवत्त्वं तु नेष्यते इत्यत्र न किञ्चिन्नियामकमस्ति । इति वर्ण्यसमा ॥५॥

साध्यहेत्वोर्धर्मयोः पक्षे तुल्यतापादनम् अवर्ण्यसमा । यथाः—आत्मा क्रियावान् क्रियाहेतुगुणवत्त्वात् लोष्टवत्, इत्युक्ते अपर आह—लोष्टे क्रियाहेतुगुणवत्त्वं सिद्धमात्मनि न सिद्धम् । तथाचासिद्धेन क्रियाहेतुगुणवत्त्वेन आत्मनि क्रियावत्त्वं यथा साध्यते, तथा तुल्यतया सिद्धेन क्रियावत्त्वेन क्रियाहेतुगुणवत्त्वमात्मनि किं न साध्यते विनिगमनाविरहात् । यथा वा शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा घटे कृतकत्वं न तथा शब्दे, इति असिद्धेन

कृतकत्वेन यदि शब्दे अनित्यत्वं साध्यते तर्हि सिद्धेन अनित्यत्वेन शब्दे कृतकत्वं कथं न साध्यते। इयमेव अवर्ण्यसमा जातिः ॥६॥

दृष्टान्तविकल्पकथनपूर्वकं दार्ष्टान्तिकविकल्पकथनं विकल्पसमा। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्वाल्लोष्टवदित्यनुमाने कश्चिदेवमाह—क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु यथा लोष्टादिः, किञ्चिल्लघु यथा वायुरेवं क्रियाहेतुगुणयुक्त किञ्चिल्लोष्टादि क्रियावत् स्यात् किञ्चित् आत्मादि क्रियाशून्यं स्यादित्यत्र किञ्चिन्नियामकं नास्ति। यथा वा शब्दोऽनित्यः कृतकत्वादित्युक्ते कृतकं किञ्चित् मृदु यथा कम्बलादि, किञ्चिच्च कठोरं यथा लौहादि इति द्विविधं दृष्टं तथा कृतकं किञ्चिद् घटादि अनित्यम् एवं कृतकं किञ्चित् शब्दादि नित्यं स्यादपि। इयमेव विकल्पसमाजातिः ॥७॥

दृष्टान्तस्य पक्षतुल्यता कथनं साध्यसमा। यथाः—आत्मा क्रियावान् क्रियाहेतुगुणवत्वात् लोष्टवत् इत्युक्ते कश्चिदाह—यथा लोष्टः तथा आत्मा इति यद्युच्यते तदा यथा आत्मा तथा लोष्ट इत्यप्यायातम्। तथाच यदि लोष्टसाधर्म्यात् आत्मनि क्रियावत्वं साध्यते तर्हि आत्मसाधर्म्यात् लोष्टेऽपि क्रियावत्वं साध्यताम्। नो चेत् यथा लोष्ठ स्तथा आत्मा इति न वाच्यम्। नहि लोष्टसदृश आत्मा आत्मसदृशो न लोष्ट इत्यत्र किञ्चिन्नियामकमस्ति। यथा वा शब्दोऽनित्यः कृतकत्वाद् घटवदित्यत्र यदि घटवदनित्यः शब्दस्तर्हि शब्दवत् घटः श्रावणः स्यात्। इयं साध्यसमा जातिः। अत्र साध्यशब्दः साध्यतेऽस्मिन्निति व्युत्पत्त्या पक्षवाच्येव ॥८॥

प्राप्त्या हेतुनिष्ठसाध्यसामानाधिकरण्यरूपया साध्येन हेतुसाधनरूपप्रत्यावस्थानं प्राप्तिसमा। यथा आत्मा क्रियावान् क्रियाहेतुगुणवत्वादित्यत्रैव क्रियाहेतुगुणवत्वं पक्षे हेतुसमानाधिकरणं सदेव क्रियासाधकं भवति इति वक्तव्यम्। तथाच उभयोरप्यविशेषात् क्रियाहेतुगुणवत्वेन क्रियावत्वं साध्यते क्रियावत्वेन क्रियाहेतुगुणवत्वं कथं न साध्यते तुल्ययुक्तेरिति। यथा वा शब्दोऽनित्यः कृतकत्वाद् घटवदित्यत्र अनित्यत्वसम्बद्धकृतकत्वेन अनित्यत्वं साध्यते, अनित्यत्वेन कथं कृतकत्वं न साध्यते। अत्र प्राप्तिः सम्बन्धः

[ सामानाधिकरण्यम् ] हेतुः साध्येन सम्बद्ध साध्यसाधकश्चेत् साध्यहेत्वोर्मिथः सम्बद्धत्वाविशेषात् किं साधनं कि साध्यमित्यनिश्चयः। इय प्राप्तिसमा-जातिः ॥६॥

अप्राप्त्या पक्षे असिद्धरूपया दोषोद्भावनम् अप्राप्तिसमा। यथा आत्मा क्रियावान् क्रियाहेतुगुणवत्वादित्यत्रैव आत्मनि नियामकाभावादप्रमितस्य क्रियाहेतुगुणवत्वरूपस्य हेतोः क्रियावत्वसाधकत्वे कश्चिदाह अप्राप्तत्वाविशेषात् तेनैव हेतुना सर्वसाधनसम्भवात् स हेतुः साध्यमेव साधयेत् साध्याभावं किमिति न साधयेत्। न हि साध्यमेव साधयति न साध्याभावमित्यत्र किञ्चिन्नियामक-मस्ति। हेतुः साध्येनासम्बद्धः कथं साध्यं साधयेदिति इयमेव अप्राप्तिसमा-जातिः ॥१०॥

उक्तं च न्यायदर्शने—"प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वाद-प्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥" [ न्याः सूः ५।१।७ ] इति।

साध्यं प्राप्य हेतोः प्राप्त्या अविशिष्टत्वात् प्राप्तिसमा तथा अप्राप्य साध्यं हेतोः अप्राप्त्या असाधकत्वाच्च अप्राप्तिसमा इत्यर्थः।

साधनपरम्पराविषयकः प्रश्नः प्रसङ्गसमा। यथा—आत्मा क्रियावान् क्रियाहेतुगुणवत्वादित्युक्ते कश्चिदाह क्रियाहेतुगुणवत्वं क्रियावत्वसाधकं क्रिया-हेतुगुणवत्वे किं साधकं न हि साधकं विना तस्य सिद्धिर्भवति, तत्रापि किञ्चित्साधकप्रदर्शने तत्रापि किं साधकमिति प्रश्नपरम्परा भवति। यथा वा शब्दोऽनित्यः कृतकत्वादित्युक्ते शब्दे कृतकत्वे किं साधनं तत्रापि किं साधनमित्यनवस्था। तथा घटे कृतकत्वे किं साधनं तत्रापि किं साधनमित्यनवस्था च। उक्तं न्यायसूत्रे "दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥" [ न्याः सूः ५।१।६ ] दृष्टान्तस्य कारणं प्रमाणं तस्यानपदेशादनभिधानात् प्रसङ्गसमा। प्रतिदृष्टान्ते प्रत्यवस्थानात् प्रतिदृष्टान्तसमा इत्यर्थः ॥११॥

दृष्टान्तान्तरेण साध्याभावसाधनं प्रतिदृष्टान्तसमा। यथा आत्मा क्रियावान् क्रियाहेतुगुणवत्वादित्यत्रैव लोष्टदृष्टान्तेन पूर्वोक्तहेतुना यदि आत्मनि

क्रियावत्वं साध्यते तदा क्रियाहेतुगुणयुक्त आकाशः निष्क्रियः निर्णीत तद्दृष्टान्तेन तेनैव हेतुना आत्मनि निष्क्रियत्वं कथं न साध्यते। न हि लोष्टदृष्टान्तेन क्रियावत्वं साधनीयम् आकाशदृष्टान्तेन क्रियाशून्यत्वं न साधनीयमित्यत्र किञ्चिन्नियामकमस्ति। यद् वा शब्दोऽनित्यः प्रयत्नेन विभाव्यमानत्वात् घटवदित्युक्ते अपर आह शब्दो नित्यः प्रयत्नेन विभाव्यमानत्वात आकाशवत्। आकाशोऽपि कूपखननप्रयत्नेनविभाव्यते। इयमेव प्रतिदृष्टान्तसमा जातिः ॥१२॥

अनुत्पत्त्या उत्पत्त्यभावरूपया दोषोद्भावनमनुत्पत्तिसमा। यथा घटो न नित्य. जन्यैकत्वादित्युक्ते अपर आह यदि जन्यैकत्वमनित्यत्वे प्रमाणं तदा घटे एकत्वोत्पत्तेः पूर्वं तदभावान्नित्यत्वं, नित्यश्चेत्तर्हि अनुत्पन्न एव। यद्वा शब्दोऽनित्यः कृतकत्वादित्युक्ते शब्दस्य उत्पत्तेः प्राक् तत्र कृतकत्वं नास्ति असति धर्मिणि धर्माभावात्। तथाच कृतकत्वाभावात् तत्साध्यमनित्यत्वं शब्दे नास्ति। ततश्च शब्दस्य नित्यत्वमर्थादायातम्। इयमेव अनुत्पत्तिसमा जातिः। प्रदर्शितं च न्यायदर्शने—"प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम.।" [न्याः सूः ५।१।१२] ॥१३॥

उभयसाधारणधर्मप्रदर्शनपूर्वकसाध्यसंशयोद्भावनं संशयसमा। यथा:—शब्दोऽनित्यः कार्यत्वादित्युक्ते कश्चिदाह शब्दस्यानित्यघटसाधर्म्यं कार्यत्वं यथास्ति तथा नित्यशब्दत्वसाधर्म्यं श्रावणप्रत्यक्षविषयत्वं वर्त्तते इति उभयसाधर्म्यदर्शनात् संशयः, न ह्येकसाधर्म्यदर्शनादेकस्य ज्ञानं नापरसाधर्म्यदर्शनादपरस्य ज्ञानमित्यत्र किञ्चिन्नियामकमस्ति। इयमेव संशयसमा जातिः। तथाच न्यायसूत्रम् "सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः।" [न्याः सूः ५।१।१४] समानधर्मदर्शनादियत्किञ्चित्संशय कारणबलात् संशयेन प्रत्यवस्थानं संशयसम इति वृत्तिकारः ॥१४॥

बाधयुक्तहेतोः साध्याभावसाधकहेत्वन्तरोद्भावनं प्रकरणसमा। यथा शब्दोऽनित्यः कृतकत्वाद घटवदित्युक्ते अपर आह शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् इत्यत्र बाधयुक्तकृतकत्वहेतोः तद्विपरीतनित्यत्वसाधकश्रावणत्व-

रूपहेत्वन्तरोद्भावनात् प्रकरणसमेयं जातिः। सत्पक्षोदाहरणमेव प्रकरणसमायाः उदाहरणम्। संशयसमाया द्वयोरनुमानयोः साम्यं प्रकरणसमायां तु न तथा। प्रकरणसमाया तु विपरीतानुमानस्य पूर्वोक्तानुमानबाधकत्वेनोपन्यासः। न्यायदर्शनेऽपि प्रदर्शितम् "उभयसाधर्म्यात प्रक्रियासिद्धेः प्रकरणसम·।" [न्याः सूः ५।१।१६] उभयेन नित्येन चानित्येन च साधर्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया इति तद्भाष्यम् ॥१५॥

कालत्रयेऽपि हेतुत्वासम्भवेन अहेतुत्वकथनम् अहेतुसमा। यथा :— शब्दोऽनित्यः कार्यत्वादित्युक्तेऽपर आह—कार्यत्वहेतुः किम अनित्यत्वसाध्यात पूर्वकालिक उतोत्तरकालिकः किंवा समकालिकः। यदि पूर्वकालिकस्तर्हि तस्मिन्काले साध्यस्याभावात् कथं साध्यस्य साधकः, यदि उत्तरकालवृत्तिस्तहि पूर्वं साधनस्याभावात् कथं साध्यसिद्धि समकालिकश्चेत् तर्हि समकालीनयोः सव्येतरगोविषाणयोरिव हेतुहेतुमद्भावाभावान्न तेन हेतुना साध्यसिद्धि। हेतुसमा इति पाठे तु कालत्रयेऽपि हेतुत्वस्यासम्भवकथनं हेतुसमा इति। तत्र हेतुरहेतुना सम इति इयमेवाहेतुसमा जातिरिति। उक्तं न्यायसूत्रे "त्रैकाल्यासिद्धेर्हेतोरहेतुसमः।" [न्याः सूः ५।१।१८] ॥१६॥

अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनमर्थापत्तिसमा। यथा :—शब्दः अनित्यः कार्यत्वात् घटवदित्युक्त शब्दस्य अनित्यसाधर्म्याद यदि अनित्यत्वं तर्हि अर्थापत्त्या सिद्धं नित्यसाधर्म्यान्नित्यत्वमपि। न ह्येकेन एकमेव सिध्यतीत्यत्र नियामकमस्ति। इयमेवार्थापत्तिसमा जातिरीति। यथा न्यायदर्शने उक्तं "अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः" [ न्याः सूः ५।१।२१ ] अत्रार्थापत्तिशब्देनार्थापत्त्याभासो गृह्यते ॥१७॥

सर्वाविशेषप्रसङ्गोद्भावनमविशेषसमा। यथा :—शब्दोऽनित्यः कृतकत्वादित्यत्रैव यदि अनित्यघटादिसाधर्म्येण कृतकत्वादिना शब्दस्यानित्यत्वं तर्हि प्रमेयत्वादिरूपेण घटसाधर्म्येण सर्वस्यानित्यत्वं स्यात्। न हि त्वदुक्तसाधर्म्येणानित्यत्वं सिध्यति न मदुक्तेनेत्यत्र किञ्चिन्नियामकमस्ति। इयमेवा-

विशेषसमा जातिरिति। यथा न्यायदर्शने उक्तं "एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः।" [न्याः सूः ५।१।२३] इति ॥१८॥

उभयपक्षसाधर्म्येण साधनोपपत्तिकथनमुपपत्तिसमा। यथा '—शब्दोऽनित्यः कृतकत्वादित्यत्र यदि अनित्यत्वसाधनं कृतकत्वमुपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधनमपि किञ्चिदुपपद्यत इति शब्दस्य नित्यत्वं किं न स्यात्। इयमेवोपपत्तिसमा जातिरिति। तथाच न्यायसूत्रम् 'उभयकारणोपपत्तेरुपपत्तिसमः।' [न्याः सूः ५।१।२५] इति ॥१६॥

( क्रमशः )

# भारतस्य संविधानं पद्यमयम्

[ निबन्धक :—श्रीएम्. एम्. दाभे ]

## समर्पणम्

आसीदलङ्कृतं यावत् तेन राष्ट्रपतेः पदम्।
प्रतिज्ञापूर्वकं तावद् येन संरक्षणं कृतम् ॥
विधीना संविधानस्य राधाकृष्णं प्रणम्य तम्।
वैदुष्येण विभावन्तं मूर्तिमन्तं मनीषया ॥
राष्ट्रस्य संविधानस्य राजन्तं रक्षणेन च।
तस्मै समर्पयाम्येतां कृतिं मे सर्वपक्षिनः ॥

## ॥ मंगलाचरणम् ॥

भारतस्य जनस्यान्तर्हृदि स्वातंत्र्यतेजसा।
भासमानौ हृदि कृत्य गणेशं च गणाम्बिकाम् ॥
गद्यते भारतीयस्य संविधानस्य संस्कृते।
त्रयश्च प्रथमा भागाः पद्यरूपेण वै मया ॥

गीर्वाण्यां संविधानस्य यैश्च भाषान्तरं कृतम् ।
भाषांतरसमित्याश्च सदस्यैस्तान्नमाम्यहम् ॥
येषा भाषाप्रभुत्वेन आयासेन च साधितम् ।
भाषातरस्वरूप च फलमत्रोपयुज्यते ॥        ( शार्दूलविक्रीडितम् )
वन्दे त्वां गणनायिकां जनगणस्यान्तःस्थितां रिद्धिदाम्
राष्ट्रैक्यस्य विधायिकामभयदां स्वातंत्र्यतेजस्विनीम् ।
व्यक्तेर्गौरवभ्रातृभावसमतासंपादयित्रीं शिवा
न्यायाचारप्रवर्तिकां गणशिवां वन्दे महाभारतीम ॥

## ॥ भारतस्य संविधानम् ॥

**स्तावना—**

अस्यां संसदि संविधानरचना कर्तुं समेता वयं
संपन्नं परिपूर्णतः प्रभुतया लोकस्य तंत्रात्मकम् ।
निर्मातुं किल भारतं गणकृतं राज्यं तदीयान् जनान्-
न्यायं चैव हि राजनीतिविषयं सामाजिकं चार्थिकम् ॥
श्रद्धायाश्च स्वतंत्रता पुनरनुष्ठानस्य पूजाविधे-
र्धर्मस्यैव च पालने पुनरभिव्यक्तेर्विचारस्य वै ।
सर्वान् प्रापयितुं च भारतजनान् सर्वे वयं भारताः
स्थानस्यावसरस्य प्राप्तिसमतामेतेषु सर्वेषु च ॥
राष्ट्रैक्यं किल व्यक्तिगौरवमथो या व समाश्वासयेत्
भ्रातॄणामिव भावनां किल दृढं तस्याश्च संवृद्धये ।
सप्तम्यां मृगशीर्षमासि च शुभे पक्षे च शुक्ले तथा
षष्ठेऽब्देऽथ च एकविंशशतके संवत्सरे वैक्रमे ॥
षड्विंशेऽथ नवेम्बरस्य दिवसे ख्रिस्तस्य विंशे शते
वर्षे चाथ शुभे सुमंगलकरे चैकोनपंचाशके ।
अस्माकं किल संविधानमिदमासंकल्प्य वै सुदृढम्
अस्मभ्यं च समर्प्य चाधिनियमं कृत्वा च स्वीकुर्महे ॥

**फलश्रुतिः—**

एतां प्रस्तावनां चास्य संविधानस्य यः पठेत् ।
लोकतंत्रात्मके राज्ये भवेत्तस्य दृढा मतिः ॥

## —भाग. प्रथमः—

॥ संघः तस्य राज्यक्षेत्रं च ॥

१। **संघस्य नाम राज्यक्षेत्रं च—** ( शार्दूलविक्रीडितम् )

(१) राज्यानामथ इण्डिया इति श्रुतं संघो भवेद्भारतम्
(२) यान्येवोल्लिखितानि संति किल वै आद्यानुसूच्यामिह ।
राज्यान्येव च तानि भारतगणे तद्राज्यक्षेत्राणि च
(३) यान्येवाथ समर्जितान्यथ परं संघः समावेशयेत् ॥

२। **नूतनराज्यानां प्रवेशः स्थापना वा—** ( अनुष्टुप् )

नवानि चैव राज्यानि संघे स्थापयितुं तथा ।
प्रवेशयितुं चान्यानि क्षमेत विधिना स्वयम् ।
तस्या मतोचितैः संसत् प्रतिबंधनिबंधनैः ॥

३। **नूतनानां राज्यानां निर्माणं—विद्यमानानां राज्यानां च क्षेत्राणां सीम्नां नाम्नां वा परिवर्तनम्—**

(क) राज्यक्षेत्रं पृथक्कृत्य राज्यात् कस्माच्चनाखिलात् ।
द्वे वाधिकानि राज्यानि राज्यभागांश्च कानपि ॥
संयोज्य राज्यं केनापि राज्यक्षेत्रेण वा पुनः ।
निर्मातुं नूतनं राज्यं संसच्च विधिना क्षमा ॥
(ख) क्षेत्रं कस्यापि राज्यस्य संसद् वर्धयितुं तथा ।
(ग) एवं ह्रासयितुं क्षेत्रं
(घ) परिवर्तयितुं तथा
नाम कस्यापि राज्यस्य

(ङ) सीमाश्च विधिना क्षमा ॥

परंतु एतद्धेत्वर्थं किमप्येव विधेयकम् ।

पुनः स्थाप्येत तावन्न संसदः सदने क्वचित् ॥

यावद्राष्ट्रपतेर्न स्यात् तस्य पुरः प्रशंसनम् ।

प्रस्थापना तदन्तस्था क्षेत्रं सीमाथ नाम वा ॥

यावत् कस्यापि राज्यस्य विषयीकुरुते तदा ।

निर्दिष्टं तस्य राज्यस्य विधानमंडलाय चेत् ॥

राष्ट्रस्य पतिना स्यान्नोऽभिमतस्याभिव्यक्तये ।

कालावधिस्तदर्थं च निर्दिष्टोऽनुमतः परम् ।

राष्ट्रस्य पतिना यः स्याद् यावत् परिगतो न सः ॥

व्याख्या १ अनुच्छेदेऽस्मिन् "राज्य" शब्दे चान्तर्गतं भवेत् ।

संघस्य राज्यक्षेत्रं च किंतु पारंतुके नहि ॥

व्याख्या २ 'क' भागेन प्रदत्तोऽस्ति योऽधिकारश्च संसदे ।

सोऽन्तर्भावयते चैव ( राज्यस्य कस्यचित्तथा ॥

संघस्य राज्यक्षेत्रस्य तेषां वा केन कस्यचित् ।

भागं भागेन संयोज्य ) राज्यस्य नूतनस्य वा ।

संघस्य राज्यक्षेत्रस्य निर्माणे नूतनस्य तु ॥

**४। प्रथम चतुर्थानुसूच्योरनुपूरकप्रासंगिकानां विषयाणां च संशोधनार्थमुपबंधयितुं द्वितीयतृतीयानुच्छेदयोरधीनं प्रणीता विधयः—**

(१) द्वितीये वा तृतीये वाऽनुच्छेदे यो विधिः किल ।

निर्दिष्टः सोऽनुसूच्योश्च तुरीयादिमयोस्तथा ॥

संशोधनार्थं मन्येत संसदावश्यकांश्च यान् ।

तादृशानुपबन्धांश्च विधिरन्तर्निवेशयेत् ॥

ये प्रभावक्षमान् कर्तुम् उपबंधांश्च तद्विधेः ।

आवश्यकास्तथा चानुपूरका वानुषंगिकाः ॥

प्रासंगिकाश्च ये स्युस्तान् ( उपबंधैश्च संगतान् ।
तत्प्रभावितराज्यस्य राज्यानां च तथैव च ॥
संसदि वाथ राज्याना विधानमंडलेषु वा ।
प्रतिनिधित्वसंबध्यैः ) विधिः सोऽन्तर्निवेशयेत् ॥

(२) पूर्वोक्तसदृशः कोऽपि प्रणीतः संसदा विधिः ।
राजशास्त्रामयनुच्छेदप्रयोजनकृते कदा ॥
1 2 3
संशोधनं न मन्येत संविधानस्य चास्य वै ॥

**फलश्रुतिः**

इत्येनं प्रथमाध्यायं संविधानस्य यः पठेत् ।
रक्षणे भारतस्यास्य भवेत्तस्य दृढा मतिः ॥

## —भागः द्वितीयः—

[ नागरिकत्वम् ]

**५ एतत्संविधानस्य प्रारंभे नागरिकत्वम् ।**

प्रारंभे संविधानस्य स प्रत्येकं च वै जनः ।
राज्यक्षेत्रे भारतस्य योऽधिवासी तु विद्यते ॥
(क) जन्माभूत्तत्र वै यस्य (ख) यस्य मातुः पितुश्च वा ।
(ग) अन्यूनं पंचवर्षेभ्यो निवसन् तत्र वर्तते ॥
अव्यवहितपूर्वं वा प्रारंभात् तादृशात्तथा ।
संघस्य भारतस्यास्य स तु नागरिको भवेत् ॥

**६ पाकिस्तानतः प्रव्रज्य भारतमागतानामेकेषां जनानां नागरिकत्वाधिकाराः ।**

अनुच्छेदे पंचमे चा विगणय्य यदस्ति तत् ।
प्रवर्तनं भवेच्चास्य अनुच्छेदस्य सर्वथा
पाकिस्तानाच्च प्रव्रज्य आगतो भारतं प्रति ।
प्रारंभे संविधानस्य अस्य वै चास्ति यो जनः ॥

(क) यद्यसौ तादृशौ जातो भारते यादृशं किल ।
अस्ति शराग्निरत्नार्कवर्षस्य भारतस्य तु ॥
प्रशासनविधौ मूले यदस्ति परिभाषितम् ।
पित्रोरेकतरस्तस्य पितुर्माताथवा पिता ।
मातुर्माता पिता वा चेत् जातस्तादृशभारते ॥

ख (१) दिक्पालवेदरत्नचन्द्रमा-ख्रिस्ताब्दस्य तथैव च ।
एकोनविंशाद्दिवसात् मासस्य सप्तमस्य च ॥
भवेत्प्रव्रजितः पूर्वं पाकिस्तानाच्च यो जनः ।
तर्हि तस्यामवस्थायां भारते निवसन् भवेत् ।
प्रव्रजनदिनमारभ्य सामान्यतः स वै जनः ॥

(२) पूर्वोक्तदिवसे वाथ तत्पश्चाच्चापि यो जनः ।
एवं प्रव्रजितो वा स्यात् तर्हि तेन यथाविधि ।
भारताधिनिवेशस्य शासनेन नियोजितः ।
यः पदाधिकारी स्यात् तस्मै तच्छासनेन च ।
विहिता या तया रीत्या प्रपत्रे च तथाविधे ॥
आवेदनानंतरं च तेन चेदधिकारिणा ।
प्राक् संविधानप्रारंभात् पंजीबद्धो भवेत्तदा ॥
सोऽपि भारतसंघस्य जनो नागरिको भवेत् ॥
पंजीबद्धो भवेन्नैव किन्त्वेवं कोऽपि वा जनः ।
अव्यवहितपूर्वं यो तस्य चावेदनाद् यदि ।
न्यूनान्न्यूनं न षण्मासान् भारते निवसन् भवेत् ॥

**७। पाकिस्तानं प्रव्रजितानामेकेषां जनानां नागरिकत्वाधिकाराः—**

अनुच्छेदे पंचमे च षष्ठे च यद् गतं भवेत् ।
तत्सर्वं खल्वनादृत्यानुच्छेदोऽयं प्रवर्तते ॥

राज्यक्षेत्राद् भारतस्य पाकिस्तानं च यो जनः ।
मरुद्वेदनिधिक्षोणी-खिस्तसंवत्सरस्य च ॥
दिनान्मार्चस्य प्रथमात् परं प्रव्रजितो भवेत् ।
भारतस्य न मन्येत स तु नागरिको जनः ॥
किन्तु न विषयीकुर्यात् किमप्येतच्च तं जनम् ।
एवं प्रव्रजितो भूत्वा पाकिस्तानं च यो जनः ।
भारतं प्रतिनिवृत्तः प्राधिकारेण यो विधेः ।
तदधीनं च दत्ताया अनुज्ञाधीनमेव वा ।
स्थायिनिवर्तनार्थं च पुनर्वासार्थमेव वा ॥
प्रव्रजितस्तु मन्येत परं त्वेतादृशो जनः ।
षष्ठानुच्छेदखंडस्य 'ख' स्य हेतोः कृते किल ।
दिक्पालवेदरत्नाब्दमाखि्रस्ताब्दस्य तथैव च ।
सप्तमस्य च मासस्य ऊनविंशाद्दिनात्परम् ॥

८। **भारताद्बहिर्निवसतां भारतीयसमुद्भववतामेकेषां जनानां नागरिकत्वाधिकाराः** –

अनुच्छेदे पंचमे चाविगणय्य यदस्ति तत् ।
प्रवर्तनं भवेच्चास्याप्यनुच्छेदस्य सर्वथा ॥
यथा शराग्निरत्नार्कवर्षस्य भारतस्य च ।
प्रशासनविधौ मूले यदस्ति परिभाषितम् ॥
भारतं तादृशे चैव भारते योऽजनिष्ट वा ।
पित्रोरेकतरस्तस्य पितुर्माताथवा पिता ॥
मातुः पितायवा माता जाता तादृशभारते ।
किन्तु सामान्यतश्चासौ निवसन् यदि वर्तते ॥
कस्मिंश्चिदपि वा देशे तादृशाद् भारताद्बहिः ।
सोऽपि भारतसंघस्य जनो नागरिको भवेत् ॥

निम्नप्रदिष्टया रीत्या पंजीबद्धोऽस्ति चेत्तदा ।
'भारतस्य नागरिक' इति पूर्वं परं च वा ।
संविधानस्य प्रारंभाद् यः कोऽपि तादृशो जनः ॥
भारताधिनिवेशस्य शासनेन तथैव च ।
शासनेन भारतस्य प्रपत्रे विहितेऽथ च ॥
तेन चाध्युषिते देशे रीत्या विहितया तथा ।
तदानीं विद्यमानाय संघस्य भारतस्य तु ॥
नागरिकत्वमाप्तुं च वाणिज्यदूतकाय वा ।
तत्प्रतिनिधये वाथ तद्राज्यनायकाय वा ॥
आवेदने कृते तेन तादृशेनाधिकारिणा ।
तन्नागरिकरूपेण पंजोबद्धो भवेदसौ ॥

**स्वेच्छोपार्जितवैदेशिकनागरिकत्वानां जनानां न नागरिकत्वं—**

वैदेशिकस्य राज्यस्य नागरिकत्वमर्जितम् ।
जनेन यदि केनापि स्वेच्छया तर्ह्यसौ जनः ॥
नागरिको भवेन्नैव भारतस्य तथैव च ।
आश्रयेण पंचमस्य अनुच्छेदस्य वा पुनः ॥
अनुच्छेदस्य षष्ठस्याश्रयेण सप्तमस्य वा ।
नागरिको भारतस्य न मन्येत ह्यसौ जनः ॥

१० । **नागरिकत्वाधिकाराणामनुवृत्तिः—**

नागरिकोऽस्य देशस्य यः कोऽपि पूर्वगामिनाम् ।
भागस्यास्योपबंधानां कस्याप्यन्यतमस्य वै ।
अधीनमस्ति वा एवमस्तीति मन्यतेऽथवा ॥
नागरिकत्वेनाधीनमनुवर्तेत स जनः ।
विधेस्तस्योपबंधाना यः कोऽपि संसदा कृतः ॥

**११। संसदो विधिना नागरिकत्वाधिकारविनियमनम्—**

भागस्यास्योपबंधाना किमपि पूर्वगामिनाम् ।
संघीयनागरिकत्वस्यार्जन च समापनम् ॥
उदिश्य विषयान् सर्वान् तत्संबद्धान् तु संसदः ।
निर्माणे चोपबंधाना शक्तिं नैवापकर्षयेत् ॥

**फलश्रुतिः—**

भागं द्वितीयमेतत्तु संविधानस्य यः पठेत् ।
नागरिकेषु वै तस्य भ्रातृभावः स्थिरो भवेत् ॥

( क्रमशः )

# वैदिकस्वरालोचनम्

[ निबन्धकः—**श्रीअमरकुमारचट्टोपाध्यायः** ]

( पूर्व्वानुवृत्तम् )

एवं यदि तर्हि तेन 'थाथघञ्—' इति सूत्रेण उत्तरपदान्तोदात्तत्वं तत्र कथं न जातम्। ( पूर्वः पक्षः )

तत् 'थाथघञ्—' इति सूत्रं बाधितुम् इदं 'तृतीया कर्मणि' इति सूत्रं विरचितम्। (उत्तरः पक्षः)

(११) पत्यावैश्वर्ये—ऐश्वर्यवाचके पतिशब्दे परतः पूर्वपदस्य प्रकृतिस्वरत्वं स्यात् तत्पुरुषे। यथा—**गृहपतिः** (2 1 3 4)। गृहशब्दः 'गेहे कः इति सूत्रेण क-प्रत्ययान्तः। अत्र 'आद्युदात्तश्च' इत्यनेन प्रत्ययस्य उदात्तत्वम्। अत्र पतिशब्दस्य 'भर्ता' इति न अर्थः अपि तु प्रभुः इत्यर्थः। ईश्वरस्य भाव ऐश्वर्यम्। 'समासस्य' इत्यस्य अपवादभूतम् इदं सूत्रम्।

(१२) गतिकारकोपपदात् कृत्—गतिसंज्ञकात् कारकात् उपपद-संज्ञकात्

च शब्दात् परं वर्तमानस्य कृत्प्रत्ययान्तस्य शब्दस्य प्रकृतिस्वरत्वं स्यात्
2 1 3 4
तत्पुरुषे। यथा—प्रकारकः। कृधातोः ण्वुल्प्रत्ययेन कारकशब्दो निष्पन्नः। ण्वुल्प्रत्ययस्य लकारः कार्यकाले नश्यति। अतः 'लिति' इति सूत्रेण अधुना आकारमापन्नः धातोः ऋकारः प्रत्ययात् पूर्वं वर्तमानः उदात्तो जातः। (कृ+ण्वुल्—कृ+अक—क् आर्+अक—'अचोञ्णिति'+ उरण्रपरः') ।
समुदायस्य स एव स्वरः। अत्र 'प्र' इत्यस्य 'गतिश्च' इत्यनेन गतिसंज्ञा।
2 1 3 4
नृवाहसा। वह्धातोरुत्तरम् असुन्प्रत्ययेन 'वाहस्' इति शब्दः सम्भूतः। स शब्दः 'ञ्नित्यादि—' इत्यनेन आद्युदात्तः। नॄन् वहति इति विग्रहात् नृशब्दस्य 'कर्तुरीप्सिततमं कर्म' इत्यनेन कारकत्वं कर्मत्वं च जातम्। पूर्वपदस्य कारकत्वात् उत्तरपदस्य च कृत्प्रत्ययान्तत्वात् उत्तरपदप्रकृतिस्वरत्वम्। 'नृवाहस्' इति शब्दात् 'सुपां सुलुक्—' इत्यनेन विभक्तेः डादेशे नृवाहसा-शब्दो निष्पन्नः। विभक्तेः 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वे समा-
2 2 1 3
सस्वर एव स्थितः। ईषत्कारः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनेन खल्प्रत्ययनिष्पन्नः कारशब्दः। 'लिति' इत्यनेन प्रत्ययात् पूर्वस्य अधुना आकारमापन्नस्य धातोः ऋकारस्य उदात्तत्वम्। 'ईषद्दुःसुषु—' (३।३।१२६) इति सूत्रस्य 'धातोः' (३।१।९१) इत्यस्य सूत्रस्य अधिकारे वर्तमानत्वात् 'तत्रोपपदं सप्तमीस्थम्' (३।१।९२) इति सूत्रेण 'ईषत्' इति शब्दस्य उपपदसंज्ञकत्वात् 'कार' इति शब्दस्य कृत्प्रत्ययान्तत्वात् च समासस्य उत्तरपदप्रकृतिस्वरत्वं जातम्।

(१३) गतिरनन्तरः—कर्मवाचकक्तप्रत्ययान्ते शब्दे परे सति अव्यवहितः पूर्ववर्ती गतिसञ्ज्ञकः शब्दः प्रकृत्या भवति। पूर्वसूत्रं बाधित्वा इदं
1 3 4
सूत्रं प्रवर्तते। यथा—प्रहृतः। हृधातोः कर्मवाच्ये क्तप्रत्ययेन हृतशब्दः समुत्पन्नः। तस्मिन् परतः 'प्र' इति गतिसंज्ञकः शब्दः 'उपसर्गाश्चाभि-वर्जम्' इत्यनेन उदात्तः।

(१४) तादौ च कृत्यतौ—तु(न्)प्रत्ययभिन्नः तकारः आदौ अस्ति नकारश्च कार्यकाले नश्यति एतादृशः यः प्रत्ययः, तस्मिन् परतः अव्यवहितः गति-संज्ञकः शब्दः प्रकृतिस्वरवान भवति। 'गतिकारको—' इत्यस्य अपवाद-
1 3 4
भूतम् इदं सूत्रम्। प्रभूतौ। प्रशब्दः 'गतिश्च' इत्यनेन गतिसंज्ञकः। भूतिशब्दश्च भूधातोः क्तिन्प्रत्ययेन निष्पन्नः। क्तिन्प्रत्ययस्य कार्यकाले तकारः आदौ तिष्ठति नकारश्च याति। अयं क्तिन्प्रत्ययः कृतसंज्ञकः। अतः 'प्र' इत्यस्य 'उपसर्गाश्चा—' इत्यनेन य उदात्तो विहितः स एव समासस्यापि स्वरः। प्रजल्पाकः इत्यत्र न पूर्वपदप्रकृतिस्वरत्वम्। जल्प्धातोः षाकन्प्रत्ययेन जल्पाकशब्दः सम्पन्नः। अस्य प्रत्ययस्य कृत्संज्ञा, नकारश्च कार्यकाले अप-गच्छति तथापि तकारादित्वाभावात् पूर्वपदप्रकृतिस्वराभावः। प्रकर्ता इत्यत्रापि न पूर्वपदप्रकृतिस्वरत्वम्। कृधातोः तृच्प्रत्ययेन कर्तृशब्दः व्युत्पन्नः। अस्य प्रत्ययस्य कृत्संज्ञकत्वेऽपि तकारादित्वेऽपि च नकारस्य असद्भावात् तस्य नाशो न सम्भवति। अतः पूर्वपदप्रकृतिस्वराभावः। आगन्तुः इत्यत्रापि न पूर्वपदप्रकृतिस्वरत्वम्। गम्धातोः तुन्प्रत्ययेन गन्तुशब्दः समुत्पन्नः। अस्य प्रत्ययस्य कृत्संज्ञकत्वं तकारादित्व नकारस्य नाशश्च वर्तन्ते तथापि 'अतौ' इति निषेधात् पूर्वपदप्रकृतिस्वरत्वम् अत्र न जातम्।

(१५) थाथघञ्क्ताजबित्रकाणाम्—थ, अथ, घञ्, क्त, अच्, अप्, इत्र, क इत्येषा प्रत्ययानां यः कोऽपि यदि कस्माच्चन शब्दात् परं वर्तेत स च प्रत्ययान्तः शब्दः गतिसंज्ञकात्, कारकात्, उपपदसंज्ञकात् च शब्दात् परं तिष्ठेत् तर्हि तस्य थप्रभृतिप्रत्ययानाम् अन्यतमेन निष्पन्नस्य शब्दस्य अन्त्यः स्वर उदात्तो भवति। 'गतिकारको—' इत्यस्य अपवादभूतम् इदं सूत्रम्।
2 2 1 3 4
प्रभृथस्यायोः। 'अवे भृञः' इत्यनेन भृधातोः कथन्प्रत्ययेन भृथशब्दो निष्पन्नः। ततः 'प्र' इत्यनेन गतिसंज्ञकेन शब्देन तस्य समासे जाते 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरे प्राप्ते 'ञ्नित्यादिर्नित्यम्' इत्यनेन ऋकारस्य उदात्तत्वं स्यात्। तद् बाधित्वा अनेन सूत्रेण अन्तोदात्तत्वं विहितम्। 'अनुदात्तं

2 2 2 1
पदमेक—' इत्यनया शिष्टम् अनुदात्तम्। आवसथः। 'उपसर्गे वसेः' इत्यनेन वस्धातोः अथप्रत्यये जाते वसथशब्दो निष्पन्नः। अस्मिन् शब्दे 'आद्युदात्तश्च' इति सूत्रेण प्रत्ययस्य आदिस्वरस्य उदात्तत्वम्। 'आ' इत्यनेन वसथशब्दस्य 'गतिकारको—' इत्यनेन पूर्ववत् उत्तरपदप्रकृतिस्वरे
2 2 1
प्राप्ते त वारयित्वा अन्तोदात्तम्। प्रभेद। भिद्धातोः घञ्प्रत्ययेन भेदशब्दः समुत्पन्नः। ततः 'प्र' इत्यनेन समासे 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरत्वं प्राप्तम्। उत्तरपदस्य 'ञ्नित्यादि—' इत्यनेन आद्युदात्तत्वम्। तद् बाधित्वा अनेन सूत्रेण अन्तोदात्तत्वम् उत्तरपदस्य।
2 2 2 1
पुरुष्टुतः। पुरुषु स्तुत इति सप्तमीतत्पुरुषे 'तत्पुरुषे तुल्यार्थ—' इत्यनेन पुरुभिः स्तुत इति तृतीयातत्पुरुषे च 'तृतीया कर्मणि' इत्यनेन पूर्वपदप्रकृतिस्वरत्वे प्राप्ते तद् बाधित्वा अनेन 'थाथघञ्—' इति सूत्रेण अन्तो-
2 2 1
दात्तत्वं विहितम्। प्रक्षयः। क्षिधातोः अच्प्रत्ययेन क्षयशब्दो व्युत्पन्नः। 'प्र' इत्यनेन तस्य समासे जाते 'क्षयो निवासे' इत्यनेन क्षयशब्दस्य आद्युदात्तत्वात् 'गतिकार—' इत्यनेन तस्मिन् एव स्वरे प्राप्ते अनेन
2 2 1
सूत्रेण तद् वारयित्वा अन्तोदात्तत्वम् उत्तरपदस्य विहितम्। प्रलवः। लूधातोः अप्प्रत्ययेन लवशब्दः सम्भूतः। अस्य प्रत्ययस्य पकारस्य कार्यकाले नाशात् 'अनुदात्तौ सुप्—' इत्यनेन प्रत्ययः अनुदात्तः। अतः 'धातोः' इत्यनेन धातुस्वर. ऊकारः अधुना 'अव्' इति आदेशमापन्न उदात्तः। एवं लवशब्दः आद्युदात्तो जात.। 'प्र' इत्यनेन अस्य शब्दस्य समासे जाते 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरे अकारस्य उदात्ते प्राप्ते तं निवार्य
2 2 2 1
अनेन सूत्रेण उत्तरपदस्य अन्तोदात्तत्वं विधीयते। प्रलविलम्। लूधातोः इलप्रत्ययेन लविलशब्दो निष्पन्नः। 'आद्युदात्तश्च' इति सूत्रेण

अस्मिन् शब्दे प्रत्ययस्य उदात्तत्वम्। पूर्ववत् 'गतिकारको—' इति सूत्रं
2 2 1
बाधित्वा अनेन सूत्रेण उत्तरपदस्य अन्तोदात्तत्वम्। **गोवृषः**। 'वृषादीना च' इत्यनेन उत्तरपदम् आद्युदात्तम्। गां वर्षति इति विग्रहात् गोशब्दस्य कारकत्वात् वृषशब्दस्य कृत्प्रत्ययान्तत्वात् च 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरे प्राप्ते अनेन 'थाथघञ्—' सूत्रेण स निवृत्तः। वृषशब्दः वृष्धातोः कप्रत्ययेन सम्पन्नः।

(१६) मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः—मन्प्रत्ययान्तः क्तिम् प्रत्ययान्तः व्याख्यानप्रभृतयश्च शब्दाः कारकात् परं विद्यमाना यदि उत्तरपदभूता भवेयुः तर्हि ते अन्तोदात्ता भवन्ति। 'गतिकारको—' इति
2 2 2 1
सूत्रस्य अपवादभूतम् सूत्रम् इदम्। **रथवर्त्म**। 'वृत्' इति धातोः मनिन् प्रत्ययेन वर्त्मशब्दो निष्पन्नः। तस्य प्रत्ययस्य नकारस्य कार्यकाले अपगमनात् 'ञ्नित्यादि—' इत्यनेन वर्त्मशब्दः आद्युदात्तः। ततः 'गतिकापको—' इत्यनेन उत्तरपदप्रकृतिस्वरे वकारगतस्य अकारस्य उदात्तत्वे प्राप्ते तद् वारयित्वा अनेन अन्तोदात्तत्वम्। याजकः, पूजकः, परिचारकः, परिवेषकः, परिषेचकः, स्नापकः, अध्यापकः, उत्साहः, उद्वर्तकः, होता, भर्ता, रथगणकः, पत्तिगणकः इति इमे त्रयोदश शब्दा याजकादयः।

(१) अधुना वयं तिङन्तपदानां स्वरनिर्णयविषये दृष्टिं प्रक्षिपामः। तिङ्ङतिङः—यानि पदानि न तिङन्तानि (तिप्तस्झिप्रभृतियुक्तानि) तादृशेभ्यः पदेभ्यः परं वर्तमानानि तिङन्तानि पदानि निहन्यन्ते। तेषां
2 1 2 2
सर्वाः स्वरवर्णा अनुदात्ता भवन्ति इत्यर्थः। यथा—अग्निम्। **ईले**। —'अग्निम्' इति पदं सुबन्तं न तु तिङन्तम्। अतः तस्मात् परं स्तुत्यर्थकात् ईड्धातोः लटि उत्तमपुरुषैकवचने निष्पन्नम् 'ईले' इति तिङन्तं पदं निहन्यते।

(२) निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्—यत्, यदि,

हन्त, कुवित्, नेत्, चेत्, चण्, कच्चित्, यत्र इति एतैर्निपातैः युक्तम् तिङन्तं न अनुदात्तं भवति अतिङन्तात् परं वर्तमानमपि। यथा—'यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि' इत्यत्र 'करिष्यसि' इति तिङन्त पदं 'भद्रम्' इति अतिङन्तात् पदात् परं वर्तमानम् अपि 'यत्' इति निपातेन अत्र

2 2 1 3

युक्तत्वात् निघातो न जातः (=न निहन्यते) [ करिष्यसि ]।

(३) यावद्यथाभ्याम्—यावत्, यथा च इत्यनयोः यदि केनचित् एकेन तिङन्तं पदं युक्तं स्यात् तर्हि अतिङन्तात् पदात् परं वर्तमानमपि तत्

1 3 4

तिङन्तं पदं न निहन्यते। यथा—देवदत्तः पचति यथा ( पचति )।

(४) हि च—'हि' इत्यनेन युक्तं तिङन्तं पदम् अतिङन्तात् परं विद्यमानमपि न निघातं (=सर्वानुदात्तत्वम्) प्राप्नोति। यथा—'इन्द्रेण सं हि

1 3 4

दृक्षसे सञ्जग्मानो अबिभ्युषा' ( दृक्षसे )।

( क्रमशः )

# उत्तरकुरुक्षेत्रम्

[ श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन विरचितम् ]

( पूर्वानुवृत्तम् )

## चतुर्थोऽङ्कः—द्वितीयं दृश्यम्

[ हस्तिनापुरप्रासादे अभिषेकसभा ]

युधिष्ठिरः—भो भोः सदस्याः, अद्याहमभिमन्युनन्दनं श्रीमत्परीक्षितं कुरु-सिंहासनेऽभिषेक्तुमिच्छामि।

सदस्याः—साधु साधु।

पुरोहितः—राजन्, सकलगुणाभिराम उत्तरासुतः स्वमहिम्ना विजयते। अतः समुचितोऽयं शुभसङ्कल्पः।

युधिष्ठिरः—ततश्चक्रवर्त्तिगुणोपेतोऽयं वंशधरोऽधुना राजमुकुटेन परिशोभताम् ।

सदस्याः—वयं समर्थयामहे ।

युधिष्ठिरः—अतो भवन्तः कुलपुरोहिताः शुभकर्म्मणि स्वस्तिवचनमुदीरयन्तु ।

पुरोहितादयः—ॐ स्वस्ति स्वस्ति । अयमारम्भः शुभाय भवतु ।

युधिष्ठिरः—भो महामान्या. सभासद, समागता नृपाश्च, अत्रभवन्तः श्रीमदर्ज्जुनपौत्रं शुभाशिषा संवर्द्धयन्तु ।

सदस्यादयः—वयमभिमन्युनन्दनं संवर्द्धयामः ।

युधिष्ठिरः—तथास्तु । ( अर्ज्जुनं प्रति ) धनञ्जय, अधुना तावद् उत्तर-हृदय-रञ्जनं प्रियपौत्रं संवर्द्धय ।

अर्ज्जुनः—शिरोधार्य्य आर्य्यस्यादेशः । धर्म्मनन्दनस्य कल्याणवचमाहं पौत्रमभिनन्दामि ।

युधिष्ठिरः—( परीक्षितः पुरो गत्वा ) तात, विधातृप्रमादात् कुरुराजलक्ष्मीस्त्वामद्य आश्रयते । तदिहानर्घ्यरत्नखचितं सिंहासनमलंकृत्य पालय प्रजावर्गं वीरधर्म्मगौरवेण । वर्द्धय च पितृपितामहादीनां कीर्त्तिविभवं महिमगुणेन । गृहाण राजमुकुटम् ।

[ शिरसि मुकुटमर्पयति—ध्वनति च शङ्खः ]

परीक्षित्—वन्दे आर्य्यपादम् । प्रणमामि पितामहम् । गुरून् अभिवादये । ( गुरून् प्रणमति )

युधिष्ठिरः—नरपालोऽसि कुरुप्रवीर, धर्म्मव्रतो भव । सत्यशीलः प्रजापालनं कुरु । दीनेषु दयाप्रदर्शनेन, दुष्टानां दमनेन, शिष्टानां च पालनेन सुखी भव । गुणिभ्यो मानं यच्छ, संरक्ष चार्त्तान्, पालय च परम्पराचरितं कुलधर्म्ममम्लानगौरवेण ।

अर्ज्जुनः—( उपगम्य ) कुलमणे, शौर्य्यवीर्य्यशालिनं शीलदाक्षिण्यवन्तं च श्रीमण्डितं त्वामभिनन्दन्तु प्रजाजनाः सुखेन ।

सदस्याः—जयतु जयतु अभिमन्युनन्दनः । विजयतां कुरुप्रवीरः ।

युधिष्ठिरः—साधु साधु । ( परीक्षितं प्रति ), तत् श्रीमन्, सुविशालमिदं

कुरूणां क्षेत्र वीरकीर्त्तिसमुज्ज्वलमधुना तवैवाधिकारे वर्त्तते। एतां राज्यश्रियं तुभ्यं समर्प्य वयमद्य शान्तिमधिगच्छामः। अतः परं धर्म्मस्त्वामभिवर्द्धयतु।

परीक्षित—आर्य्याः, भवतां प्रसादमङ्गलं स्नेहगौरवं प्रतिगृह्णामि। तदत्र व्रतमाधने गुरुजनानां पुण्याशिषो मां परिचालयन्तु।

सदस्याः—जयतु नरपालः! विजयतां पाण्डवेयः।

[ पुराङ्गना नवनरपतिं संवर्द्धयन्ति—ध्वनति च शङ्खध्वनिपुरःसरं मङ्गल-वाद्यम् ]

इति चतुर्थेऽङ्के द्वितीयं दृश्यम्।

---

## पञ्चमोऽङ्कः—प्रथमं दृश्यम्

[ प्रथमं दृश्यम्—वनभूमि—निर्झरकल्लोलो ध्वनति—कूजन्ति विहङ्गमाः, स्वनति च झिल्लीरवः ]

[ प्रविशति मृगयावेशी परीक्षित ]

प्रविश्य परीक्षित्—दूरं पलायितः कुरङ्गः। नासौ नयनपथे वर्त्तते। परं शान्तिमयमेतत् काननम्। अत्र सुरभिवनवाताः प्रवहन्ति। चित्तं विनोदयन्ति च कलसङ्गीतैर्निर्झरकल्लोलाः। तदत्र विहङ्गकूजनमुखरे कुञ्जतले विश्राम्यामि। ( उपविश्य क्षणान्ते ) अहो, पुनरेष निर्गच्छति द्रुतं मृगशिशुः। तदनुसरामि चैनम्। ( उत्थाय धावति )

[ प्रविशति वनलक्ष्मीः ]

प्रविश्य वनलक्ष्मीः—( राजानं प्रति ) राजन्, शान्तिरसास्पदमेतत् तपोवनम्। तस्मान्नहि युज्यतेऽत्र प्राणिहिंसनम्।

निवृत्य परीक्षित—देवि, तपोधनानां विघ्ननाशार्थं गृहीतमेतदस्त्रम्। तन्मृगया राजसु न दूष्यते।

वनलक्ष्मीः—बाढम्। किन्तु न हि युज्यतेऽत्र निःशङ्कविचरणशीलेषु

तपोवनमृगेषु अस्त्राघातः। ते हि शान्तशीला न खलु विघ्नकारिणः। अतो निवृत्यतां व्यसनाद् धीमन्।

परीक्षित्—भगवति, प्रतिगृहीतं भवदीयानुशासनम्। एषोऽहं कार्म्मुकं बाणमुक्तं करोमि। ( बाणं प्रतिसंहृत्य तूणीरे स्थापयति )

वनलक्ष्मीः—( सहर्षम् ) साधो महीपाल, युक्तमेतद् भवत कुलधर्म्मपालनम्। किञ्च, माननीयोऽभ्यागतोऽसि। तत् स्वागतं ते ज्ञापयामि।

परीक्षित्—( कृताञ्जलिः ) नमोऽस्तु वनदेवतायै। देवि, वन्देऽहमत्रभवतीम्। ( वन्दते )

वनलक्ष्मीः—जयतु महाभाग। किञ्च, इह च्छायाशीतलेषु पल्लवघन-पुष्पित-काननेषु क्रियतां सुखविहारः। अत्र च सुरसफलानि सन्ति। आह्रियन्तां च तानि भोजनार्थं प्राकाम्येन। ( प्रस्थानं करोति )

परीक्षित्—अहो, प्रस्थितेयं वनदेवी? तदहमपि पश्यामि, कुत्र मेऽनुचरा विचरन्तीति। ( कतिचित् पदानि गत्वा ) भो भो राजानुचराः, कुत्र यूयं तिष्ठथ? ( उच्चैः प्रतिध्वनिः ) न हि समागच्छति प्रतिवचनम्। मन्ये, दूरतो विभ्रान्ता मेऽनुचराः। उपसृत्य पश्यामि। ( उपसर्पति )

नेपथ्ये वनलक्ष्मीः—भो भो वृक्षदेवताः, अभिमन्युनन्दनं नरपालं फलपुष्प-च्छायादानेन संवर्द्धयत। [ दृश्यपरिवर्त्तनम् ]

[ दृश्यते आश्रम गृहम्—विहगाः कूजन्ति—दूरतश्च आगच्छति गंभोर ओङ्कारगीतनादः—ओम्। तत्र च ध्यायति समाहितो महर्षिः। ]

उपसृत्य परीक्षित्—अत्र पञ्चवटीवेदिकायां दृश्यते कश्चित् तापसः। पृच्छाम्येनम्। ( उच्चैस्तापसमुपलक्ष्य ) भोः, किं दृष्टा भवता मे परिजनाः?

[ मुनिर्मौनं तिष्ठति—सर्व्वत्र नीरवता ]

पुनः परीक्षित्—भोस्तापस, कथ्यतां कृपया किं राजानुचरा अनेन पथा प्रचलन्तीति।

[ मुनिर्ध्यायति, न यच्छति प्रतिवचनम् ]

परीक्षित्—( सक्रोधम् ) अहो, असौजन्यमस्य तपस्विनः। यत्पृष्टोऽपि नहि प्रददाति प्रतिवचनम्। तद् दण्डनीयमस्य दौःशील्यम्। (मुनिं प्रति)

भोस्तापस, एष ते अशिष्टाचारहेतुको दण्डः। (अन्तिकात् मृतसर्पमानीय धनुष्कोट्या मुनिकण्ठेऽर्पयति)।

नेपथ्ये शृङ्गी—(उच्चैः) अब्रह्मण्यम् — अब्रह्मण्यम्। (द्रुतं प्रविशति) (प्रविश्य पितरं वीक्ष्य) हा धिक्! कोऽयं दुरात्मा पूजनीये मम पितरि एवमनार्यमाचरति?

परीक्षित् उपसृत्य—(सविनयम्) तपोधन, पृष्टोऽपि अत्र भगवान् उत्तरं न ददाति। स्वजनविच्युतोऽहं च परिश्रान्तः। तेन मतिभ्रमान्नहि विज्ञातं मया यदेष ते जनकस्तपस्यतीति।

शृङ्गी—(सरोषम्) मदान्ध, ऐश्वर्य्यगर्व्वादवमानितस्त्वया ततो मे लोकपूज्यो जनकः? धिक् त्वामधर्म्माचारिणम्! अतः पतितोऽसि मूढ, पाप-कार्य्येण।

परीक्षित्—(सविनयम् कृताञ्जलिः) श्रूयतां ब्राह्मण, नाहं मुनिवरस्तपस्यतीति जानामि। अतः क्षमस्व माम्।

शृङ्गी—नहि नहि। यतस्त्वयावमानितस्तपस्वी, ततस्त्वामभिशपामि, सप्तमे दिवसे तक्षकस्त्वां दङ्क्ष्यतीति। [नेपथ्ये आर्त्तस्वरः]

परीक्षित्—क्षम्यतामपराधः। भगवन्, अविवेकवशादनार्यमाचरितं मया। तद् रक्ष माम् ब्रह्मन्। (चरणे पतति)

शृङ्गी—(स्वगतम्) अहो, किं करोमि? (नृपं प्रति) राजन्, कदापि नान्यथा भवति ब्रह्मचारिणां वचः। तथाप्यहमनुतप्तः प्रत्याहरामि अभिशापम्।

परीक्षित्—(उत्थाय) करुणामय, एषोऽहमपसारयामि मृतसर्पं गुरुजनकण्ठदेशात्। (सर्पमपसार्य दूरे क्षिपति) (मुनिवरस्य शमीकस्य पादयोः पतित्वा) भगवन्, करुणामय, लोकपावन महर्षे, नितरामहमपराद्धो मन्दभाग्यः। तत् क्षमस्व मे पुत्रकल्पस्यापराधम्।

शमीकः—(ध्यानमुक्तः प्रोन्मील्य नयने) कोऽसि त्वम्? कथं क्लिश्यसे अनुशयेन।

शृङ्गी—(पितरं प्रति) तात, बुद्धिवैकल्यादयं रोषपांशुलस्त्वयि अशोभनमाचरन् अनुतप्यते।

परीक्षित्—( उच्छ्वसितकण्ठेन ) देव, अभिशप्तोऽहमशरणो भवन्तं शरणं गच्छामि। अधुना कृपां विधेहि भगवन्।

शमीकः—( क्षणं ध्यात्वा नेत्रयुगमुन्मील्य ) अहो, कोऽयमनर्थः सञ्जातः ? ( शृङ्गिणं प्रति ) अब्राह्मणाचितोऽयमभिशापस्ते पुत्र। भारतगौरव-भूतोऽयमभिमन्युनन्दनः क्षुत्पिपासाक्लिष्ट अत्रातिथ्यमुपागतः। ध्यान-मग्नत्वादजानता मया न खलु विहितमाचरितं मान्यजनाय। त्वमपि अकरुणस्तमभिशपन् स्वधर्म्माद् विच्युतोऽसि। जातश्च ते तपःक्षयः। अतः प्रसादय अतिथिम्।

शृङ्गी—( निर्विण्णः ) अपराद्धोऽस्मि गुरो, एष प्रत्याहृतो मया अभिसम्पातः। ( राजानं प्रति ) राजन्, प्रतिसंहरामि शापवचनम्। अतःपरं देदीप्यता-मत्रभवान् विपर्ययाद् रक्षितो मेघमुक्तो यथा निशाकरः।

शमीकः—साधु साधु स्वस्त्यस्तु नरपतये। ॐ स्वस्ति ॐ स्वस्ति।

शृङ्गी—अहो! एतत्सत्यमस्तु गुरुजनाशीर्वचनम्। शतं जीवतु नरपतिः।

शमीकः—( नृपं प्रति ) नरमणे, अधुना प्रतिगच्छ त्वं स्वपुरमदीनमनसा। ततश्च दानधर्म्म-पुण्यकथाश्रवणादिना कृतस्वस्त्ययनः शान्तिमाप्नुहि। आशिषं ते करोमि भद्रं वो भूयादिति। [करेणाशिषं करोति]

शृङ्गी—( नृपमुद्दिश्य ) तपसा भवतु आयुष्मंस्ते अशुभानां विनाशः। भूयाच्च सर्वथा भवतो दुष्कृतिक्षयः।

परीक्षित्—( उभयोः पादवन्दनां करोति ) नमो नमो ब्राह्मणेभ्यः। नमोऽस्तु तपोधनेभ्यः। ( नत्वा प्रस्थानं करोति )

शमीकः—( स्वगतम् ) धर्म्मो रक्षतु धार्म्मिकम्। किन्तु, कथमेवंविधो भवति व्यतिकरः? अहो, मा भूयादनाथेयं वीरधात्री वसुन्धरा विपर्ययेण।

नेपथ्ये कश्चित्—( उच्चैः ) युगावसानमायाति। एतद्धि कलेराविर्भावं सूचयति।

**इति पञ्चमेऽङ्के प्रथमं दृश्यम्** ( क्रमशः )

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. L. No. 10 | १८८९ शकीये माघे १३७४ वङ्गाब्दीये ५०तम-वर्षस्य १०म सङ्ख्या | February 1968

# भाषापरिच्छेदे पदार्थनिरूपणम्

[ निबन्धकः—**श्रीदीननाथत्रिपाठी महाचार्यः** ]

( पूर्वानुवृत्तम् )

वाद्युक्तसाधनाभावेऽपि साध्यस्योपलब्धिकथनमुपलब्धिसमा। यथा—शब्दोऽनित्यः प्रयत्नानुविधायित्वाद् घटवदित्यत्र प्रयत्नं विनापि वायुनोदनवशाद् वृक्षशाखाभङ्गजन्यस्य शब्दस्य उपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्ति। यथा वा पर्वतो वह्निमान् धूमादित्युक्तेऽपर आह न धूमहेतुना वह्न्यवधारणं भवति, आलोकादिनापि वह्निसिद्धेः। तस्मान्न धूमस्य साधकत्वमिति प्रतिकूलतर्कः। इयमेवोपलब्धिसमा जातिरिति। उक्तं च सूत्रकारैः—"निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः"। [ न्याः सूः ५।१।२७ ] इति ॥२०॥

वादिना अनुपलब्धिवशात् कस्यचित् पदार्थस्यानङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतस्य यत्किञ्चित्पदार्थस्याभावसाधनमनुपलब्धिसमा। यथा—शब्दोऽनित्यः प्रयत्नानुविधायित्वाद् घटवदित्यत्रैव यथा शब्दस्योच्चारणात् पूर्वमावरणवशाद् विद्यमानस्यैव अनुपलब्धिमात्रेण यद्यस्वीकारः तदा जलादेर्विद्यमानस्यैवावरणवशादनुपलब्धिमात्रेणास्वीकारप्रसङ्ग इत्युक्ते कश्चिदाह—

जलाद्यावरकस्य उपलब्ध्या तस्यावरकसिद्धौ तत्प्रयुक्तानुपलब्धिमात्रेण जलास्वीकारोऽयुक्त एव। शब्दावरकस्य तु उपलब्ध्यभावात् आवरकासिद्धौ अनुपलब्ध्या शब्दस्यावरकाभावे शब्दस्यानङ्गीकारो युक्त एव। अत्रोत्तरं यथा—यथावरकस्योपलब्ध्यभावरूपानुपलब्ध्या आवरकाभावसिद्धिस्तर्हि शब्दस्यावरकस्यानुपलब्धेरप्युपलब्ध्यभावरूपानुपलब्ध्या तदनुपलब्धेरभावसिद्धौ तदावरकाभावासिद्धेः अर्थाच्छब्दावरकसिद्धिर्भवति। इयमेवानुपलब्धिसमा जातिरिति। उक्तं च महर्षिभिः—"तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः॥" [न्याः सूः ५।१।२६]। तेषामावरणादीनामनुपलब्धेरपि अनुपलम्भात् अनुपलब्धिर्नास्तीति आवरणाद्युपलब्धिसिद्धिरित्यर्थः॥२१॥

धर्मस्य नित्यानित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं नित्यसमा। यथा—शब्दोऽनित्यः कार्यत्वादित्युक्ते कश्चिदाह शब्दस्यानित्यत्वं यद् भवद्भिः साध्यते तन्नित्यमनित्यं वा। यदि नित्यं तदा शब्दवृत्तेरेव तस्य नित्यत्वाच्छब्दस्यापि नित्यत्वमायातम्। अथानित्यं तर्हि कदाचित् शब्देऽनित्यत्वाभावोऽस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वम्। इयमेव नित्यसमा जातिः। तथाचोक्तं महर्षिभिः—"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः।" [न्याः सूः ५।१।३५]। भाष्येऽप्युक्तम्—"अनित्यः शब्द इति प्रतिज्ञायते। तदनित्यत्वं किं शब्दे नित्यमथानित्यम्? यदि तावत् सर्वदा भवति, धर्मस्य सदा भावाद्धर्मिणोऽपि सदा भाव इति नित्यः शब्द इति। अथ न सर्वदा भवति, अनित्यत्वस्याभावात् नित्यः शब्दः। एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः।" इति॥२२॥

अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावनमनित्यसमा। यथा—शब्दोऽनित्यः कार्यत्वादित्यत्रैव यद्यनित्य घटसादृश्याच्छब्दोऽनित्य इत्युच्यते तर्हि येन केनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्यानित्यत्वप्रसङ्गः। इयमेवानित्यसमा जातिः। उक्तं च महर्षिभिः "साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः।" [न्याः सूः ५।१।३२]॥२३॥

कार्यान्तरेणापि वाद्युक्तहेतोः सम्भवाभिधानं कार्यसमा। यथा—शब्दोऽनित्यः प्रयत्नानुविधायित्वादित्यत्रैव कश्चिदाह प्रयत्नानुविधायित्वम् उभयथापि सम्भवति, घटादिवत् शब्दस्वरूपोत्पत्तौ जलादिवदावरकनिवृत्तौ च। तत्रावरणनिवृत्तौ प्रयत्नस्य प्रयुक्तत्वे प्रयत्नानुविधायित्वं नित्यत्वनियतं भवति, तथाच शब्दस्य नित्यत्वं भवतु इति। कुत्रचित् कारणसमेति पाठो विद्यते, तादृशपाठे च कारणस्य प्रयत्नानुविधायित्वस्य शब्दस्वरूपोपत्पत्तौ तदावरणनिवृत्तौ चोभयत्रापि समत्वाभिधानम् कारणसमेति उक्तार्थे एव पर्यवसानं भवति। कार्यसमाजातिरुक्ता न्यायसूत्रे—"प्रयत्नकार्यानेकत्वात् कार्यसमः।" [न्याः सूः ५।१।३७]

आसा जातीना मध्ये संशयप्रकरणसाधर्म्यार्थापत्त्यनित्यकार्यसमादीना कासाञ्चिज्जातीनां पर्यवसाने यद्यपि दूषणैक्यं तथापि दूषणोद्भावनप्रकार भिन्न इति पृथक्तया निर्देशः। आसां जातीना सप्त अङ्गानि विद्यन्ते। यथा—लक्ष्यं लक्षणम् उत्थानं पातनम् अवसरः, फलं मूलं च। आसां दूषणप्रकारा न्यायसूत्रभाष्यवार्तिकटीकादिषु विस्तरेण वर्णिता, ग्रन्थगौरवभयादत्रनोत्थापिताः प्रकृतानुपयोगित्वाच्च। आसां सर्वासां गुणेऽन्तर्भावः ॥२४॥

## निग्रहस्थानम्।

वादिनां पराजयहेतुस्वरूपाणां निग्रहस्थानानां यथायथं द्रव्यादिष्वन्तर्भावः। निग्रहस्थानानि द्वाविंशति। तद्यथा न्यायसूत्रे "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थम् अपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणम् अज्ञानमप्रतिभा विक्षेपोमतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि॥" [ न्याः सूः ५।२।१ ]

नव्यास्त्वत्र चकारोऽनुक्तसमुच्चयार्थस्तेन दृष्टान्ते साधनवैकल्यादीनां निग्रहस्थानरूपतया परिग्रह इत्याहुः। तत्र स्वप्रतिज्ञातस्य विरुद्धार्थाभ्युपगमत्वं प्रतिज्ञाहानिलक्षणम्। तथाच न्यायसूत्रे 'प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते

प्रतिज्ञाहानिः। परित्यागरूपाया अस्या प्रतिज्ञाहानेः अभावेऽन्तर्भाव.। यथाः—शब्दोऽनित्यः ऐन्द्रियकत्वात् घटवदित्युक्ते कश्चिदाह—किञ्चिदिन्द्रिय-वेद्यं घटत्वादि नित्यं दृष्टमिति तद्वच्छब्दो नित्य एव स्यादिति। तत्रोत्तरं—इन्द्रियवेद्यत्वाविशेषाद् घटत्वादिवद् घटो नित्य एव स्यादिति अनित्यत्व-साधने दृष्टान्तस्य नित्यत्वाङ्गीकारात् शब्दस्यानित्यत्वप्रतिज्ञां परित्यजति। इयं प्रतिज्ञाहानिः पक्षसाध्यहेतुदृष्टान्ततद् विशेषणत्यागभेदात् पञ्चविधा भवति। पक्षत्यागो यथाः—शब्दोऽनित्य प्रत्यक्षगुणत्वादित्युक्ते 'सोऽयं गकार' इति प्रत्यभिज्ञाबलात् परेण बाधे उद्भाविते, अस्तु तर्हि घटोऽनित्य इति पक्षं परित्यजति।

तत्रैव यदि 'अस्तु तर्हि शब्दो नित्य इति उत्तरयति तर्हि साध्यत्याग एव भवति।

अनित्यः शब्दः द्रव्यत्वादित्युक्ते स्वरूपासिद्धोऽयमिति परेण दोषे उद्भाविते 'अस्तु तर्हि अनित्यः शब्दः कृतकत्वादि'ति पुनर्हेतुप्रयोगे हेतुत्यागः।

दृष्टान्तत्यागस्तु प्रथममुक्तः।

द्रव्यात्मकः शब्दः अनित्यः कृतकत्वादित्युक्ते आश्रयासिद्धोऽयमिति परेण दूषिते अस्तु तर्हि शब्दोऽनित्य इति पक्षविशेषणत्यागः।

शब्दः द्रव्यत्वे सति अनित्यः कृतकत्वाद् घटवदित्युक्ते परेण बाधदोषे उद्भाविते अस्तु तर्हि शब्दः अनित्य इति साध्यविशेषणत्यागः। एवं हेतु-विशेषणत्यागदृष्टान्तविशेषणत्यागौ बोद्धव्यौ ॥१॥

पूर्वकथितायां प्रतिज्ञायां दूषितायां तत्र विशेषणान्तरदानं प्रतिज्ञान्तरम्। तच्च द्विविधम्—पक्षविशेषणदानात्, साध्यविशेषणदानाच्च। तत्राद्यं यथाः—शब्दोऽनित्यः इत्यत्र ध्वनिरूपे शब्दे अंशतः सिद्धसाधने उद्भाविते वर्ण-रूपेति पक्षविशेषणदानम्। अन्त्यं यथाः—क्षित्यादिकं गुणजन्यं कार्यत्वादि-त्यत्र अदृष्टरूपगुणजन्यतया सिद्धसाधने उद्भाविते सविषयकेति गुणविशेषण-दानम्।

तथाच न्यायसूत्रम् —"प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ।" [ न्याः सूः ५।२।३ ]

'विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थ' इति विश्वनाथवृत्तिः । तथाच प्रतिज्ञान्तरस्य शब्दात्मकगुणेऽन्तर्भावः ॥२॥

स्वोक्तसाध्यविरुद्धहेतुकथनं प्रतिज्ञाविरोधः । यथा—द्रव्यं गुणभिन्नं रूपत्वात् इति । तथाच "प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" [ न्याः सूः ५।२।४ ] इति न्यायसूत्रम् । अस्य च प्रतिज्ञाविरोधस्य गुणेऽन्तभावः ॥३॥

स्वयं प्रतिज्ञातस्यापह्नवः प्रतिज्ञासन्न्यासः । यथाः—शब्दोऽनित्यः इन्द्रियवेद्यत्वात् इत्युक्ते यदापर आह सामान्ये इन्द्रियवेद्यत्वसत्त्वेऽपि अनित्यत्वाभावाद व्यभिचार इति तदा यदि वादी कथयति क एवमाह शब्दोऽनित्य इति तर्हि स्वप्रतिज्ञातस्य अपलापात् प्रतिज्ञासन्न्यास इति । तथाच पारमर्ष सूत्रम्—"पक्षप्रतिषेधे प्रतिज्ञातार्थापनयन प्रतिज्ञासन्न्यासः ।" [ न्याः सूः ५।२।५ ] पक्षस्य स्वोक्तस्य परेण प्रतिषेधे कृते तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपह्नव इत्यर्थः । अस्याभावेऽन्तर्भावः ॥४॥

परोक्तदूषणोद्दिधीर्षया स्वोक्तहेतुकोटौ विशेषणान्तरोपादानं हेत्वन्तरम् । यथाः—शब्दोऽनित्यः प्रत्यक्षत्वादित्यत्र सामान्ये व्यभिचारोद्भावने कृते 'जातिमत्त्वे सति' इति विशेषणदानम् । उक्तं महर्षिभिः—"अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ।" [ न्याः सूः ५।२।६ ] इति । तादृशविशेषणान्तरकथनरूपस्यास्य हेत्वन्तरस्य गुणेऽन्तर्भावः ॥५॥

प्रकृतादर्थादप्रतिसम्बद्धार्थस्य अर्थान्तरस्य कथनमर्थान्तरम् । यथाः—'नित्यः शब्दः अस्पर्शवत्त्वादि'त्युक्ते हेतुपदं हिधातोस्तुनि प्रत्यये निष्पन्नं', पदं च सुप्तिङन्तं पदमित्याद्यर्थान्तरकथनम् । सूत्रं च—"प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्" [ न्याः सूः ५।२।७ ] । अस्य च गुणेऽन्तर्भावः ॥६॥

अवाचकवर्णप्रयोगो निरर्थकम् । यथाः—शब्दोऽनित्यः जबगडदशत्वाद् झभघढधषवदित्यादि । अथवा असाधुशब्दप्रयोगो निरर्थकम् । यथाः—वह्निमदित्यादि । तथाचोक्तं महर्षिभिः "वर्णक्रमनिर्देशवन्निरर्थकम्"

वह्निमान् धूमात्, महानसवत् चत्वरवच्च इत्यादि। उक्तं न्यायसूत्रम् "हेतूदाहरणाधिकमधिकम्" [न्याः सूः ५।२।१३] इति। अस्य च गुणेऽन्तर्भावः ॥१२॥

अनुवादं विना कथितस्य पुनःकथनं पुनरुक्तम्। यथा—शब्दोऽनित्यः शब्दोऽनित्य इत्यादि। तथाच महर्षिसूत्रं—"शब्दार्थयोः पुनर्वचनं पुनरुक्त-मन्यत्रानुवादात्।" [न्याः सूः ५।२।१४] इति। अस्य गुणेऽन्त-र्भावः ॥१३॥

वादिना त्रिरुक्तस्य वाक्यस्य सदस्यैर्विज्ञातार्थस्याननुवादोऽननुभाषणम्। तथाच न्यायसूत्रं "विज्ञातस्य परिषदा, त्रिरभिहितस्याप्यप्रत्युच्चारणमननु-भाषणम्।" [न्याः सूः ५।२।१६] इति। अस्य चाभावेऽन्तर्भावः ॥१४॥

वादिना त्रिरुक्तस्य वाक्यस्य सदस्यैर्विज्ञातार्थस्यार्थानवबोधः अज्ञानम्। उदाहरणं स्पष्टम्। न्यायसूत्रं च "अविज्ञातं चाज्ञानम्।" [न्याः सूः ५।२।१७] इति अस्याप्यभावेऽन्तर्भावः ॥१५॥

प्रतिवादिनानूदिते वादिवाक्ये तदर्थे विज्ञातेऽपि उत्तरास्फूर्तेः तूष्णीम्भा-वोऽप्रतिभा। "उत्तरस्याप्रतिपत्तिरप्रतिभा" [न्याः ५।२।१८] इत्यक्षपाद-सूत्रम्। अस्याभावेऽन्तर्भावः ॥१६॥

असम्भवत्कार्यान्तरव्यासङ्गानुद्भाव्य कथाविच्छेदो विक्षेपः। यथा—कार्यमेकं महत् तिष्ठति इदं कृत्वा कार्यान्तरं करिष्यामि इति। "कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः" [न्याः सूः २।५।१६] इति न्यायसूत्रम्। अस्य विक्षेपस्याभावेऽन्तर्भावः ॥१७॥

स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानं मतानुज्ञा। यथा—त्वं चोर इत्युक्ते स्वचोरत्वमनुद्धृत्य त्वमपि चोर इत्याद्युक्तिः। अत्र स्वस्मिंश्चोरत्वम-प्रतिषिद्धमनुमतं भवति। "स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा"। [न्याः सूः ५।२।२०] इति न्यायसूत्रम्। अस्य गुणेऽन्तर्भावः ॥१८॥

वादिनो निग्रहस्थानसत्त्वेऽपि प्रतिवादिनस्तदनुद्भावनं पर्यनुयोज्योपेक्षणम्। "निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् [न्या सूः ५।२।२१ इति न्यायसूत्रम्। अस्याभावेऽन्तेर्भावः ॥१९॥

निग्रहस्थानरहिते निग्रहस्थानोद्भावनं निरनुयोज्यानुयोगः। "अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः" [न्याः सूः ५।२।२२] इति न्यायसूत्रम्। अस्य गुणेऽन्तर्भावः।२०॥

एकसिद्धान्तमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमवलम्ब्य उत्तरदानमपसिद्धान्तः। यथा—सांख्यमतेनाहं वदिष्यामीत्युभ्युपेत्य कथाप्रवृत्तौ आविर्भावस्याविर्भावस्वीकारे अनवस्था इति प्रतिवादिना चोदिते आविर्भावस्य असत उत्पत्तिरिति यदि वाद्यभ्युपैति तदापसिद्धान्तः। तथाच न्यायसूत्रम्—'सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः" [न्याः सूः ५।२।२३]। अस्य गुणेऽन्तर्भावः ॥२१॥

हेत्वाभासाश्च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च पूर्वमुक्ताः। ते च यथायथं द्रव्यादिष्वन्तर्भूताः ॥२२॥

एवं न्यायदर्शनोक्तानां षोड़शानां पदार्थानां सप्तपदार्थेष्वन्तर्भूतत्वात् सप्तैव पदार्थाः सिध्यन्ति।

## ॥ शक्तेरतिरिक्तपदार्थत्वनिराकरणम् ॥

नन्वन्वयव्यतिरेकाभ्यां दाहं प्रति वह्नेः कारणत्वं सिद्धम्। तत्र च कारणतावच्छेदक न वह्नित्वम्। वह्निसत्त्वेऽपि मण्यादिसमवहिते वह्नौ दाहानुत्पत्तिदर्शनात्। किन्तु वह्निनिष्ठकारणतावच्छेदिका काचित् अतीन्द्रिया शक्तिः स्वीकार्या। सा च उत्पत्तिविनाशशालिनी। मण्यादिसमवधाने तस्याः शक्तेर्नाशाद् विशिष्टकारणाभावान्न तत्र दाहः। मण्याद्यपसारणे च तादृश्याः शक्तेरुत्पत्तौ विशिष्टकारणसत्त्वाद् दाहोत्पत्तिः। तस्मादन्यथानुपपत्त्या क्लृप्ताया शक्तेः क्लृप्तपदार्थेष्वनन्तर्भूतत्वादतिरिक्तत्वमावश्यकमिति कथं सप्तैव पदार्था इत्याशङ्कते प्राभाकरः—'ननु कथमेत एव पदार्था इत्यादि :—शक्तेरतिरिक्त

पदार्थत्वं साधयति—'तथाही'त्यादिना। मण्यदीत्यत्रादिपदेन मन्त्रौषध्यादीना परिग्रहः। "मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते" इत्यत्र अनुकूलत्वं जनकजनकतावच्छेदकसाधारणम्। तेन शक्ते र्जनकतावच्छेदकत्वऽपि नानुपपत्तिः। ननु तथापि शक्तेः पदार्थत्वेऽपि सप्तातिरिक्तत्वं कथमिति चेत्। उच्यते। शक्तिः द्रव्यत्वादिविभाजकधर्मत्रयान्यतमाभाववती गुणवृत्तित्वात् गुणत्ववत्। प्राभाकरमते गुणस्यापि शक्तिमत्त्वेनैव कारणत्वात् न स्वरूपासिद्धिः। शक्तिः सामान्यत्वादित्रयान्यतमविभाजकधर्मशून्या जन्यत्वाद् घटवत्। इत्यनुमानद्वयेन शक्तेः द्रव्यत्वादिसमवायत्वान्तविभाजकधर्मषट्कान्यतमशून्यत्वेन् शक्तिर्द्रव्यत्वादिविभाजकषट्कान्यतमभिन्नविभाजकधर्मवती द्रव्यत्वादिपदार्थविभाजकधर्मान्यतमशून्यत्वे सति ज्ञेयत्वात्, यन्नैवं तन्नैवं यथा द्रव्यादि इति परिशेषानुमानेन शक्तेर्द्रव्यत्वादिषट्कान्यतमातिरिक्तविभाजकधर्मवत्त्वं सिध्यति। न च द्रव्यत्वादिषट्कान्यतमातिरिक्तपदार्थविभाजकधर्मवत्त्वेऽपि कथं तस्याः सप्तान्यतमत्व न सिध्येदिति वाच्यम्। शक्तिर्नभावत्ववती भावत्वेन ज्ञायमानत्वाद् घटादिवदिति अभावातिरिक्तत्वस्य सिद्धत्वेन सप्तातिरिक्तत्वमर्थात्तस्याः सिध्यति। शक्तेरतिरिक्तपदार्थत्वं प्रतिपाद्य सादृश्यस्याप्यतिरिक्तपदार्थत्वं व्यवस्थापयति—"एवं सादृश्यमप्यतिरिक्तः पदार्थः। भाट्टप्राभाकरयोर्मते, शक्तेः पदार्थान्तरत्वं प्राभाकरमते सादृश्यस्यापि पदार्थान्तरत्वम्। सादृश्यमतिरिक्तः पदार्थः इत्यत्र अतिरिक्त इत्यस्य सप्तातिरिक्तः इत्यर्थः। तथाच सादृश्यं सप्तातिरिक्तपदार्थः षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वादित्यनुमानप्रयोगः। तत्र हेतौ विशेषणभागं साधयति—"तद्धि न षट्सु—" इत्यादि। तत् सादृश्यम्। अत्रानुमानप्रयोगः—सादृश्यं षड्भावानन्तर्भूतं सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्। सामान्यत्वे व्यभिचारवारणाय विशेषणदलम्। सामान्यातिरिक्तद्रव्यादि षट्कान्यतमत्वे व्यभिचारवारणाय विशेष्यदलम्। व्यतिरेकित्वे सति इति विशेषणान्न प्रमेयत्वादौ व्यभिचारः। अभावानन्तर्भूतत्वरूपं विशेष्यदलं साधयति—'नाप्यभावे" इति। तथाच प्रयोगः सादृश्यम् अभावानन्तर्भूतं सत्त्वेन प्रतीयमानत्वात्।

अत्र सत्त्वेन इत्यस्य समवाय-स्वसमवायिसमवायैतदन्यतरसम्बन्धेन सत्तावत्त्वेन इत्यर्थो बोद्धव्यः। प्रतीयमानत्वात् इत्यस्य प्रमीयमाणत्वात् इत्यर्थः। तेन भ्रान्तपुरुषस्याभावे भावत्वप्रतीतावपि न क्षतिरित्यर्थः। निराकरोति 'न इति॥ 'मण्याद्यभावविशिष्टे'त्यत्रादिपदेन मन्त्रौषध्यादीनां संग्रहः। 'वह्न्यादे'रित्यत्रादिपदेन विद्युदादीनां संग्रहः। 'दाहादिकमि'त्यत्रादिपदेन पाकादेः संग्रहः।

ननु दाहत्वावच्छिन्नं प्रति मण्याद्यभावविशिष्टवह्नित्वेन वह्निविशिष्ट मण्याद्यभावत्वेन कारणत्वमिति विशेषणविशेष्यभावे विनिगमनाभावात् गुरुभूतकार्यकारणभावद्वयापत्तिरित्यत आह—"स्वातन्त्र्येणे"ति। एवं च मण्यभावस्य दाहं प्रति कारणत्वे मणेः प्रतिबन्धकत्वं सिध्यति। कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वपदार्थत्वात्। ननु मण्यभावस्य दाहं प्रति कारणत्वे प्रतिबन्धकोत्तेजकमणिद्वयसत्त्वे कथं दाह—इत्याशयेनाशङ्कते—'न चोत्तेजकेति'। समाधानमाह—"उत्तेजकाभावेति"। तथाच विशिष्टाभावस्य कारणत्वात् नोक्तदोषः। केवलविशेषणाभावे, केवलविशेष्याभावे, विशेषणविशेष्ययोरुभयोरभावे च विशिष्टाभावसत्त्वात् वह्निसन्निधाने प्रतिबन्धकोत्तेजकोभयमणिसत्त्वे विशेषणाभावाद् विशिष्टाभावसत्त्वे दाहः। उभयोर्मण्योरभावे वह्नेर्दाहः, तत्र विशेष्याभावाद् विशिष्टाभावस्य सत्त्वात्। वह्निसन्निधाने केवलोत्तेजकमणिसत्त्वे विशेषणविशेष्ययोरुभयोरभावाद् विशिष्टाभाव इति तत्र दाहः। वह्निसन्निधाने केवलप्रतिबन्धकमणिसत्त्वे विशिष्टस्यैव विद्यमानत्वात् न विशिष्टाभाव इति न तत्र दाहः।

सादृश्यस्य पदार्थान्तरत्वं निराकरोति—'सादृश्यमपी'ति ननु पदार्थमात्रे अपरपदार्थगतप्रमेयत्ववाच्यत्वादिसत्त्वात् सर्वेषु पदार्थेषु सर्वेषां पदार्थानां सादृश्यं स्यादिति चेन्न। तद्गतभूयोधर्मवत्त्वमित्यस्य तद्गतानामसाधारणानां भूयसां धर्माणां सत्त्वस्यैवाभिप्रेतत्वात्।

ननु यदि सप्तैव पदार्थाः स्युस्तर्हि दीधितिकृदादिभिः प्रतियोगित्वाधेयत्वाधिकरणत्वादीनामतिरिक्तपदार्थत्वं कथमङ्गीकृतम्। एवञ्चातिरिक्तपदार्थत्वे

पदार्थविभागव्याघातो वा कथं न भवेदिति चेदुच्यते। पदार्थानां सप्तत्वविभागस्य साक्षात् परम्परया वा तत्त्वज्ञानोपयोगितया निरूपणात्। तस्मात् सप्तैव पदार्था इति सिद्धम् इति ॥

---

# उत्तरकुरुक्षेत्रम्

[ श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन विरचितम् ]

( पूर्व्वानुवृत्तम् )

## द्वितीयं दृश्यम्

[ गङ्गातीरे प्रायोपवेशनेन हरिकथां शृणोति परीक्षित्—अदूरे ऋत्विजो होमं कुर्वन्ति—भवन्ति च भगवन्नामकीर्त्तनानि। दर्भासनासीन नरपतिं शुकदेवो भागवतं श्रावयति ]

( नेपथ्ये—ॐब्रह्मणे स्वाहा—ॐविष्णवे स्वाहा—ॐरुद्राय स्वाहा )

ओम्

दर्भासन उपविष्टः परीक्षित्—नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

[ शुकदेवं प्रति ] तपोधन, धर्म्मो विजयताम्। अतो भवदीयमुखारविन्दात् पुण्यां भागवतीं कथां श्रुत्वा पवित्रो भवितुमिच्छामि ]

शुकदेवः—[सहर्षम्] शृणु राजन्,

सतां प्रसङ्गान्मम वीर्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धारतिर्भक्तिरनुक्रमिष्यति ॥

तत् पुण्यात्मनो भवतः श्रीहरेः कृपया भगवत्कथाश्रवणे यदभिलाष-समुत्पन्नो नास्त्यत्र वैचित्र्यम् , जगत्पिता नारायणः जीवानुद्धर्त्तुकामो युगे युगे अवतरति, प्रकाशयति तस्य दिव्यां लीलां जनज्जनपरित्राणार्थम् , तामहं वाचयामि ।

परीक्षित्—अहो धन्योऽस्मि भगवन् भवतां कृपालाभेन, नमोऽस्तु परमर्षये व्यासनन्दनाय, [वन्दते] देव, तदारभ्यतां सङ्कल्पितो भगवत्कथाप्रसङ्गः, पर्य्युत्सुकोऽस्मि तच्छ्रवणाय ।

शुकदेवः—श्रूयतां राजन् , एषा पतितपावनी हरिकथा गङ्गाधारेव सुविमला सर्वसन्तापमपहरति । पावयति, तारयति च देहिनं श्रीविष्णुपदपङ्कज-प्रापणाय ।

परीक्षित्—साधु साधु ततस्ततः ?

शुकदेवः—सेयं मत्पितुः श्रीकृष्णद्वैपायनस्य प्रसादादधिगता पुण्येय भागवती कथा कृच्छ्रसाधनेन, प्रचार्य्यते च तदधुना भवतां भक्तिरसोद्दीपनाय ।

( नेपथ्ये कश्चिद् गीतस्वरेण गायति )

निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतरसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥

परीक्षित्—अहो, मधुनिस्यन्दिनी भागवती वाणी श्रुतिपथगामिनी मर्म्म मे प्लावयति सुधाप्रवाहेन । ततश्च देव !

शुकदेवः—( गीतिस्वरेण )

तुलसीकाननं यत्र यत्र पद्मवनानि च ।
पुराणपठनं यत्र तत्र सन्निहितो हरिः ॥

किञ्च— वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च हरिः सर्व्वत्र गीयते ॥

ब्राह्मणाः—जयति श्रीहरिः, जयति श्रीहरिः ।

शुकदेवः—ततश्च श्रूयताम् ।

समाश्रिता ये पदपल्लवप्लव
    महत् पदं पुण्ययशो मुरारेः ।
भवाम्बुधिर्वत्स पदं परं पदं
    पदं पदं यद्विपदां न तेषाम् ॥

किञ्च— म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् ।
अजामिलोऽप्यगाद् धाम किमु तच्छ्रद्धया गृणन ॥

परीक्षित्—मधुरं मधुरम् । अहो अमृतायते श्रीहरेर्नामकीर्त्तनम् । देव, भवदीयकण्ठविगलितमेतत् सुललितभागवतवचनामृतं भक्तजनं चिरमानन्दयिष्यति, मोदिष्यन्ते च भारतवासिनश्चिर भक्तिरसास्वादेन । तच्च पुनर्भगवन्महिमश्रवणलालसा मामुद्दीपयति ।

शुकदेवः—साधु धीमन् । तद् भक्तिरसेनोल्लसितस्तृप्तिमास्वादयसि । ततश्च श्रूयताम्—

आत्मारामाश्च मुनयो निग्रन्था अप्युरुक्रमे ।
कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतः सदा हरिः ॥

परीक्षित्—विजयतां देवः । तृप्तोऽस्मि । नातः परमनित्यसुखेषु स्पृहा जायते, इच्छामि भवसिन्धोः परित्राणम् । अतः सत्यो भवतु ब्राह्मणाभिशापः । किमनेन त्वगस्थिमयमांसपिण्डवहनेन ?

[ प्रविशति पुरुषः ]

( प्रविश्य ) पुरुषः—देव, समागतः ।

परीक्षित्—क इह समागतो वार्त्तावह ।

दौवारिकः—ब्राह्मणो राजन् ।

परीक्षित्—( सचकितः ) ब्राह्मणः ? प्रवेश्यतामिह । अहो भाग्यं यद् भूदेव आगच्छति ।

[ प्रविशति पुरुषेण सह ब्राह्मणो गृहीतफलपुष्पकरण्डकः ]

ब्राह्मणः—( प्रविशन् ) ओम् हरिरोम् नारायणः ।

परीक्षित्—( ससम्भ्रममुत्थायाभ्यर्थयति )—स्वागतं विप्रवर्य्यस्य। तदिह पुण्यासनमलङ्क्रियताम्। नमस्ते भगवन्।( बन्दते )

( उपविशन् ) ब्राह्मणः—स्वस्ति स्वस्ति। परमं श्रेयस्ते भवतु।

परीक्षित्—सत्यमस्तु ब्राह्मणस्याशीर्वचनम्।

शुकदेवः—साधु साधु। सत्यमेव विजयते।

ब्राह्मणः—( नृपतिमुद्दिश्य ) नरमणे, आकर्णितो मया भवता हरिकथाश्रवण-वृत्तान्तः। अनेन सत्त्वोत्कर्षेण धर्म्मसेवनमाहात्म्येन च पूर्णमनोरथो भवान् प्रमोदताम्। तेनाहं भवन्तं शुभाशिषा संवर्द्धयितुमागच्छामि।

परीक्षित्—अनुगृहीतोऽस्मि ब्राह्मण। धर्म्मो विजयताम्। नमोऽस्तु भवते। ( नमति )

ब्राह्मणः—नरमणे, अनेन सत्यपालनेन भगवदनुरक्तिमाहात्म्येन च क्षियतां ते सर्व्वबन्धनम्। तन्मोदस्व परमपदलाभेन।

परीक्षित्—श्रीविष्णुः प्रीयताम्। श्रीविष्णुः श्रीहरिः।

ब्राह्मणः—तत् कुरुवंशप्रदीप, नारायणस्ते प्रसीदतु। गृह्यतां चैतत् फल-पुष्पाशीर्निर्माल्यं श्रेयोलाभाय। ( राज्ञेऽर्पयति ) भवतु च प्राकाम्येन तव मनोरथसिद्धिः शुभाय।

परीक्षित्—( कराभ्यां फलमाल्यादिकं गृहीत्वा ) गृहीतो ब्राह्मणप्रसादः। नमस्ते भूदेवाय। ( शिरसा प्रणमति )

ब्राह्मणः—राजन्, इयं ते अम्लानकीर्त्तिः सुचिरं भूतले प्रचरिष्यति। तदधुना स्वस्थानं प्रतिगच्छाम्यहम्। भद्रं तेऽस्तु। ( प्रस्थानं करोति )

परीक्षित्—( स्वगतम् ) सत्यमस्तु ब्राह्मणवचः। मनोरथसिद्धिर्मेऽस्तु ब्राह्मणवचनात्। ( मुद्रितनेत्रः ) भगवन् भूतभावन, एषोऽहमात्मानं ते निवेदयामि।

शुकदेवः—ओम् हरिः ओम् नारायणः—ओम् हरिः ओम् नारायणः। ॐ नारायणः। [ नेपथ्ये वीणा करुणं ध्वनति ]

इति पञ्चमेऽङ्के द्वितीयं दृश्यम् ( क्रमशः )

# वैदिकस्वरालोचनम्

[ निबन्धकः—**श्रीअमरकुमारचट्टोपाध्यायः** ]

( पूर्व्वानुवृत्तम् )

(५) यद्वृत्तान्नित्यम्—अस्य व्याख्यानार्थं वयम् अत्र काशिकावृत्तिम् उद्धरामः। प्रथमा छन्दसीति निवृत्तम्, निघातप्रतिषेध इत्येव ( ='चवायोगे प्रथमा' इति सूत्रात् 'प्रथमा', वैवावेति च छन्दसि' इति च सूत्रात् 'छन्दसि' इति अस्मिन् सूत्रे न अनुवर्तेते। केवलं 'तिङ्ङतिङः' इत्यतः 'तिङ्', 'न लुट्' इत्यतः 'न' इति च अत्र अनुवर्तेते। )। यदो वृत्तं यद्वृत्तम्। यत्र पदे यद् वर्तते तत्सर्वं यद्वृत्तम्। इह वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्। डतरडतमौ च प्रत्ययौ इत्येतन्नाश्रीयते। तस्माद् यद्वृत्तादुत्तरं तिङन्तं नानुदात्तं ( =अनुदात्तं न ) भवति नित्यम्। यो भुङ्क्ते। यं भोजयति। येन भुङ्क्ते। यस्मै ददाति। यत् कामास्ते जुहुमः। यदङ्गयङ् वायुर्वाति। यद्वायुः पवते। पञ्चमीनिर्देशोऽप्यत्र व्यवहिते कार्यमिष्यते।

(६) तुपश्यपश्यताहैः पूजायाम्—तु, पश्य, पश्यत, अह इति एतेषां केनचन यदि तिङन्तं पदं युक्तं भवेत् तर्हि अतिङन्तात् परं वर्तमानम् अपि
2 2 2 1
न निहन्यते। यथा—'आदह स्वधामनुः पुनर्गर्भत्वमेरिरे' ( आत् इरिरे )।

(७) चवायोगे प्रथमा—च, वा इत्यनयोः केनचित् योगे सति प्रथमा आदौ उच्चारिता तिङ्विभक्तिः उदात्ता न भवति। यथा—'इतो वा साति-
1 3 4
मीमहे दिवो वा पार्थिवादधि' ( ईमहे )। अत्र 'ईमहे' इति प्रथमं तिङन्तं 'सातिम्' इति अतिङन्तात् पदात् परं विद्यमानम् अपि न निहन्यते यतः 'वा' इत्यनेन तस्य योगो वर्तते।

ननु 'ईमहे' इत्येतत् प्रथमं तिङन्तम् इति कथम् उच्यते। यदि अन्यानि तिङन्तानि भवेयुः तर्हि एतत् प्रथमं तिङन्तम् इदं द्वितीयम्, अदः तृतीयं,

तत् चतुर्थम् इत्यादीनि वक्तुं शक्यन्ते। अत्र तु एकमेव तिङन्तं पदं दृश्यते। अतः कथम् अस्य प्राथम्यम्।

अत्र उदाहरणे तु 'ईमहे' इति तिङन्तं पुनः पुनरावर्तते तद् यथा—इतो वा सातिम् ईमहे, दिवो वा सातिम् ईमहे, पार्थिवात् वा सातिम् ईमहे इति। आवर्तमानं तिङन्तम् अपेक्ष्य एव दृश्यमानस्य 'ईमहे' इत्यस्य प्राथम्यम् अस्ति। तादृश्यं प्राथम्यम् उपजीव्य एव अत्र निघाताभावः।

(८) चादिलोपे विभाषा—च, वा इत्यादीनां लोपे सति अतिङन्तात् परं यत् तिङन्तं तत् न निहन्यते। तत्र वालोपे उदाहरणं यथा—व्रीहिभिर्यजेत यवैर्यजेत। व्रीहिभिर्वा यवैर्वा यजेत इत्यर्थः।

(९) सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम् (वार्तिक) —सतिशिष्टः यः स्वरः स एव बलीयान् अन्येषां स्वरान् उल्लङ्घ्य स्वस्य यः स्वरः तस्यैव प्राधान्यं ख्यापयति इत्यर्थः। किम् सर्वत्रैव एवं भवति। न। विकरणं वर्जयित्वा। विकरणस्वरः सतिशिष्टोऽपि न तस्य प्राधान्यम्। यो हि अन्येषु उदात्तादिस्वरेषु वर्तमानेषु पश्चात् प्रवर्तते आगच्छति वा सः सतिशिष्टस्वरः। सति शिष्यते इति सतिशिष्टः। उदाहरणेन अस्य वार्तिकस्य आशयः स्पष्टीक्रियते अस्माभिः। उदाहरणम्—गोपायतं नः। (2 2 1 3) गुप्धातोः उकारः अधुना ओकारमापन्नं, 'धातोः' इत्यनेन उदात्तः। तस्मात् परं वर्तमानस्य आयप्रत्ययस्य आकारः उदात्तः। अथ गोपाय' इत्यस्य 'सनाद्यन्ता' इत्यनेन धातुत्वे 'धातोः' इत्यनेन अन्त उदात्तः। ततः परं वर्तमानस्य 'शप्' इत्यस्य अकारः 'अनुदात्तौ सुप्पितौ' इत्यनेन अनुदात्तः। ततः परं वर्तमानस्य 'थस्' इत्यस्य स्थाने विहितस्य 'तम्' इत्यादेशस्य तकारगतस्य अकारस्य 'तास्यनुदात्ते—' इत्यनेन अनुदात्तत्वम्। सम्प्रति अयं प्रश्नः उदेति यत् 'धातोः' इत्यनेन ओकारः उदात्तो भविष्यति उत 'आद्युदात्तश्च' इत्यनेन आयप्रत्ययस्य आकारः उदात्तो भविष्यति उत 'गोपाय' इत्यस्य यकारगतस्य अकारस्य 'धातोः' इत्यनेन उदात्तत्वं भविष्यति इति। अत्र इदं वार्तिकम् एव शरणम्।

यदा गुप्धातोः उत्तरम् आयप्रत्ययो न जातः तदा 'धातोः' इत्यनेन धातुस्वर एव उदात्त आसीत्। तत आयप्रत्यये जाते आयप्रत्ययस्य पश्चात् प्रवृत्तत्वात् आगमनाद् वा सतिशिष्टत्वम्। अत आयप्रत्ययस्य यः स्वरः ( आद्युदात्तत्वम् ) स एव धातुस्वरं नाशयित्वा प्राधान्येन वर्तते। पुनः 'सनाद्यन्ता—' इत्यनेन 'गोपाय' इत्यस्य धातुत्वे सति 'धातोः' इत्यनेन विहितो यः स्वरः स 'आद्युदात्तश्च' इत्यनेन विहितात् स्वरात पश्चात् प्रवर्तते। अतः सः सतिशिष्टस्वरः। पूर्वं हि प्रत्ययेन 'गोपाय' इति निष्पन्ने पश्चात् 'सनाद्यन्ता धातवः' इत्यनेन तस्य धातुसंज्ञा भवितुम् अर्हति। अतः सतिशिष्टस्य धातोः 'धातोः' इत्यनेन यः स्वरः अन्तोदात्तः यकारगतः अकारः स एव पूर्वोक्तो उदात्तस्वरा बाधित्वा प्राधान्येन वर्तते। अयम् उदात्तः अकार· 'शप्' इत्यस्य अनुदात्तेन अकारेण सह मिलित्वा 'अतो गुणे' इत्यनेन अकारो जातः। अयम् एकादेशसम्भूतः अकारोऽपि 'एकादेश उदात्तेनोदात्तः' इत्यनेन उदात्तभूत ।

एवम् अस्माभिः कतिपयसूत्रैः वैदिकस्वरनिर्णयप्रकारस्य दिङ्मात्रम् इह आलोचितम्। सम्प्रति वयम् ऋग्वेदस्य आदौ वर्तमानानां केषाञ्चन सूक्तानां कानिचन पदानि उद्धृत्य तेषु पदेषु स्वरसञ्चारप्रक्रियां प्रदर्शयितुं प्रयत्नं कुर्मः।

2 2 1 3 4

(क) रत्नधातमम्—रत्नानि दधाति इति विग्रहे रत्न+धा+क इत्यनेन रत्नधाशब्दो निष्पन्नः। 'गतिकारकोपपदात् कृत्' इत्यनेन उत्तरपदप्रकृतिस्वरत्वम् अत्र प्राप्तम्। कप्रत्ययान्तः धाधातुः अत्र उत्तरपदम्। सतिशिष्टस्य प्रत्ययस्य 'आद्युदात्तश्च' इत्यनेन विहितः उदात्त एव उत्तरपदस्य स्वरः। अयम् उदात्तः धातोः अनुदात्तेन अकारेण सह एकादेशमापन्नोऽपि 'एकादेश उदात्ते—' इत्यनेन उदात्तः। ततः रत्नधा + तमप् + अम् इति स्थिते अम् विभक्तेः 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वम्। तमप् प्रत्ययस्य अपि तथा। अतो रत्नधाशब्दस्य यः स्वरः स एव स्थितः। 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन तकारगतः अकारः स्वरितः। 'स्वरितादनुदात्तानां परेषां

प्रचयः स्वरः' ( ३।१६ ) इति ऋक्प्रातिशाख्यवचनात् मकारगतः अकारः प्रचयनामकस्वरयुक्तः ।

2 1 3

(ख) दाशुषे—दाश्+क्वसु+ङे इत्यनेन इदं पदं निष्पन्नम् । तत्र 'ङे' इत्यस्य 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वम् । क्वसुप्रत्ययस्य वकारगतः अकारः अधुना उकारापन्नः 'आद्युदात्तश्च' इत्यनेन उदात्तः । 'धातोः' इत्यनेन दाश्धातोः आकारस्य उदात्तत्वं 'सतिशिष्टस्वर—' इत्यनेन बाधित्वा प्रत्ययस्वर एव स्थितः । 'अनुदात्तं पदमेकवर्जम्' इति परिभाषया शिष्टयोः अनुदात्तत्वम् । स्वरितः पूर्ववत् ।

2 2 1

(ग) सुन्वतः—सु+नु+शतृ+ङस् इत्यनेन पदम् इदं सिद्धम् । सु+नु+शतृ इति अवस्थायाम् 'सतिशिष्ट—' इति परिभाषाबलात् 'आद्युदात्तश्च' इत्यनेन शतृप्रत्ययगतः अकारः ( शतृ = अत् ) उदात्तः । एवं 'सुन्वत्' इति शब्दः शतृप्रत्ययान्तः अन्तोदात्तश्च । ततः 'शतुरनुमो नद्यजादी' इत्यनेन 'ङस्' इति विभक्तेः अकारः उदात्तः । सतिशिष्टस्वरत्वात् स एव विभक्तेः अकार उदात्तः । अनुदात्तत्वं पूर्ववत् ।

2 1 3

(घ) वाघतः—वाघत्+ङस् इति स्थिते विभक्तेः 'अनुदात्तौ सुप्— इत्यनेन अनुदात्तत्वे 'वाघत्' इत्यस्य घकारगतः अकारः फिषोऽन्त उदात्तः' इत्यनेन उदात्तः । अनुदात्तः स्वरितश्च पूर्ववत् ।

1 3 4 4

(ङ) स्वसराणि—स्वः सरो येषां तानि इति विग्रहे स्वसरशब्दो निष्पन्नः । 'बहुव्रीहौ प्रकृत्या—' इत्यनेन पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदस्य 'फिषोऽन्त' इत्यनेन उदात्तत्वम् । स्वसर+शस् इति स्थिते 'स्वसराणि' इति पदं निष्पन्नम् । तत्र विभक्तेः पूर्ववत् अनुदात्तत्वे जाते बहुव्रीहिसमासस्य स्वर एव स्थितः । पूर्ववत् शिष्टानाम् अनुदात्तत्वे जाते स्वरितः प्रचयश्च पूर्ववत् ।

2 1 3

(च) अप्तुरः—अपः तुतुरति इत्यर्थे अप्—तुर्+क्विप्+जस् इत्यनेन

पदम् इदं सम्भूतम् । विभक्तेः क्विप्प्रत्ययस्य च 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वे जाते कारकस्वरापेक्षया धातुस्वरस्य सतिशिष्टत्वात् धातोः इत्यनेन उकार उदात्तः । अनुदात्तः स्वरितश्च पूर्ववत् ।

213

(छ) सातये—सन्+क्तिन् इत्यनेन सातिशब्दः सम्पन्नः । 'ञित्यादि—इत्यनेन तस्य आद्युदात्तत्वे प्राप्ते 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इत्यनेन क्तिन्प्रत्ययः ( =प्रत्ययस्य इकारः ) उदात्तः । साति+ङे इति स्थिते 'सातये' इति पदं निष्पन्नम् । तत्र विभक्तेः पूर्ववत् अनुदात्तत्वे प्रत्ययस्वर एव स्थितः । अनुदात्तः स्वरितश्च पूर्ववत् ।

2213

(ज) पुरुतमम्—पुरून् (बहून् शत्रून्) तमयति ( =ग्लपयति ) इति विग्रहे पुरु—तम्+अच् इत्यनेन पुरुतमशब्दः सिध्यति । 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरत्वम् अत्र प्राप्तम् । उत्तरपदे 'चितः' इत्यनेन तमशब्दस्य अन्तोदात्तत्वम् । तम् उत्तरपदप्रकृतिस्वरं बाधित्वा 'थाथघञ्—' इत्यनेन अन्तोदात्तत्वम् । तत् अपि बाधित्वा 'परादिश्छन्दसि बहुलम्' इत्यनेन उत्तरपदस्य आदिस्वर उदात्तः । पुरुतम+अम् इति स्थिते विभक्तेः पूर्ववत् अनुदात्तत्वे जाते स एव स्वरः स्थितः । 'परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥' इति वार्तिकमत्र शरणम् । समासे उत्तरपदस्य आदिस्वरः अन्तःस्वरश्च पूर्वपदस्य च अन्तःस्वरः आदिः स्वरश्च उदात्त इति उपलभ्यते सूत्रे बहुलग्रहणात् इति वार्तिकार्थः ।

2 1 4

(झ) वार्याणाम्—वृधातोः ण्यत् प्रत्ययेन वार्यशब्दः निष्पन्नः । 'तित्स्वरितम्' इत्यनेन यकारगतस्य अकारस्य स्वरितत्वे प्राप्ते तद् बाधित्वा 'ईडवन्द—' इत्यनेन आद्युदात्तत्वम् । ततः वार्य+नाम् इति स्थिते विभक्तेः पूर्ववत् अनुदात्तत्वे वार्यशब्दस्य आद्युदात्तत्वम् अव्याहतम् । स्वरितः प्रचयश्च पूर्ववत् ।

2 2 1 3
(ञ) सुतपाव्ने—सुतं पिबति इति विग्रहे सुत—पा + वनिप् + ङे इत्यनेन इदं पदं निष्पन्नम्। विभक्तेः प्रत्ययस्य च 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तता। 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरे प्राप्ते पाधातोः आकार एव 'धातोः' इत्यनेन उदात्तः विभक्तेः प्रत्ययस्य च अनुदात्तत्वात्। स्वरितानुदात्तौ पूर्ववत्।

1 3 4 4 4
(ट) दध्याशिरः—दधिः आशिरः इति पदपाठः। दधि आशीः येषाम् इति विग्रहात् 'बहुव्रीहौ प्रकृत्या—' इत्यनेन पूर्वपदप्रकृतिस्वरत्वम्। पूर्व-पदस्य 'दधि' इत्यस्य धाधातोः किन्प्रत्ययान्तत्वात प्रत्ययस्य च नित्वात् 'ञ्नित्यादि—' इत्यनेन आद्युदात्तत्वम्। दध्याशिर + जस् इत्यनेन 'दध्याशिरः' इति पदं निष्पन्नम्। विभक्तेः पूर्ववत् अनुदात्तत्वे समासस्वर एव स्थितः। स्वरितप्रचयौ पूर्वमिव।

2 1 3
(ठ) उस्रियाः—वस् + रियक् + टाप् + शस् इत्यनेन पदम् इदं निष्पन्नम्। विभक्तेः प्रत्ययस्य च 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वे जाते 'आद्युदात्तश्च' इत्यनेन रकारगतः इकार उदात्तः। धातुस्वरापेक्षया तस्य सतिशिष्टत्वात् स एव बलवान्। अनुदात्तश्च स्वरितश्च पूर्ववत्।

2 2
(ड) अस्य—इदम् + ङस् इति स्थिते 'इदमोऽन्वादेशेऽशनुदात्त-स्तृतीयादौ' इत्यनेन अश् + ङस् इति जाते 'हलन्त्यम्' इत्यनेन शकारस्य लोपे जाते अ + ङस् इति भूते 'टाङसिङसामिनात्स्याः' इत्यनेन अ + स्य इति स्थिते 'अनुदात्तौ सुप्—' इत्यनेन विभक्तिस्थाने यः 'स्य' इति आदेशः सः 'स्थानिवदादेशोत्—' इत्यनेन स्थानिवद् भूत्वा अनुदात्तो जातः। इदं शब्दस्य स्थाने यः 'अश्' इति आदेशः सः 'इदमोऽन्वा—' इति पूर्वोक्तेन सूत्रेण अनुदात्त एव। एवं सर्वानुदात्तम् इदं पदम्। 'ऊडिदं पदा—' इति सूत्रं नात्र प्रवर्तते, तस्मिन् सूत्रे 'अन्तोदात्तत्वात्' इति पदस्यानवृत्तेः। तदनुरोधेन 'सावेकाच—' इत्यपि न प्रवर्तते।

2 1

(ढ) अस्य—इदम् + ङस् इति स्थिते अन्वादेशे असति 'त्यदादीनामः' इत्यनेन इद् अ + ङस् इति भूते 'अतो गुणे' इत्यनेन पररूपे एकादेशे सति इद + ङस् इति जाते 'टाङसि—' इत्यनेन इद + स्य इति स्थिते 'हलि लोपः' इत्यनेन 'इद्' इत्यस्य लोपे अ + स्य इति भूते 'ऊडिद'—' इत्यनेन विभक्तेः उदात्तत्वम्। शिष्टस्य अनुदात्तत्वम् 'अनुदात्तं पदमे—' इति परिभाषया सिद्धम्।

2 2 2 1

(ण) चोदयित्री—चुद् + णिच् + तृच् इत्यनेन चोदयितृशब्दो निष्पन्नः। सतिशिष्टत्वात् तृच्प्रत्ययस्य स्वर एव बलीयान। 'चितः' इत्यनेन चोदयितृ-शब्दः अन्तोदात्तः। ततः चोदयितृ + ङीप् इति स्थिते ङीपप्रत्ययस्य 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वे प्राप्ते तद्बाधित्वा 'उदात्तयणो हल्पूर्वात्' इत्यनेन उदात्तत्वम् एव तस्य।

अस्य सूत्रस्य अयम् अर्थः—यः स्वरः उदात्तः यदि कारणवशात् तस्य स्वरवर्णस्य स्थाने 'यण्' (=य्, व्, र्, ल्,) इति आदेशो भवेत् अस्मात् च पूर्वं व्यञ्जनवर्णं किमपि स्यात् तर्हि तस्मात् यणादेशात परं विद्यमाना नदी शसादिश्च विभक्तिः उदात्ता भवति। 'उदात्तस्वरितयोर्यणः—' इति सूत्रं बाधित्वा इदं सूत्रं प्रवर्तते।

चोदयित्री + सु इति स्थिते 'हल्ङयाब्भ्यो—' इत्यनेन 'सु' इत्यस्य लोपः।

3 4 4   1

(त) न्योकसे—पदपाठे निऽओकसे इति दृश्यते। नि (= नियमितम्) ओकः यस्य स इति विग्रहे 'न्योकाः' (>न्योकस्) इति पदम्। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यनेन पूर्वपदप्रकृतिस्वरत्वम्। पूर्वपदस्य 'नि' इत्यस्य निपाता आद्युदात्ताः' इति फिट्सूत्रेण उदात्तत्वम्। नि + ओकस् इति स्थिते 'इको यणचि' इत्यनेन न्य् + ओकस् इति जाते 'उदात्तस्वरितयोर्यणः स्वरितोऽ-नुदात्तस्य' इत्यनेन ओकारस्य स्वरितत्वम्। शिष्टयोः अनुदात्तत्वम् 'अनुदात्तं पद—' इत्यनेन सिद्धम्। अन्वयः पूर्ववत् सिद्धः।

'उदात्तस्वरितयोर्यणः—' इति सूत्रस्य उदात्तस्थाने स्वरितस्थाने च या यणादेशः ततः परस्य अनुदात्तस्य स्वरितत्वं भवति इत्यर्थः ।

2 2 1

(थ) उरूची...उरु+अञ्च+ङीष्+सु इत्यनेन इद पदं निष्पन्नम् । सतिशिष्टत्वात् प्रत्ययस्वर एव बलवान् । 'आद्युदात्तश्च' इत्यनेन ईकार उदात्तः ।

2 1 3

(द) घृताचीम्—घृतम् अञ्चति (=उदकं प्रापयति) इत्यर्थे घृत+अन्च्+क्विन् इति स्थिते 'अनिदितां हल उपधायाः क्ङिति' इत्यनेन उपधाभूतस्य नकारस्य लोपे घृत—अच्+क्विन् इति जाते क्विन्प्रत्ययस्य किमपि न शिष्यते इति हेतोः घृत+अच् इति भूते 'गतिकारको—' इत्यनेन उत्तरपदप्रकृतिस्वरत्वं प्राप्तम् । उत्तरपदे 'धातोः' इत्यनेन अकार उदात्तः । ततः स्त्रीत्वविवक्षयाम् 'अञ्चतेश्चोपसंख्यानम्' इत्यनेन घृत+अच्+ङीप् इति स्थिते 'अचः'' इत्यनेन अकारस्य लोपे चौ' इत्यनेन पूर्वं वर्तमानस्य तकारगतस्य अकारस्य दीर्घत्वम् । ङीप्प्रत्ययः 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तः । ततः पूर्वं वर्तमानस्य समासस्य यः स्वर उदात्त आसीत् स तु 'अच इत्यनेन लुप्तः । अतः 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीप्प्रत्ययस्य एव उदात्तत्वे प्राप्ते 'चौ' इत्यनेन अपरेण सूत्रेण पूर्वपदस्य अन्तोदात्तत्वं सिद्धम् । घृताची+अम् इत्यनेन 'घृताचीम्' इति पदं सिद्धम् । विभक्तेः 'अनुदात्तौ सुप्—' इत्यनेन अनुदात्तत्वे घृताचीशब्दस्य यः स्वरः पूर्वम् उक्तः स एव स्थितः ।

'अनुदात्तस्य च यत्रोदात्तलोपः' इति सूत्रस्य अयम् अर्थः । यस्मिन् उदात्ते परे सति पूर्ववर्ती उदात्तो लुप्तो भवति तस्य अनुदात्तस्य आदिस्वर उदात्तो भवति इति ।

'चौ' इति सूत्रस्य अयम् अर्थः । अञ्चधातोः नकारस्य लोपे जाते तस्मिन् नकाररहिते अञ्च्धातौ परतः पूर्ववर्तिनः पदस्य अन्तं वर्णम् उदात्तं भवति इति । 'अनुदात्तस्य यत्रो—' इत्यस्य बाधकम् इदं सूत्रम् ।

2 1

(ध) अङ्ग—'निपाता आद्युदात्ताः' इत्यनेन आद्युदात्तत्वे प्राप्ते स्वरादिगणे यथा—स्वर्, प्रातर्, अन्तर्, इत्येते अन्तोदात्तप्रकरणे पठिताः, तथा अयम् अपि शब्दः पठितव्यः स्वरादिगणस्य आकृतिगणत्वात्। यद्वा 'एवादीनामन्तः' ('एवमादीनामन्त.'इति पाठान्तरम्) इत्यनेन अन्तोदात्तत्वम्।

सायणाचार्येण तु 'निपातत्वेऽपि अभ्यादित्वादन्तोदात्तम्' इत्युक्तम्। इदं तु अस्माकं मते समीचीनं न प्रतिभाति। प्रथमतः 'उपसर्गाश्चाभिवर्जम्' इति आद्युदात्तविधायके सूत्रे 'अभ्यादि' इति तु न उक्तम् केवलम् 'अभि' इत्यस्य आद्युदात्तत्वं निषिद्धम्। द्वितीयं कारणम् इदं यत् अभ्यादिगणोऽपि यावज्ज्ञानं व्याकरणशास्त्रे न विद्यते। तृतीयञ्च कारणम् एतद् यत् 'अङ्ग' इत्यस्य उपसर्गत्वम् एव नास्ति। 'प्रादयः' 'उपसर्गाः क्रियायोगे' इत्याभ्याम् प्र, परा, अप, सम, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप इति एतेषाम् एव उपसर्गत्वं स्वीकृतम्। अतः 'अङ्ग' इत्यस्य अभ्यादिगणेन (यदि अभ्यादिगणः तिष्ठेत्) वर्जनस्य प्रसङ्ग एव नास्ति। अतः अभ्यादिगणेन तस्य अन्तोदात्तत्वं कथं प्रसाधयितुं शक्यते।

'दोषावस्तः' इत्यत्रापि अस्माकं यद् वक्तव्यं तद् 'कार्तकौजपादयश्च' इति सूत्रस्य व्याख्यानावसरे उक्तम्।

वेदपुरुषं पाणिनिं सायणञ्च नमस्कृत्य।
प्रारब्धं यद् वृत्तिं वीक्ष्य काशिकां सुबोधिनीञ्च ॥
समाप्तिमगमत्तद्धि वैदिकस्वरालोचनम्।
सारमन्विष्य तत् कृतं श्रीमतामरशर्मणा ॥

---

# पुस्तकालोचनम्

**"समाजसंस्कारक रघुनन्दन"**—डः वाणी चक्रवर्ती, ( ११ कालीकुमार व्यानार्जी लेन, कलिकाता-११ इत्यतो ग्रन्थकर्त्र्या पुस्तकमिदं प्रकाशितम् , मूल्यम् सार्द्धसप्तमुद्रा )।

प्रेयांसो वाचकमहाभागाः, नातिचिरमस्मान् समुपागच्छत् 'समाजसंस्कारकरघुनन्दन' नाम किमप्यभिनवं वङ्गभाषामयं पुस्तकं यद्धि स्मृतिशास्त्रसमालोचनपरया श्रीवाणीचक्रवर्तिस्मृतितीर्थया सम्पादितमास्ते। समालोचनात्मकमेतादृक् पुस्तकं स्मृतिविषयकमितः पूर्वं नैव प्रकाशितमित्यभिनवत्वमस्य सर्वजनविदितमिति मे दृढो विश्वासः। पुस्तकेऽस्मिन् स्मार्त्तरघुनन्दनसमये समाजव्यवस्थाया कीदृश्यवस्थासीत्, सा च तत्कालात् प्रभृति वर्त्तमानं काल यावत् परिवर्त्तिता नवा कथं वा तत्परिवर्त्तनमित्यादीनि तथ्यानि समालोचितानि सम्पादयित्र्या। इदं खलु पुस्तकमादौ प्रबन्धरूपेण प्रकाश्य स्मृतितीर्थयानया कलिकाता विश्वविद्यालयतः डि. फिल्., इत्युपाधिं प्राप्य सम्मानं समधिगतम्। सम्पादयित्र्या पुस्तकेऽस्मिन्नात्मनो विद्यावत्तायाः सुमहत्या बहुधा परिचयः समुपलब्धोऽस्माभिः। न खलु साधारणभावेन शिक्षामधिगत्य समालोचनात्मकमेतादृक् पुस्तकं विरचयितुं प्रभवति कोऽपि जगति। कुलपरम्परागतविद्याविधौतचेतस्तयैव दुष्करमपि कार्यमिदं साधितवतीयं वयसा नवीनापि प्रवीणेव सम्पादयित्री। भाषामाधुर्यं विषयसामञ्जस्यञ्चास्याः सर्वथैव प्रशंसामर्हति विद्वज्जनानाम्। आत्मनो विद्वत्कुलप्रसूतत्वमेतस्याः सहायकमेतस्मिन् सुदुष्करे कर्मणि इति को वा न प्रतिपद्येत। प्राचीनग्रन्थानामीदृग्रूपालोचना चेद् बहुधा स्यात, तदैव संस्कृतजगतो मङ्गलं नान्यथा। वयमन्ते ग्रन्थकर्त्र्याश्चास्याश्चिन्ताप्रसूतं भावि नवनवविषयकमालोचनमुत्प्रेक्षमाणाः परमेशं निकषा मङ्गलमुत्तरोत्तरं कामयामहे।

—श्रीरामधनशास्त्री

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥


| Vol. L. No. 11 | १८८९ शकीये फाल्गुने १३७४ वङ्गाब्दीये ५०तम-वर्षस्य १०म संख्या | March 1968 |
|---|---|---|


# मन्दाक्रान्ता-वृत्तम्

( खण्ड-काव्यम् )

[ निबन्धकः—**महामहोपाध्याय-श्रीकालीपदतर्काचार्यः** ]

[ मन्देन शनिना आक्रान्ताया वृत्तं वृत्तान्तः, अथ च मन्दाक्रान्ता वृत्तं छन्दः, तदधिकृत्य कृतमिति प्रकृतनामार्थनिरुक्तिः । ]

वङ्गप्रान्ते बहुलविदितं पत्तनं कोट्टलाख्यं,
मुख्या यस्मिन् कृतवसतयो ब्राह्मणा लक्षसंख्याः ।
सर्वे मुग्धा इव गुणगुणा यत्र नित्यं वसन्तो,
देशैः काम्यं त्रिदशनगरीसाम्यमुद्भासयन्ति ॥१॥

श्रद्धाविद्धा निखिलजनता यत्र देवद्विजेषु,
क्षेमं वैधं रचयति विधिं नो भ्रमेणाप्यमेध्यम् ।
दूरे भीताऽपसरति यतः पापचिन्ता दुरन्ता,
शक्तः शौर्य्यं प्रथयितुमभून्नो कलिर्यत्र कालः ॥२॥

तत्र प्रातः प्रभृति मनुजा नित्यकृत्येषु लग्नाः,
पङ्के मग्ना भवितुमभितो भेजिरे नावकाशम् ।
नालं भूत्वा यदधिकृतये पापराशिर्निराशः,
क्षोभाद् भेजे कविकुलमतं स्वाश्रितं कृष्णिमानम् ॥३॥

न्यूनाधिक्यं नहि जनगणे यत्र वैधे विधाने,
स्वे स्वे कृत्ये प्रतिजनगता सञ्जिगीषा परेषाम् ।
नो साफल्यं समधिकुरुते तुल्यभावात् समेषां,
तुल्यादृष्टैर्विहितजनुषो नूनमेतत् पुरस्थाः ॥४॥

यत्र प्रीत्या मनुजनिवहः सेव्यमानस्त्रिवर्गो,
व्याघातं नो घटयति मिथस्तुल्यमेवैधमानः ।
भुक्त्वा प्रौढे वयसि विषयान् वार्द्धके यत्र वृद्धाः,
पुत्राद्येषु न्यदधत गुरुस्वीयसंसारभारम् ॥५॥

बाल्ये विद्याभ्यसनमकृशं यौवने वित्तचिन्ता,
वृद्धावस्थामुपगतवतां यत्र धर्मार्थमीहा ।
संस्कारार्थं मलिनमनसो यत्र कृत्यं सकामं,
पूते चित्ते तदनु परमब्रह्मलग्नः समाधिः ॥६॥

विद्यावादाद् बहिरनुदितो यत्र कश्चिद् विवादः,
स्वादो भक्ष्यान्नहि परिचितोऽन्यस्य कस्यापि यस्मिन् ।
प्रातः सायं क्षितिसुरसुतैर्यत्र संस्कारवन्तो,
गीताः पूता विदधति दिशः पावनाः श्रौतमन्त्राः ॥७॥

प्रायो लक्षं क्षितिसुरवराः शैवलिङ्गानि यस्मिन् ,
धुस्तूराद्यैः कुसुमनिवहैर्बिल्वपत्रैस्तथान्यैः ।
शम्भुप्रीत्यै सदुपकरणैः प्रत्यहं पूजयित्वा,
विद्यामिद्धां निखिलजयिनीमाशुतोषाल्लभन्ते ॥८॥

वापीनीरोपरि परिगतं बिल्वपत्रं प्रसूनं,
दूर्वा यस्मिन्नपि पशुपतेः पूजनं व्यञ्जयन्ति ।
पित्र्यं दैवं विहितमुचितं तर्पणं यत्र चार्षं,
पित्रादीनां जनयतितरां तृप्तिमुद्यत्तृषाणाम् ॥९॥

शाक्ताः शैवा विमलमतयो वैष्णवा गाणपत्याः,
सौरा देवान्तररतिभृतो मानवा वा स्वभावात् ।
यत्रान्योन्यं हृदि विजहतो द्वेषलेशं प्रसन्नाः,
स्व-स्वाभीष्टं परमशुभदं देवमाराधयन्ते ॥१०॥

गेहे गेहे गृहपतिगणाः प्राप्तमैत्रीप्रसादा,
यत्रापूर्वं सुखमुपगताः पुण्यशीला लसन्ति ।
दिव्यं भव्यं त्रिदिवविभवं वापि न प्रार्थयन्ते,
मैत्रीपूता स्थितिरतितरामुत्तमा स्वर्गराज्यात् ॥११॥

दुःखं कश्चिद् व्रजति न परं प्रेक्ष्य सौभाग्यवन्तं,
सन्तोऽपृष्टा अपि परहितं व्याहरन्त्यप्रमादम् ।
यत्र प्राप्ते क्वचिदपि महे तत्पुरस्था गृहस्थाः,
कृत्यं सर्वं स्वकमिव समुत्साहतः साधयन्ति ॥१२॥

दाने शूरा धनिकनिकरा यत्र दैन्यावसन्ने,
नावज्ञाया लवमपि दधत्यात्मवित्ताभिमानात् ।
संप्राप्तायां विपदि धनिका दैन्यभाजां जनानां,
साहाय्यार्थं ददति विभवं मेघवर्षानुकारम् ॥१३॥

यस्मिन्नासञ्छतमतिथयोऽप्येकदा धर्मबुद्धया,
श्रद्धादत्तैः सदुपकरणैरर्चिता देवतावत् ।
कृत्वा प्रीत्या गृहपतिगणाः स्वस्तियोग्यं नृयज्ञं,
धर्मैर्धन्या धवलयशसा भूषितैः सर्वकालम् ॥१४॥

प्रीता यस्मिन्नतिथिनिवहाः प्रीतिपूर्णैर्वचोभिः,
पक्वैरामैरपि सुमधुरैर्भोज्यपेयैरनेकैः ।
आशीर्वादं शुभमभिदधुः सत्कृताः सद्गृहस्थैः,
पूजाप्रीताः प्रददति वरं देवता नात्र चित्रम् ॥१५॥

मातापित्रोश्चरणकमलान्यर्चयित्वा प्रभाते,
भूयो भव्यं तनयनिचयो यत्र नित्यं चिनोति ।
प्रीतिं संसाधयितुमनयोः किं न कर्तुं स ईष्टे ?
तत्सम्प्रीतिर्जनयति मुदं सर्ववृन्दारकाणाम् ॥१६॥

पित्रोराज्ञां शिरसि निदधद् यत्र पुत्रप्रतानः,
क्लेशं सर्वं गणयति लघुं तां फलाढ्यां विधातुम् ।
रामं कीर्त्या समभिभवितुं यत्नसीमां दधाति,
प्रत्यक्षौ ताविति च मनुते तत्र देवाद् विशेषम् ॥१७॥

यत्राकांशोरसि परिसृतैः शङ्ख-घण्टादिवाद्यैः,
सुप्तिं देवा जहति मिलितैः प्रातरुत्थानमन्त्रैः ।
नित्यप्राभातिकशिवमयारात्रिकोद्गीर्णधूपै-,
र्दीपालोकैरपि तदुचितैः पीड्तिाक्षा भवन्ति ॥१८॥

सेव्यो देवो निजतुलनयेत्येव यस्मिन्निदाघे,
शालग्रामोपरि सुमनसो वारिधारां सृजन्ति ।
शालग्रामं शिशिरसमये स्नापयित्वाल्पमल्पम् ,
जाड्यं हन्तुं रविकरमये क्वापि संस्थापयन्ति ॥१९॥

पर्वाहेषु प्रमुदितहृदो यत्र भक्तप्रवीणा-,
स्तत्तद्देवार्च्चनमनलसाः शक्तिवत् साधयन्ति ।
पैत्रे दैवेऽपि च विधिमते लेशतो नावहेला,
सन्तो देवानपि पितृगणानादरात् पूजयन्ति ॥२०॥

एको विष्णुः पृथगभिधया श्रीधरः कृष्णचन्द्रः,
ख्यातो रूपैरपि वहुविधैर्यत्र गोविन्ददेवः।
शालग्रामो दधिपरगतो वामनश्चानुभावी,
तत्तत्पूजां विदधति पृथक् सादरं भिन्नवंश्याः ॥२१॥

चण्डी यत्र प्रचितकरुणा पूजिता सिद्धमुख्यैः,
क्षेमं दत्ते भृशमुपगता पञ्चमुण्डीप्रतिष्ठाम्।
नैका मूर्त्तीरधिकृतवती नैकदेशेषु दृश्या,
तत्तद्देशे समनुभवितुं भक्तसङ्घस्य पूजाम् ॥२२॥

काले काले भवति सुमहानुत्सवस्तत्र तत्र,
प्रोत्साहेन द्रविणनिकरैर्भक्तवृन्दैर्वितीर्णैः।
यस्मिन् नानाजनपदजना भक्तिमन्तः समेताः,
सिन्धूच्छ्वासा इव हृदि मुदं पश्यतां वर्त्तयन्ति ॥२३॥

कश्चिद् भक्त्या शिरसि कुरुते देवनिर्माल्यपुष्पं,
कश्चिद् भूमौ प्रणमति शिरो न्यस्य मन्त्रं पठित्वा।
कश्चिद् भक्त्या पिवति शुभदं देवतास्नाननीरं,
कश्चिद् भुङ्क्ते शिवमुपगतं देवतोत्सृष्टमन्नम् ॥२४॥

उच्चैः केचिज्जय-जयरवं कुर्वते भक्तिपूर्वं,
केचित् क्षीरं प्रददति फलं शर्कराखण्डराशिम्।
केचित् पुष्पाण्यथ तुलसिका विल्वपत्राणि केचिद्,
देवालिन्दे तिलमितमपि स्थानमाप्यं न रिक्तम् ॥२५॥

उच्चैर्मन्त्रान् पठति विदधद्देवतार्चां पुरोधाः,
काले चारात्रिकमपि जनाह्लादनं संविधत्ते।
उद्यद्घण्टा-पटहमुरली-कांस्य-शङ्खादिनादै-,
र्नत्वा देवं कुशलनिचयं याचते स्तोत्रमन्त्रैः ॥२६॥

पूजाकृत्ये समुचितमिहासाद्यते वस्तु सर्वं,
शास्त्रे यद् यद् विहितमभवत् कस्यचिन्नानुकल्प. ।
मन्त्रे शुद्धिः क्रमसमुदयः कर्मणामव्यपेतो,
यद्‌यद्योगाद् भवति परमापूर्वसृष्टिः क्रियाभ्यः ॥२७॥

आद्या विद्या भवति मनुजैः पूजिता यत्र सद्भि-,
र्योग्यारम्भैर्वलिभिरतुलैः पञ्चमुण्डीनिरूढ़ा ।
यस्मिन् लोकाः प्रियकविपदे रम्यसङ्गीतबन्धे-,
स्त्यक्ताहाराः स्वपनरहिताः स्वाद्रधारां पिबन्ति ॥२८॥

दूराद् दूरान्मनुजनिकरास्तस्य गीतस्य रागात् ,
तत्रायाता दिवसरजनीज्ञानहीना भवन्तः ।
वैरात् पत्नद्वयविरचितं काव्यमास्वादयन्तः,
सर्वां दूरागमनजनितां दुर्गतिं विस्मरन्ति ॥२९॥

स्त्रीणां पत्नद्वयभृतिजुषां दिव्यपीयूषतुल्यं,
प्राणारामं मधुर-मधुरं गीतमाकर्णयन्तः ।
ध्यायन्तीत्थं किमु वयमहो स्वर्गवाराङ्गणानां,
भाग्याद् गीतामृतमुपनतं काम्यमास्वादयामः ॥३०॥

केचिद् गीतामृतमधुरिमास्वादसंमुग्धचित्ता-,
स्तारुण्येन प्रचितवपुषां योषितां रूपकृष्टाः ।
दष्टाः संकल्पजविषधरेणान्तरालं श्रयन्त-,
स्ताभिः सौम्यप्रणयवचनं सादरं वर्त्तयन्ति ॥३१॥

गीतं यावत् सुमधुरमहो जायतां तत्र पुंसाम् ,
औदासीन्यं श्रयति जनता तत्र जात्या विमुग्धा ।
दृष्ट्वा भावं तमिममसमं गीतिदक्षाः पुमांसो,
नारीभावं कुरु परभवे देवमित्यर्थयन्ते ॥३२॥

देवीपूजाङ्गनपरिसरः सोत्सवे तत्र काले,
स्रोतःस्रस्तैरज-महिषयोर्मेषकाणाञ्च रक्तैः ।
पङ्काकीर्णः प्रपतनभयान्मानवानामगम्यः,
केचिद् भक्ताः शिरसि तिलकं कुर्वते प्रान्तभागात् ॥३३॥

दृष्ट्वा रक्तं जलदसमयस्याम्बुवत् सम्प्रसृतं,
केचिन्मत्ता इव परिसरे तत्र गाढं लुठन्तः ।
रक्ताक्ताङ्गा विकटवपुषः प्रेतवत् सम्प्रतीता,
बालादीनां भयमतितरां मानसे भावयन्ति ॥३४

श्रीश्रीचण्डीस्तुतिशतभृतः पाठतः सप्तशत्या-,
स्तस्मिन् पूजोत्सवसुदिवसे शून्यमार्गे पवित्रे ।
नूनं देवा मुनिपरिवृताः सिद्ध-साध्याश्च सर्वे,
श्रोतुं देव्याः स्तुतिमुखकथाः सङ्घशः सम्पतन्ति ॥३५॥

वामे देवी निजकरयुगे भीमखड्गं नृमुण्डं,
धृत्वा दक्षेऽपि च करयुगे शं वराभीतियुग्मम् ।
एकैवासौ शिवमथ महारौद्रमादाय रूपं,
दुष्टध्वंसं गमयति समं शिष्टभव्यञ्च कृत्यम् ॥३६॥

ब्रह्मध्यानादुदयति नृणां भोगहीनोऽपवर्गो,
देवी ध्याता वितरति समं भुक्तिमुक्ती प्रसन्ना ।
तस्मान् मुक्त्वा शिवमपि परब्रह्म सर्वार्थसिद्ध्यै,
युग्मप्रीत्या गिरिशदयितां यत्र भक्ताः श्रयन्ते ॥३७॥

संख्यातीता निशितमतयो यत्र धीराः स्वगेहे,
दत्वाहारं वसतिमपि चासंख्यशिष्योत्तमेभ्यः ।
विद्यादानान्नियतमनयन् वृद्धिमात्मीयविद्यां,
विद्याविते द्रविणनिकरादेष भेदोऽपरस्मात् ॥३८॥

यत्र श्रुत्वाभ्यसननिरतच्छात्रसन्दर्भपाठं,
सव्यत्यासं नयति तमिमं शुद्धिमत्यन्तवालः ।
लज्जानम्रः पठति च पुनः सोऽनुदात्तस्वरेण,
किं नामेदं विदितमपरेणेति पार्श्वाणि पश्यन् ॥३९॥

न स्वल्पोऽपि प्रलयमयते कर्मणान्येन काल-,
स्त्यक्त्वा शास्त्रप्रचयमननं शिष्यकाध्यापनं वा ।
औदासीन्यं दधति नियतं गेहकृत्यप्रपञ्चे,
नापेक्षन्ते विषयमपरं ज्ञानपीयूषमग्नाः ॥४०॥

शिष्यः पुत्रादपि गुरुतरस्नेहभाग् यत्र काम्यो,
विद्यामानादपरमधिकं मन्यते नो विपश्चित् ।
शास्त्रार्थेषु क्वचिदपि यदा संशयो जागरूकः,
सुप्तिं हित्वाशनमपि तदा चेष्टते तं निहन्तुम् ॥४१॥

पातुं पुष्पान्मधु मधुकरा यद्वदायान्ति दूरात्,
तद्वद् विद्यारसिकनिकरा यत्र दिग्भ्यः पतन्ति ।
तोयं वर्षाजलमुच इव त्यक्तकार्पण्यलेशं,
धीरा विद्या ददति नियतं तेभ्य आगन्तुकेभ्यः ॥४२॥

विद्यागेहे क्वचिदुपगते भिन्नविद्यालयस्थ
छात्रे जेतुं तमतियतते यत्र विद्यार्थिसङ्घः ।
तेनात्यर्थं मनसि गुरवो गौरवं धारयन्ते,
शिष्याणां यो विजयगरिमा सोऽयमास्ते गुरूणाम् ॥४३॥

यत्र च्छात्रानहनि भृशमध्याप्य तर्कादिशास्त्रं,
रात्रौ भूयो विदधति बुधास्तद्गतां शिष्यशिक्षाम् ।
प्रज्ञा यावन्नहि समुदिताध्येयतत्त्वे समग्रा,
तावद् द्विस्त्रिस्तदतिगहनं शास्त्रतत्त्वं निवेद्यम् ॥४४

यस्मिन् दीना अपि बुधगणा वत्सरस्यार्द्धभागं,
भिक्षावृत्त्यापरजनपदाद् द्रव्यमासादयन्तः।
छात्राहारप्रभृतिविषयान् साधयन्ते कथञ्चित्,
विद्याप्रीतिः खलु विजयिनी सर्वदुःखापहन्त्री ॥४५॥
यस्मिंश्चित्रा परिणयसभा वैदिकब्राह्मणानां,
दैवी वाणी प्रवहति यतः पूतगङ्गापयोवत्।
कन्यापक्षो वरपरिषदं जेतुकामः सगर्वं,
प्रश्नं ब्रूते वरपरिषदा साध्यते तत्समाधिः ॥४६॥
यस्मिन् कस्मिन्नपि च सुमहत्युत्सवे सम्प्रपन्ने,
सम्मानार्थं परजनपदावासिनां पण्डितानाम्।
आहूतानां विजयविधये सुप्रबन्धो बुधानां,
विद्यावित्ते विपुलविपुलं गौरवं सम्प्रसूते ॥४७॥
यस्मिन् दासा अपि मतिमतां गौरवेण प्रभूणाम्,
अग्रे दासान्तरपरिषदो गर्वमुद्भासयन्ति।
नाल्पस्तापस्तपनकिरणोत्तापितप्रस्तराणां,
राज्ञस्तेजो जनयति किलामात्यतेजो जगत्याम् ॥४८॥ ( क्रमशः )

# भारतस्य संविधानं पद्यमयम्

[ निबन्धकः—श्रीएम्. एम्. दवे ]

( पूर्वानुवृत्तम् )

## भागस्तृतीयः

॥ मूलाधिकाराः ॥

—साधारणम्—

१२। **परिभाषा—** ( शार्दूलविक्रीडितम् )

भागेऽस्मिंश्च प्रसंगकारणतया नापेक्षितं चान्यथा।
स्याच्चेद्भारतशासनं किल पुनः संघस्य वै संसदम् ॥

प्रत्येकश्च विधानमंडलमथो राज्यस्य वै शासनम्
स्थानीयानधिकारिणस्त्वथ पुनश्चाभ्यंतरान् भारते ॥
अन्ये भारतशासनस्य किल वाधीनाश्चये तान् पुनः ।
अन्तर्भावयति ह्यथो पुनरसौ राज्येतिशब्दः सदा ॥

## १३। मूलाधिकारैरसंगतास्तेषामपकर्षका वा विधयः—

( अनुष्टुप् )

(१) अव्यवहितपूर्वं च संविधानस्य चास्य च ।
प्रारंभाद्ये च प्रवृत्ता विधयः सन्ति भारते ॥
भागस्यास्योपबंधैश्च तेषां ये स्युरसंगताः ।
सर्वे शून्या भवेयुस्ते यावन्मात्रं ह्यसंगताः ॥

(२) राज्यं न प्रणयेद्विधि कमपि तं त्वेतेन भागेन यो
दत्तांश्चापहरत्यथोऽल्पयति वा मूलाधिकारान् विधिः ।
उल्लंघ्यैव च खंडमेनमथ यो यावत् प्रणीतो भवेत्-
तावन्मात्रमसौ भवेत् किल विधिः शून्यश्च वै सर्वथा ॥

३ (क) अन्यथापेक्षितं चेन्न प्रसंगेन भवेत्तदा ।
अनुच्छेदे च ह्येतस्मिन् 'विधि' शब्दस्तु सर्वथा ॥
अन्तर्भावयते सर्वान् प्रवृत्तान् विधिवत् किल ।
राज्यक्षेत्रे भारतस्य अध्यादेशांस्तथैव च ॥
नियमोपविधींश्चैव आदेशानधिसूचनाः ।
रूढीर्विनियमाश्चैव प्रथाः सर्वास्तथैव च ॥

(ख) भारते चैव केनापि विधानमंडलेन च ।
अन्येन केनचिद्वापि क्षमेण प्राधिकारिणा ॥
प्रारंभात् संविधानस्य पूर्वमेतस्य क्वापि च ।
प्रणीतान् पारितान् पूर्वं चानिरस्तान् विधींस्तथा ॥
अन्तर्भावयते चैव "प्रवृत्ता विधयः" किल ॥

यद्यप्येतादृशः कोऽपि विधिर्भागश्च तस्य वा ।
सर्वथा वा विशिष्टेषु क्षेत्रेषु केषुचित् तदा ॥
प्रवृत्तो भारते स्याद्वा न प्रवृत्तस्तथापि च ।
एतत् शब्दसमूहस्तु अंतर्भावयते च तम् ॥

## समताया अधिकारः

**१४। विधिसमक्षे समता—**

राज्यक्षेत्रेऽस्य देशस्य राज्यं कमपि नो जनम् ।
कुर्याद्विधिसमक्षे च समताया विना कृतम् ॥
समसंरक्षणाद्वापि विधीनां वा विनाकृतम् ॥

**१५। धर्मस्य मूलवंशस्य जातेर्लिंगस्य जन्मनः स्थानस्याधारतो वा विभेदस्य प्रतिषेधः—**

(१) राज्यं नापादयेच्चैव कंचिन्नागरिकं प्रति ।
विभेदं केवलं जातेर्जन्मस्थानस्य वा पुनः ॥
मूलवंशस्य वात्वेवं लिंगस्याधारतोऽथवा ।
आधारतोऽथवा तेषां कस्याप्यन्यतमस्य वा ॥

२ (क) मनोरंजनस्थानानि वा भोजनगृहाणि च ।
स्युः सार्वजनिकान्यानि तेषु चैवापणेषु च ॥
विश्रामस्यालयेष्वेवं प्रवेशविषये तथा ॥

(ख) अंशतः पूर्णतो वा ये स्यू राज्यनिधिपोषिताः ।
उपयोगाय लोकानां साधारणतया च ये ॥
समर्पिताश्च कूपाः स्युस्तडागानि तथैव च ।
यानि मेलनस्थानानि स्युस्सार्वजनिकानि च ॥
एतेषामुपयोगे च मार्गाणां च तथैव च ।
एवं च स्नानतीर्थानामुपयोगे कदाचन ॥

केवलं जन्मस्थानस्य जातेर्वाधारतस्तथा ।
मूलवंशस्य वा त्वेवं लिंगस्याधारतोऽथवा ॥
आधारतोऽथवा तेषां कस्याप्यन्यतमस्य वा ।
अधीनो न भवेच्चैव कोऽपि नागरिकः कदा ॥
कस्या अपिच निर्योग्यताया निर्बंधनस्य वा ।
दायित्वस्य च कस्यापि प्रतिबंधस्य वा पुनः ॥

(३) गतं किमपि वैतस्मिन् अनुच्छेदे तु सर्वथा ।
कृते स्त्रीणां च बालानां करणान्नैव कस्यचित् ।
विशेषस्योपबंधस्य राज्यं प्रति निवारयेत् ॥

१६। राज्याधीनाया नियोजनाया विषयेषु अवसरसमता—

( उपजातिः )

(१) पदान्यधीनान्यथ संति यानि
राज्यस्य कस्मिन्नपि वाथ तेषाम् ।
नियोजनायाश्च तथा नियुक्तेः
संबंधिनो ये विषयाश्च तेषु ।
सर्वे च ये नागरिका भवेयु-
स्तेषां कृते चावसरः समः स्यात् ॥

(२) पदं च राज्यस्य यदस्त्यधीनं
कस्यापि तस्याथ तदात्मिकायाः ।
नियोजनाया विषये तथैव जातेः
लिंगस्य धर्मस्य तथोद्भवस्य ।
वा मूलवंशस्य तथाच जातेः
निवासस्थानस्य च जन्मनो वा ।
स्थानस्य चाधारतया कदाचित्
आधारतो वान्यतरस्य तेषाम् ।

अपात्रता नागरिकस्य न स्यात्
नापादितस्तं प्रति वा विभेदः ॥

(३) गतं किमपि चैतस्मिन्ननुच्छेदे निवारयेत् ।
प्रणेतुं संसदं नैव विधिं कमपि यो विधिः ॥
पदेऽधीने च कस्यापि राज्यस्य शासनस्य वा ।
संघस्य राज्यक्षेत्रस्य शासनस्य तथैव च ॥
अभ्यंतरं च वा तेषां कस्यापि प्राधिकारिणः ।
स्थानीयस्याथवान्यस्य अधीने कस्यचित् पदे ॥
नियुक्तेश्चैव संबंधे तादृशी वा नियोजना ।
या स्यात्तस्याश्च संबंधे तत्प्रकारस्य वा तथा ।
प्रकाराणां च संबंधे नियुक्तेः पूर्वमेव हि ।
पूर्वं नियोजनायाश्च एतादृश्यास्तथैव च ॥
तस्मिन्राज्ये निवासस्य संघस्य च तथैव च ।
राज्यक्षेत्रे निवासस्य अपेक्षां विदधाति च ॥

(४) राज्याधीनासु सेवासु तद्राज्यस्य मते किल ।
स्यान्नागरिकवर्णस्याप्रगतस्य च कस्यचित् ॥
यदि प्रतिनिधित्वं चापर्याप्तं तर्हि तत्कृते ।
नियुक्तीनां पदानां वा रक्षणार्थं न कस्यचित् ॥
उपबंधस्य करणात् गतमस्मिंश्च यद्भवेत् ॥
अनुच्छेदे किमप्येतद् राज्यं प्रति निवारयेत् ॥

(५) कस्याश्चित् सांप्रदायिक्या धार्मिक्या वा तथैव च ।
संस्थायाः कार्यसंबंधे पदधारी च यो जनः ॥
एतच्छासि निकायस्य सदस्यो वा भवेच्च यः ।
भवेद् धर्मविशेषस्य अनुयायी स कस्यचित् ॥
इति करोति यः कोऽपि विधिश्चेदुपबंधनम् ॥

आपादयेत्प्रभावं तु नैव तस्य प्रवर्तने ।
अनुच्छेदे गतं चास्मिन् भवेत् किमपि तत् किल ॥

## १७। अस्पृश्यताया निराकरणम् (शार्दूल विक्रीडितम्)

एतेनैव निराकृता भवति वै चास्पृश्यता सर्वथा
तस्या आचरणं निषिध्यत इतः केनापि रूपेण वा ।
तस्याः कापि तथोद्भवेदपि तु वा निर्योग्यता कुत्रचित् ।
तस्याश्चैव प्रवर्तनं तु विधिना दण्ड्योऽपराधो भवेत् ॥

## १८। संमानपदानां निराकरणम्—

(१) प्रदीयेत न राज्येन तत्संमानपदं तु यत् ।
वैशिष्ट्यं स्यान्न सेनाया विद्याया विषयेऽथवा ॥

(२) स्वीकारं नैव कस्यापि संमानस्य पदस्य तु ।
राज्याद्वैदेशिकात् कुर्यात् कस्मादपि जनस्तु सः ।
भारतीयस्य संघस्य नागरिको भवेत्तु यः ॥

(३) भारतस्य च यो नास्ति नागरिकश्च तादृशः ।
विश्वासस्याथवा त्वेवं लाभस्य कोऽपि वा जनः ॥
राज्याधीनं पदं यावत् किमपि धारयन् भवेत् ।
तावद् वैदेशिकाद्राज्यात् कस्मादपि जनस्तु सः ॥
स्वीकुर्याद्धि पदं नैव संमानस्य च किंचन ।
कदाचिदपि राष्ट्रस्य पतेस्तु संमतिं विना ॥

(४) विश्वासस्याथवा कोऽपि जनो लाभस्य वा तथा ।
राज्याधीनं पदं यावत् किमपि धारयन् भवेत् ।
स्वीकुर्यान्नैव तावत्स राज्याद्वैदेशिकात् किल ।
पदं केनाऽपि रूपेण वोपलब्धिमुपायनम् ।
किमपि वाथ राष्ट्रस्य पतेरनुमतिं विना ॥

## स्वतंत्रताया अधिकारः

### १९। वाक्स्वातंत्र्यादिविषयकाणामधिकारविशेषाणां संरक्षणम्—

( शार्दूलविक्रीडितम् )

(१) तेषां, नागरिकाश्च संति किल ये, ह्येतेऽधिकाराः स्युः—

(क) वाचश्चैव स्वतंत्रता पुनरभिव्यक्तेर्विचारस्य च ।

(ख) एवं शांतिपुरःसरं ह्यथ पुनर् निःशस्त्रसमेलने ।

(ग) संस्थानां च स्वतंत्रताविरचने संघस्य वै स्थापने ।

(घ) संचारो ह्यथ वाधया विरहितः सर्वत्र वै भारते ।

(ङ) राज्यानामथ भारतस्य च तथा क्षेत्रस्य कस्यापि वा ।
भागे वा स्थिरवास एवमपि वा कस्मिन्निवासेऽथवा ।

(च) संपत्तेरथ धारणे च व्ययने एवं च वा ह्यर्जने

(छ) स्वातंत्र्यं ह्यनुवर्तने भवति वै वृत्तेश्च कस्या अपि
व्यापारे ह्युपजीविकानुसरणे कार्ये च कस्मिन्नपि ॥

(२) खंडस्य प्रथमस्य यत्किमपि वा स्यात्खोपखंडे गतं
राज्यं तन्न निवारयेत्प्रणयनात् कस्यापि वा तद्विधेः
प्रवृत्तिं किल तद्विधेर्न तु स्पृशेद् यो वर्तमानो भवेत्
शिष्टानां च तथा सतां भवति य आचार एतादृशः
आचारश्च तथाऽपराधकरणे चोत्प्रेरणा कर्म वा
मैत्री वाथ विदेशराज्यविषया राज्यस्य रक्षा तथा
वा न्यायालयमानभंगविषयो वा मानहानिस्तथा
एतेषां कतमस्य सार्वजनिका यास्ति व्यवस्था तथा
तस्याश्चैव विधिर्हिताय च यथा स्याद्युक्तियुक्तं तथा
यश्चास्ति ह्यथ खोपखंडलिखितस्तस्याधिकारस्य च
यद्यारोपयते प्रयोगविषये निर्बंधनान्येष चेत् ॥

(३) खंडस्य प्रथमस्य यत् किमपि वा स्यात्खोपखडे गतम् ।
राज्यं तन्न निवारयेत् प्रणयनात् कस्यापि वा तद्विधेः ।

प्रवृत्तिं किल तद्विधेर्न तु स्पृशेद् यो वर्तमानो भवेत् ।
यावद्वै स विधिस्तु सार्वजनिका या च व्यवस्था भवेत् ॥
एतस्याश्च हितार्थमेव तु यथा स्याद्युक्तियुक्तं तथा ।
यश्चास्ति ह्यथ खोपखंडलिखितो मूलाधिकारश्च वै ।
तस्यारोपयति प्रयोगविषये निर्बंधनान्येव च ॥

(४) खंडस्य प्रथमस्य चास्ति किमपि यद् गोपखंडे गतं
राज्यं तन्न निवारयेत् प्रणयनान् कस्यापि वा तद्विधेः ।
प्रवृत्तिं किल तद्विधेर्न तु स्पृशेद् यो वर्तमानो भवेद्
यावद्वै स विधिस्तु सार्वजनिका या च व्यवस्था भवेत्-
तस्याश्चैव हितार्थमेव च सदाचारस्य वारोपयेत् ।
निर्बंधांश्च यथा प्रयोगविषये स्याद्युक्तियुक्तं तथा
यश्चास्ति ह्यथ गोपखंडलिखितस्तस्याधिकारस्य च ॥

(५) घे ङे चे प्रथमस्य चास्ति किमपि यत्तूपखंडेषु च
राज्यं तन्न निवारयेत्प्रणयनात् कस्यापि वा तद्विधेः ।
प्रवृत्तिं किल तद्विधेर्न तु स्पृशेद्यो वर्तमानो भवेत्
निर्दिष्टाश्च तथा भवंति किल ये उक्तोपखंडेषु च ॥
तेषामन्यतमस्य कस्यचिदथ चेन् मूलाधिकारस्य तु
यद्यारोपयते प्रयोगविषये कश्चिद् विधिस्तादृशः ।
संरक्षार्थमथो हिताय च यथा स्याद्युक्तियुक्तं तथा
निर्बंधा ननु सूचितादिमनृणा कस्यापि जातेस्तथा ।
संरक्षार्थमथो हितार्थमथवा लोकस्य सामान्यतः ॥

(६) खंडस्य प्रथमस्य यत्किमपि वा स्याच्छोपखंडे गतं
प्रवृत्तिं किल तद्विधेर्नतु स्पृशेद् यो वर्तमानो भवेत् ।
यद्यारोपयते हितार्थमथ चेद् लोकस्य सामान्यतो-
निर्बंधांश्च सयुक्तिकान् सतु विधिर्मूलाधिकारश्च यः ॥

अस्ति ह्यत्र तु चोपखंडलिखितस्तस्य प्रयोगे तदा
राज्यं तत्र निवारयेत् प्रणयनात् कस्यापि वा तद्विधेः ।
यश्चैतादृशहेतुना प्रकुरुते ह्यारोपणं तादृशम्
एवं किंच विशेषतो न तु स्पृशेत् तं वर्तमानं विधिम् ॥
राज्यं वा न निवारयेत् प्रणयनात् कस्यापि वा तद्विधेः

(१) यावद्वै विदधाति वृत्तिविषयां वा शिल्पिसंबंधिनीम्
वृत्तर्वाह्यनुवर्तनार्थमथवा कार्यस्य कस्यापि वा ।
व्यापारे ह्युपजीविकानुसरणे ह्यावश्यिकामर्हताम् ॥

(२) एवं नागरिकान् निवार्य यदि वा संपूर्णतो वांशतः,
राज्यस्वत्वस्थितश्च यश्च निगमस्तेनैव, राज्येन वा
योऽधीनश्च नियंत्रणस्य निगमो राज्यस्य तेनैव वा,
उद्योगस्य विधिस्तथानुसरणं कस्यापि कार्यस्य वा
सेवाया विषयीकरोति यदि वा व्यापारकार्यस्य वा ॥

(क्रमशः)

# उत्तरकुरुक्षेत्रम्

**[ श्रीविश्वेश्वरविद्याभूषण-काव्यतीर्थेन विरचितम् ]**

( पूर्वानुवृत्तम् )

**तृतीयं दृश्यम्**—हस्तिनापुरे यज्ञस्थलम्

[ होमवेदिकां परितः पुरोहितद्वयम् उपविशति, पात्रेषु विन्यस्तो यथायोग्यद्रव्यसम्भारः । प्रविशति होतृवेशेन जनमेजयः । ]

( प्रविश्य ) जनमेजयः—भो ऋत्विग्वर्य्याः, नागकुलविनाशार्थं परिकल्पितो मयैष यज्ञः । तद् आरभ्यतां शुभानुष्ठानमचिरेण

पुरोहिताः—ॐ स्वस्ति स्वस्ति स्वस्ति। अयमारम्भः शुभाय भवतु।
(शङ्खो ध्वनति)

जनमेजयः—ब्रह्मणे स्वाहा। विष्णवे स्वाहा। रुद्राय स्वाहा।

पुरोहिताः—नमो नवग्रहेभ्यो दिक्पालेभ्यः। नमो नारायणाय श्रीविष्णवे स्वाहा।

जनमेजयः—एताः प्रज्वलिता होमानलशिखा भस्मीकुर्व्वन्तु निखिलनागकुल मन्त्रबलेन। तेन तृप्यतु मे नागदंशनात् पञ्चत्वमुपागतः पिता।

पुरोहिताः—साधु साधु।

जनमेजयः—(सदस्यान् प्रति) माननीयाः सभासदः, एतद् यज्ञप्रसङ्गेन भूरिदान मया सङ्कल्पितम्। तेन अद्यारभ्य उन्मोचितस्तिष्ठति राजकोषो दान-धर्म्माचरणाय।

सदस्याः—जयतु—जयतु प्रजापालः।

अन्ये—विजयतां सत्यव्रतो राजर्षिर्जनमेजयः।

जनमेजयः—अतो ब्राह्मणेभ्यस्तथा याचकेभ्यः प्रदीयन्ता पुस्कलधनरत्न-वसन-भोज्यानि। ननु न कोऽपि प्रतिगच्छेद् विमुखोऽनादृतो वा अपूर्ण-मनोरथो द्विजो वर्णेतरो वा।

सर्व्वे—विजयतां नरेन्द्रः।

जनमेजयः—(आहुतिं गृहीत्वोदात्तस्वरेण) तृप्यस्व हुताशन मम शेषाहुति-दानेन। ॐ तक्षकेण जुहोमि स्वाहा।

[ नेपथ्ये अश्रुतपूर्व्वः शब्दः ]

—ॐ वासुकिनागेन हुताशनं तर्पयामि स्वाहा।

[ पुनर्गुरुगम्भीरोऽपूर्व्वध्वनिः ]

[ प्रविशति ब्राह्मणवेशी ]

प्रविश्य ब्राह्मणः। अब्रह्मण्यम्—अब्रह्मण्यम्। राजन्, कथं क्रियते प्राणि-हिंसनमिष्टसाधनेषु?

जनमेजयः—( ससम्भ्रमम् ) स्वागतं विप्रवर्य्यस्य । देव, विश्वकल्याणाय मे यज्ञोऽनुष्ठीयते ।

ब्राह्मणः—नरनाथ, तर्हि कथमकारणं जीवानां प्राणनाशः क्रियते ? निरस्यतां मतो नागाहुतिप्रदानात् ।

जनमेजयः—भूदेव, पितुः प्राणघातिनस्तक्षकस्य पापेन पराभूत स नागकुलं विनाशयामि । तेन सवंशा भस्मीभवन्तु अखिलनागगणाः सर्वेषां कल्याणाय ।

ब्राह्मणः—तेन च ते कि फलं भवेत् ?

जनमेजयः—अनेन स्वर्गस्थः पिता मे नागानां विनाशात् तृप्तो भविष्यति । एष एव मे पितृहेतुको धर्म्मः । तदर्थमयं याग. ।

ब्राह्मणः—श्रूयतां नरपाल ! धर्म्मो हि सत्यपालनम् । यज्ञश्च त्यागात्मकं कर्म्म । तत् पूर्य्यतामद्य मे मनोरथ ईप्सितवस्तुदानेन ।

जनमेजयः—अथ किमभिलषति भवान् ! भो ब्राह्मणवर्य्य, देहोऽप्ययमस्तु महाधर्म्म-रक्षणेन । पालय सत्यव्रतम् ।

ब्राह्मणः—सत्यपालस्त्वं ।

जनमेजयः—का ते हृद्गता वासना देव ? सर्व्वथाहं पूरयिष्यामि भवतो मनोरथम् ।

ब्राह्मणः—उत्तमम् । देहि मे नागानां प्राणदक्षिणां नरमणे तेषामुज्जीवनाय । धर्म्मं पालय वीर सत्यधर्म्माश्रयेण ।

जनमेजयः—अहो अब्रह्मण्यमब्रह्मण्यम् । नैतत् शक्यते मया । न हि मर्षयामि नागान् । तेषां विनाशार्थमेष मे यज्ञः ।

ब्राह्मणः—गुणमणे, सत्येन विधृतं जगत् । धर्म्मश्च सत्ये प्रतिष्ठितः । यत. क्रियतामद्य सत्यपालनं ममाभीष्टप्रदानेन ।

जनमेजयः (विह्वलः) दैवी माया । अहो दैवी माया । तद् भो देव, कथय, किं प्रजापतिरसि त्वं विश्वस्रष्टा, उत विष्णु रुद्रो वा निखिलभुवनगोप्ता,

जनमेजयः—देव, अतःपरं किं प्रियमस्ति ? त्रातोऽहं व्रतभङ्गकलुषात्। रक्षितश्च धर्म्मो मे भवतामनुग्रहेण। तथापीदं प्रार्थये—

[ भरतवाक्यम् ] प्रवर्त्ततां पुण्यतपस्तपस्विनां
निरङ्कुशं शान्तिमयं भवेद् गृहम्।
जनाः कृतार्थाः प्रभवन्तु धर्म्मगा
रत्नेन पूर्णा धरणी सदास्तु नः॥

[ प्रविशति पुरलक्ष्मीर्गायति च गानं राजर्षिसंवर्द्धनाय ]

गानम्

मनोमन्दिरे विहर, जय भारतभूषण,
पुण्यनिलय गुणमय जय, विजयकीर्त्तिमण्डन।
शुद्धचरितगरिमोज्ज्वल
अभयवीर्य वृत्तमङ्गल
करुणाशय सत्यपाल, निखिलमनोरञ्जन।
जय भारतवीरभूषण॥
राजते शुभ्रगगने तव वीरकीर्त्तिलेखा
कनकारुण-रञ्जितकर-महिमामलरेखा,—
दिशि दिशि तव विजयगानं
ध्वनतु सहवीणातानम्
अरातिदमन, जय जय जय, पुण्यकीर्त्तिकेतन,
जय दानवीर, पूत धीर, कौरव प्रजारञ्जन।

**यवनिकापातः**

**पञ्चमाङ्के तृतीयं दृश्यम्**

इति समाप्तं महामहाध्यापक-कृष्णकान्तकृतिरत्नात्मजेन सुरभारती-चरणसरोजमकरन्दमधुपेन श्रीविश्वेश्वरविद्याभूषणकाव्यतीर्थ-देवशर्मणा विरचितम् उत्तरकुरुक्षेत्रं नाम नाटकम्
ॐब्रह्मार्पणमस्तु

# कृतकालगणनायाः कारणान्यनुशीलनञ्च

[ निबन्धकः—पद्मभूषण-श्रीसूर्यनारायणव्यासः ]

"कृत"-संवदितिहासस्य महत्त्वपूर्णा समस्याऽस्ति। एतामादाय इतिहासस्य मनीषावत्सु दीर्घकालादेको विवादः प्रचलति। मालवेषु तथाऽन्येषु भागेषु ये केचन शिलालेखाः सम्प्राप्तास्तेषु "कृत-संवत्सर" स्योल्लेखोऽस्ति। अवश्यमेव तेषामुल्लेखानां 'कृत'शब्देन सह 'मालव'शब्दोऽपि संयुक्तो विद्यते। यथा हि "श्रीमालवगणाम्नाते प्रशस्ते कृतसंज्ञिते"। तथा 'कृतेषु चतुर्षु वर्षशतेषु एकाशीत्युत्तरेषु—अस्यां मालवपूर्वायाम्' एवं वि. सं. ४८१, ४८०, ४६१ तथा २४० वत्सराणां लेखेषु 'कृत'शब्दो व्यवहृतः, किन्तु बर्नाला (जयपुर-राज्य)स्थ वि. सं. ३३५ तथा २८४ तमयूपलेखयोरपि 'कृतेहि' बड़दा (कोटा)स्थ वि. सं २९५ तमे एवं नंदसा (उदयपुर)स्थ २८२ वर्षीयलेखेषु 'कृतयोः' शब्दस्य समुल्लेखः संवत्सरेण सह सञ्जातः। जयपुरोदयपुर-कोटानगराणां 'कृत'शब्दोल्लेखान् परिवर्ज्य अन्येषां शिलालेखानां कृतशब्देन सह मालवशब्दः संयोजितोऽस्ति। एतेनेदं तु स्पष्टमास्ते यत्—'कृत-संवत्-मालव-संवत्' चाभिन्नौ। मालवसंवदेव 'कृत' कालगणना कथिता। अय-मेवाग्रे विक्रमवत्सरेण सम्बद्धः। श्रीअल्तेकरमहोदयेन प्रदर्शितं यद्—विक्रम-वत्सरस्य दशमशताब्द्याः प्राप्तेषु ३४ शिलालेखेषु ३२ लेखेषु च केवलं 'संवत्' शब्द एवाङ्कैः सहोल्लिखितो लभ्यते। केवलं द्वयोर्लेखयो-( ९७३-९३६ वत्सरयोः ) रेव विक्रमशब्दस्योल्लेखोऽस्ति। एवमेव नवमशतक १० लेखेष्वपि संवत् ८८८ तमस्यैकस्मिन् लेखे विक्रमस्य ( वसुनवाष्टवर्षानीतस्य कालस्य विक्रमार्कस्य ) उल्लेखो मिलति। अष्टमशताब्द्याः सप्तसु लेखेष्वपि एकस्मिन्नेव लेखे विक्रमोल्लेखो विद्यते। किन्तु सप्तमशताब्द्यास्तथा ततोऽपि प्राक्तनेषु लेखेषु अयमेव 'मालव'नाम्ना व्यवहृतः, तत्र नास्ति सङ्केतो "विक्रमस्य"। वस्तुतो विस्मयावहेयं वार्ता? स्वीकरणीयं भविष्यति यद् यदा प्रथमो

द्वितीयश्च विक्रमौ जगत्प्रागतावास्तां, तदापि तयोर्नाम्ना संवत्प्रचारो व्यापकतां नागृह्णात्। यदि द्वितीयविक्रमेण पञ्चमशताब्द्याः स्वस्य संवत्सरो विक्रमशब्देन ज्ञापितस्तर्हि किं कारणमस्ति यद् दशमशतकं यावत् प्राप्तेष्वधिकांशशिला-लेखेषु 'विक्रम'शब्दो व्यवहृतो न दृश्यते? तथा पञ्चमशतकविक्रमेणायं प्रचारितश्चेत् १० शतकपर्यन्तस्य ग्यारसपुर (मालव)स्य लेखे 'मालवकाला-च्छरदां षट्त्रिंशत्संयुतेष्वतीतेषु' इत्यस्मिन् 'मालव' शब्द एव व्यवहृत आयाति। यथा हि मन्दसौरस्य शिलालेखेऽपि (मालवानां गणस्थित्या याते शतचतुष्टये त्रिनवत्यधिके शब्दानां) इत्यस्मिन्नपि स्पष्टरूपेण लभ्यते।' एतेन समर्थ्यत एतद् यत्—प्रथम-द्वितीय-विक्रमयोः कालेऽपि बह्वोः कालादनन्तरं संवत्सरस्याभिधानं मालव एवातिष्ठत्। विक्रमेणापि मालवेनैव भाव्यम्, मालवशब्देन सह भूयोभूयो 'मालवगणस्थितिवशात्' अथवा 'मालवानां गणस्थित्या'दिप्रयोगा जाताः। एते स्पष्टयन्ति यद् विक्रम-मालवे-संवद् मालवानामेवास्यात्। तथा मालवगणानां नाम्नैव प्रचलितः। द्वितीय-चन्द्रगुप्तविक्रमादित्यानन्तरं १० शतीं यावत् प्रायशो 'मालव' शब्दः प्रयुज्यते स्म, तदवधि अस्मिन् भागे मालव-प्रभावोऽपि स्थिरत्वं भेजे। अथच ७ शत्याः पूर्वमनेनैव मालवशब्देन सह 'कृत' शब्दः संयुक्तो लभ्यते। अर्थात् 'कृत'-गणनाऽपि मालवगणैः सम्बद्धाऽस्ति। क्वचित् केवलं 'कृत'शब्दोऽस्ति। क्वचिच्च कृतेन सह 'मालव' इत्यपि शब्दः संयुक्तोऽस्ति। सोऽयं क्रमः ७ शतीं यावत् सारल्येन मिलति। नास्ति तत्राश्चर्यं यदि तौ कृत-मालव-शब्दौ विक्रमस्यैव पर्यायवाचिनाविवाभूताम्। श्रीमतोऽल्तेकरस्य तु अयमेवाभिप्रायः, यत्—'अन्यैरसन्दिग्धैः प्रमाणैरिय' वार्ता स्पष्टरूपेण प्रभाविता भवति यदिमानि नामानि ईशवीयवर्षेभ्यः पूर्वं ५७ तमवर्षेभ्यः पूर्वं प्रारब्धाय संवत्सरायैव प्रदत्तान्यासन्। मध्यकालस्य केनापि विक्रमेण सहैतेषां सम्बन्धो नागच्छति। किञ्चेदमपि शिलालेखैः स्पष्टतामायाति यद् यैर्मालवैः संवत्सरस्यास्य प्रारम्भः कृतस्ते गणतान्त्रिका एवासन्।' गणस्थित्यादयः शब्दा गणस्थितेरेव प्रमाणरूपाः। शिलालेखैर्ज्ञायते यद् यस्य गणतन्त्रस्य स्थापनादनन्तरं प्रायेण

५०० वर्षाणि व्यतीतान्यभूवन् अस्यैवायं (मालवः अथवा कृत) कालनिर्देशः। (मालवानां गणस्थित्या याते शतचतुष्टये त्रिनवत्यधिके) अर्थात् मालव-गणस्थित्या ४६३ वर्षाणि व्यतीतानि सन्ति। एना वार्ता प्रामाणिकतया कोऽपि विद्वान् निषेद्धु न पारयेद् यदियं मालव-गणतन्त्रताऽत्यन्तं प्राचीना। महाभारतेऽनेकत्र तेषां मालवानां शौर्यस्य वर्णनं समागतम्। सिकन्दरात् संयुद्धय तस्यापि परास्तीकरणस्य श्रेय एतेभ्यो मालवेभ्यो मिलितम्। पाणिनिना एतानेव गृहीत्वा गणतन्त्रस्य व्याख्याऽकारि। तथा स्वयमेकः शिलालेखोऽपि पुष्णाति वार्तामिमां यद् मालवनाम्ना ये आम्नाता = रूढास्त एव कृत इति कथिताः। निःसन्देह एवायं भारतस्य पुरातनतमो वत्सरः। अभिलेखैः कृतानां मालवानां चाभिन्नता प्रतिपादिता भवत्येव। तथा पञ्चमशतके अस्य मेव केवलं "मालव" इत्यवाशिष्यत। नवमशतकेऽस्यैव स्थानं विक्रमेण गृहीतमासीत्। एतेनेदं प्रमाणोभवति यद् द्वितीयचन्द्रगुप्तस्य बहोः कालादनन्तरम् अयं "मालव" रूपेणैवास्थात्, ततः परं च विक्रम-शब्देनाङ्कितोऽभूत्। स्पष्टमिदं यद् द्वितीयचन्द्रगुप्तप्रचारितो वत्सरो नास्ति। तस्य कालेऽपि 'मालव'स्य महत्त्वं विद्यमानं बभूव। द्वितीयश्चन्द्रगुप्तः संवत्प्रवर्तको भवितुं नार्हति। तस्य समये पञ्चमशतके अथवा नवमशतकं यावद् विक्रमस्य नामोल्लेखोऽपि न लभ्यते। फलतो यः "कृत"नाम्ना ज्ञापितो "मालव"नाम्ना चाम्नातो महत्त्वं च संप्राप्त—स एव 'विक्रम-संवत्' भूत्वाऽद्यावधि प्रचलितः। तदा प्रश्नोऽयमवशिष्यते यत् किमस्ति "कृत" इति? 'कृत इत्यनेन नास्ति कोऽपि सत्ययुगस्य सम्बन्धः। नव शतके अस्योल्लेखेन सह शिलालेखा मिलन्ति तं कालं पुराणेभ्य आरभ्यान्येऽपि ग्रन्थाः 'कलियुग'मेव घोषयन्ति। तदा स पुरातनः सत्ययुगः अष्टमशताब्दी अथवा नवमशताब्दी यावन्न भवितुमर्हति। 'कृत'शब्देन कृत्तिकादि-वर्षारम्भगणनायाः सम्बन्धः कर्तुं शक्यते—तस्मिन्नेव समये समरयात्रात आरभ्य पराक्रम-विजयकरणस्य सूचनाः सन्ति। या गृहीत्वा कार्तिके दीपावल्या

(क्रमशः)

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥


| Vol. L. | १८८९ शकीये चैत्रे | April |
| --- | --- | --- |
| No. 12 | १३७४ वङ्गाब्दीये ५०तम-वर्षस्य १२श संख्या | 1968 |


संस्कृत-साहित्य-परिषद एकपञ्चाशत्तमवार्षिकाधिवेशने

# शुभाशीर्व्वादः

[ निबन्धकः—श्रीयोगेन्द्रमोहनविद्यारत्नः ]

एषा संस्कृतसाहित्य-परिषत् सुधियां मुदम्।
वर्द्धयन्ती चिरं जीव्याद् यावच्चन्द्रदिवाकरौ॥

एषा भाषैव रम्या सुरगणरसना-निर्गता सौरभावं
मर्त्ते मर्त्यान् प्रकृष्टं नयति नियमतः संयमं ग्राहयित्वा।
लोभाग्नि दूरदेशं दिशति निजबलैः शान्तिमाहृत्य सत्यां
तेनैषा देव-भाषा चिरदिनमखिलैर्गीयतेऽस्यां जगत्याम्॥

शास्त्रं सर्व्वं पवित्रं विरचितमशिवं ध्वान्तराशिं निहन्तुं
मन्वाद्यैराप्तवाग्भिर्धरणितलमिदं शान्तिदं संविधातुम्।
एषा भाषैव देवी धरति सुविमलं तद् विशालं हि शास्त्रं
सा भाषा रक्षणीया मतिमति परिषत् संविधत्ते प्रशस्याम्॥

सुनीतिपुष्टा परिषत् शुभेयं सुनीतिहीनेऽद्य दिने मनुष्यान्।
सुनीतिमादिश्य शुभैकहेतुं सुनीतिसृष्टिं कुरुतां पुरेव॥

# तपोवैभवम्

[ निबन्धकः—श्रीनित्यानन्दस्मृतितीर्थः ]

विद्याविनयसम्पन्नः सत्याचारपरायणः ।
आदर्शः सर्व्वलोकाना दिव्यमूर्त्तिः सुसाधकः ॥१॥

लोकानां शुभमग्नो य आविर्भूतः क्षितौ मुदा ।
पायाद् देवः स वो भूम्यां रामगोपालसंज्ञकः ॥

( ततः प्रविशति सूत्रधारः )

सूत्र – अये ! किमियं भगवत्पादसरोजनिहितचेतोभिः सकलधरापवित्रता-कारिभिरमरवरसदृशैरभिरूपजनैः परिशोभितेयं पर्षत् सम्मिलितास्मिन् गेहे । आदिष्टोऽस्मि च पारिषदैरेतस्याः सपर्य्यायै । तत्र पश्यामि कमप्युपायम् । यतो हि

क्व वा पूज्यतमाः पुण्या लोककल्याणकारिणः ।
साधवो मन्दबुद्धिर्वा क्वाहञ्चैषा प्रपूजकः ॥

भवतु तावत, मम परममित्रं बुद्धिमन्तं पारिपार्श्विकमाहूय परिपृच्छामि । भो मारिष ! सङ्कटमग्नं बन्धुं त्रातुं शीघ्रमिहागच्छ ।

पारिपार्श्विकः—( प्रविश्य ) भाव ! एषोऽहमागच्छामि । कथं सङ्कटमग्न इत्युक्तं त्वया ? सकलसङ्कटावसानकारिणस्ते वा कः सङ्कटः ?

सूत्र—मारिष ! किं न पश्यसि पर्षदमिमाम् ?

पारि—पश्यामि, तेन किम् ?

सूत्र—किं न जानीषे अस्या एव सपर्य्याभारो मयि न्यस्त इति ।

पारि—ज्ञायते ! योग्यानां पूजावकाशस्तु सौभाग्येनैव जनैर्लभ्यते । एतल्लाभे किमपि सङ्कटकारणं न परिलक्ष्यते मया ।

सूत्र—हा धिक्! पूज्यानां पूजने कस्यानभिप्रायः, किन्तु तत्र यदि सामर्थ्यं न स्यात्, तर्हि तत्र दुःखकरं भवति ? पश्य

ये सम्पूज्याः सकलभुवने देवतापेक्षयापि
मान्या ये च स्वकगुणगणैर्ज्ञानिभिर्ये च पूज्याः ।
धन्या पृथ्वी चरणरजसा सर्व्वतो भाति येषां
ते सर्वे भो बहुकृतिवशात् सङ्गताश्चात्र गेहे ॥४॥

अपि च मारिष !

शक्तिहीनः सुदीनश्च भक्त्या हीनः सुदुर्म्मतिः
तेषां पूजां प्रकर्त्तुं भोः कथमर्हाम्यहं वद ॥५॥

पारि—भाव ! सत्यमभिहितम्। तथापि—

साधकस्तुष्टिमाप्नोति साधुवृत्तप्रकीर्त्तनात् ।
तस्मात्तत्कीर्त्तनेनैषां सपर्य्या क्रियतां मुदा ॥६॥

सूत्र—मारिष ! कस्य चरित्रकीर्त्तनेनैतेषां सम्प्रीतिर्भविष्यति ।

पारि—कथं न स्मरसि भाव !

वङ्गख्याते यशोरे सकलगुणिगणैर्दीप्यमाने सुधाब्धि
भारद्वाजे कुले यो बुधगणविमले विज्ञयज्ञेश्वरस्य ।
पुत्रः श्रीमान् वरेण्यस्तपसि परिरतो दत्तचेता भवान्यां
जातः शान्तः सुकर्म्मा विबुधवरमतो रामगोपालशर्म्मा ॥७॥
तच्चरित्रं समाश्रित्य तुष्टिमाप्ता भवन्त्विमे ।
सद्वृत्तश्चाधिगम्यैते हर्षं यान्तु परं भुवि ॥८॥

सूत्र—आं स्मृतम्, यस्य पितामहो मधुसूदननामा पादसमतिक्रान्तदीर्घमार्गं प्राप्य साक्षान्मुक्तिक्षेत्रं वाराणसीधाम, उषित्वा च तत्र चिरात्रं, वासन्तीविजयादशम्यां विलीनः काशीश्वरेण समम्। यश्च कलौ परमधर्म्मबोधेन सदान्नदानव्रतपरः। यश्च स्वकठोरतपसा असकृत् प्रत्यक्षीकृतभवानीमूर्त्तिः, स एष रामगोपालनामा सुधीः। निश्चितमेवास्य यस्य

कस्यचिद् वृत्तांशस्यालोचनेन तुष्टिं गमिष्यन्ति साधवः । ननु, एतेषां चरित्रकीर्त्तनमेव युक्ततमं मन्ये । मारिषेण वा किं मन्यते ?

पारि—भाव ! अत्रापि किमस्ति वक्तव्यावकाशः ।

सूत्र—तत्, कतमत् प्रकरणमाश्रीयताम् ।

पारि—अध्ययनादिप्रकरणमाश्रीयताम् ।

सूत्र—भवतु, तर्हि तदेव कीर्त्तयामि । मारिष ! भवताप्यवधानं देयम् ।

पारि—अथ किम्, अवहितोऽस्मि !

सूत्र—श्रूयताम्—

( नेपथ्ये )—पितः ! अनुमन्यताम् ।

सूत्र—आः, कथं कथाप्रारम्भ एव शब्दान्तरं श्रूयते । यावत् पश्यामि ।

( नेपथ्ये )—पितः ! विद्यालाभाय गच्छामि गुरोः सकाशम् । तद् अनुमन्यताम् ।

सूत्र—मारिष ! दृश्यताम् अयं गौरवर्णो दीप्तमूर्त्तिः किशोरः साक्षाद् ब्रह्मण्यमूर्त्तिरिव प्रतिभाति । आं ज्ञातम्, अयमेव रामगोपालो यावदेतस्याध्यवसायज्ञानायान्तरालमाश्रयावः ।

पारि—बाढम् । ( निष्क्रान्तौ ) ।

## ॥ द्वितीयं दृश्यम् ॥

[ ततः प्रविशतो यज्ञेश्वररामगोपालौ ]

राम—पितः ! पितः ! विद्यालाभाय गुरोः सकाशं गन्तुमिच्छामि । तदनुमन्यतां भवता ।

यज्ञे—वत्स ! साम्प्रतं दुष्पारकलापव्याकरणपारङ्गतस्य तव कस्मिन् शास्त्रे प्रवृत्तिः सञ्जायते ।

राम—पितः ! भवता यथादिश्यते मया तथैव क्रियेत । मया तु मन्यते प्रथमतो न्यायशास्त्रस्यालोचनं कृत्वा धर्म्मशास्त्राध्ययनमेव युक्तमिति ।

यज्ञे—वत्स !, कथमेवं सङ्कल्पस्तव ?

राम—पितः ! सर्व्वं विजानतापि भवता यद्येवं पृच्छ्यते, तर्हि श्रूयतां कृपया ।

धर्म्माधीनं भवति सततं विश्वमेतत् समग्रं
धर्म्मो बन्धुर्निखिलभुवने सर्वतो वै जनानाम् ।
धर्म्माद् भ्रष्टो नहि शुभमतिर्मानवः स्यात् कदाचिद्
धर्म्मस्तस्मात् कृतिपरतया सर्व्वदा पालनीयः ॥९॥
धर्म्मसाक्षात्प्रकर्त्तॄणामृषीणां वाक्यतो विना ।
धर्म्मतत्त्वं कथं ज्ञेयमतस्तत्र मतिर्मम ॥१०॥

यज्ञे—सुष्ठ्वेव वितर्कितं वत्सेन । मया सर्वथा आशीर्वादः क्रियते तवाभिलषितं सिद्धमस्त्विति ।

राम—कृतार्थोऽस्मि ।

यज्ञे—अस्ति च किञ्चित् विज्ञाप्यम् ।

राम—आदिशतु भवान् ।

यज्ञे—श्रूयताम् वत्स !

ग्रन्थसंवादमात्रेण कृतार्थो न भवेज्जनः ।
ध्यानं तत्र सदा देयं त्वन्यथा विफलः श्रमः ॥११॥

वत्स ! वाग्विस्तृतिः शुकपक्षिणापि अभ्यसितुं शक्यते, किन्तु तत्त्वानुसन्धाने कश्चिद् भाग्यवानेव समर्थः । अतस्तदुपदेशानुसारेण आचरणाय सर्व्वथा यत्नः कार्य्यः ।

राम—मया यथासाध्यं चेष्टिष्यते ।

यज्ञे—अस्ति च वक्तव्यशेषः ।

राम—अवहितोऽस्मि ।

यज्ञे—कलौ धर्माचारस्त्वतिसुकठिनः क्षिप्रधमतिभि-
स्तपो दुःसाध्यं वै भवति हि जनैर्दुर्बलतया ।
न च ध्यानासक्तिर्भवति मनसश्चञ्चलतया
कथं भाव्यो यागः प्रभवति न हि द्रव्यगमने ॥

राम—पितः ! तर्हि किं मया कार्यम् ?

यज्ञे—वत्स ! अन्नदानं परो धर्मः कलावस्मिन् युगे किल ।
अन्नदानाय तेनात्र यतितव्यं त्वया सदा ॥१३॥

राम—पितः ! भवदादेशेन कृतार्थोऽस्मि, यतिष्यते च तत्परिपालनाय सर्वथा ।

यज्ञे—साम्प्रतम् अध्ययनाय कुत्र गन्तुमिच्छसि ।

राम—पितः ! श्रूयते विश्रुतलोकोत्तरकीर्त्तयो न्यायशास्त्रपारङ्गताः श्रीमदाशुतोषतर्कभूषणपादा विराजन्ते श्रीश्रीनवद्वीपधाम्नीति । तेषां चरणोपान्ते एवावस्थातुमिष्यते मया ।

यज्ञे—बाढम् । सम्यगेव विवेचितं त्वया । एतेषां विश्रुतकीर्त्तीनां तर्कभूषण-महोदयानाम् अन्तिके एव अध्ययनं समाचीनतया प्रतिभाति । तस्माद् गच्छ वत्स ! स्वाभीष्टसिद्धये ।

राम—पितः ! कृतार्थोऽस्मि ।

**इति प्रथमोऽङ्कः ।**

## द्वितीयोऽङ्कः—प्रथमदृश्यम्

( ततः प्रविशति वीरेश्वरतर्कालङ्कारो रामगोपालश्च )

तर्कालङ्कारः—वत्स ! तवापूर्व्वमेधा विचारशक्तिञ्चावलोक्य नितरां विस्मितोऽस्मि ।

बुद्ध्या यस्य निरूपणं बुधगणैः कर्त्तुं न शक्यं भुवि
तस्मिन् धीर ! दुरूहशास्त्रनिचये ज्ञानं गतं भोस्त्वया ।
सम्यग् युक्तिमतीं विचारपटुतां सन्दर्शितां वै तथा
सर्व्वे छात्रगणास्तथा बुधवरा दृष्ट्वा प्रमोदं गताः ॥१४॥

राम—देव ! यत्किञ्चिन्मयाधिगतं तत्र भवतां प्रसाद एव कारणम् ।

तर्का—नहि नहि वत्स !

वितरति ननु सूर्यः प्रस्तरे वा जले वा
सममिह किरणं स्वं तत्र भेदो न कोऽपि ।
तदपि खलु समर्थं निर्म्मलं वारि धर्त्तुं
प्रतिकृतिमिह नैव प्रस्तरं लेशतोऽपि ॥१५॥
गुरुस्तथा समं शिष्येषूपदेशं करोति हि ।
गृह्णाति स्वीयशक्त्या तं शिष्यास्तत्र न संशयः ॥१६॥

अत एव वत्स ! विनयेन या स्वीयशक्तिस्तयाभिभूयते सा कथमपि नैवाभिभाव्या ।

राम— गुरोः कृपां विना देव ! पुंसां शक्तिः कुतो भवेत् ।
गुरोः कृपा हि सर्व्वत्र शक्तिमूलं भवेद् ध्रुवम् ॥१७॥

यदि काचन शक्तिर्मयि वर्त्तेत, तत्र भवत्कृपैव हेतुः ।

तर्का—वत्स ! तवाकुण्ठशास्त्रनिष्ठया, अप्रतिमगुरुभक्त्या च दृढं प्रीतोऽस्मि।

राम—देव ! यदि भवतां प्रीतिरुत्पन्ना, तर्हि मन्ये सर्व्वे देवा अपि प्रीति गताः । यत

गुरुदेवस्वरूपेण स्वर्गलोकनिवासिनः ।
देवा देवर्षयः सर्व्वे विचरन्ति महीतले ॥१८॥
हृदस्तमो निराकर्त्तुं गुरुं विना हि कः क्षमः ।
बोधयितुमदृष्टार्थं तत्समो नास्ति भूतले ॥१९॥

अतएव देव ! कृतार्थोऽस्मि भवत्प्रसादलाभेन ।

तर्का—वत्स ! असीमप्रतिभया, तथाकुण्ठपरिश्रमेण च सर्व्वं धर्म्मशास्त्रं त्वयाधिगतम् । त्वादृशकृतिसन्तानलाभेन वङ्गजनन्याद्य वसुन्धरानाम सार्थकतामापन्नमिति मन्ये । तथा वंशलोपभयग्रस्तोऽहमपि कृतार्थः ।

राम—देव ! भवतः कृतिनि पुत्रद्वये वर्त्तमानेऽपि भवता कथमेवमुच्यते ।

तर्का—वत्स ! नहि अर्थेन कोऽपि कर्त्ता भवति । अंशा नाङ्गेन पुत्रैर्नहि पितरः पुत्रवन्तो भवन्ति ।

वंशकीर्त्तिः सदा भायाद् येन जातेन सर्व्वथा ।
पितरस्तेन पुत्रेण पुत्रिणो धरणौ ध्रुवम् ॥२०॥

किन्त्वथ मम दुर्भाग्यतया सत्यपि पुत्रे वंशलोपभयः समुपस्थितम् ।
एवं चिरं दुःखायमाने मयि देवास्तु प्रसन्ना एवेति मन्ये ।

पुत्रशिष्यौ समौ ज्ञेयौ न भेदो वर्त्ततेऽनयोः ।
एकस्मिन् वर्त्तमानेऽपि सवंशः पुरुषो यतः ॥२१॥

वंशादर्शविमुखपुत्रस्यापि मम त्वादृशपुत्रलाभेन निर्वंशत्वाशङ्का दूरीभूता ।
अत एव वत्स ! मया त्वयि भार एको न्यस्यते ।

राम—शक्तिहीनस्य मम का शक्तिस्तव भारवहने । तथापि, आदिशतु भवान् ।

तर्का—वत्स ! यस्मिन् विद्यालये त्वयाधीतम् , तत्रैव त्वयाध्यापयितव्यम् ।

राम—देव !

बृहस्पतिसमो यत्र भवानध्यापनारतः ।
अध्यापयितुमर्हामि मन्दधीस्तत्र वा कथम् ॥२२॥

तर्का—वत्स ! मद्वचनं परिपाल्यतां त्वया । अत्र नान्यथा करणीयं कथमपि ।

राम—देव ! भवदादेशलङ्घने का शक्तिर्वर्त्तते मम । किन्त्वयोग्येन मया कथं शक्येत भवदादेशः परिपालयितुम् ।

तर्का—वत्स !

नहि सूर्य्यो विजानाति स्वस्मिन् , तेजः कियत् सदा ।
ज्ञायते मधुना नैव स्वमाधुर्य्यं कथञ्चन ॥२३॥
निजशिरसि विलग्नां मुक्तिकां दीप्तभाति
करिवर इह बोद्धुं नैव शक्तः कथञ्चित् ।

अनुभवितुमशक्तो नाभिलग्नं सुगन्धं

भवति मृगवरः स्वं गन्धमत्तो विमुग्धः ॥२४॥

अत एव वत्स ! तव कीदृशी शक्तिर्योग्यता वा त्वया कथं ज्ञायेत ? तस्मान्मदादेशपरिपालनाय मनो निवेशय । अपिच—

कृत्वा श्रमं शास्त्रचयेषु धीमन् !

ज्ञात्वा च तत्त्वं निजशक्तिजातैः ।

त्वञ्चेदशक्तो मम वाक्यकृत्ये

को वा समर्थो भवितेह तात ! ॥२५॥

तस्मात् संशयं परिहृत्य मदादेशं परिपालय ।

राम—देव ! यद्यपि मम शक्तिलेशोऽपि नास्ति, तथापि भवदादेशो मया शिरसा धार्य्यते ।

• मूकोऽपि वाग्मितां याति नेत्रहीनः सनेत्रताम्

चलच्छक्तियुतः पङ्गुर्गुरुदेवप्रसादतः ॥२६॥

अत एव शक्तिहीनस्यापि मे भवत्प्रसादेन भवदादेशपरिपालनशक्तिर्जायेत नास्त्यत्र संशयलेशः ।

तर्का—वत्स ! परितुष्टोऽस्मि । अद्य प्रभृति मदीयविद्यालयस्य भारस्त्वय्येव न्यस्यते । सयत्नमिमं परिपालय ।

राम—देव ! भवदादेशो मया शिरसा धार्य्यते । भवदादेशपरिपालनाय च मया यथासाध्यं यतिष्यते । ( निष्क्रान्तौ )

—इति द्वितीयोऽङ्कः—

( क्रमशः )

# मन्दाक्रान्ता-वृत्तम्

( खण्ड-काव्यम् )

[ निबन्धकः—महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

( पूर्वानुवृत्तम् )

दुर्गादेव्याः शरदि शिवदा यादृशी तत्र पूजा
बह्वारम्भा भवति सुचिरात् सा वसन्तेऽपि तद्वत् ।
एकां सन्ध्यामहनि कुरुते भोजनं यो दरिद्रो
देव्याः सोऽपि प्रथयति महापूजनं तत्र काले ॥४९॥

प्रत्यासन्ने गिरिशगृहिणीपूजनाहे पवित्रे
पूजागेहं किमपि न जगन्मातृमूर्त्या विहीनम् ।
सर्वत्रैव प्रसरति तदा सत्कुलालस्य चिन्ता
मातुर्मूर्तिः कथमिव समाधीयतां चारुरूपा ॥५०॥

स्पर्द्धापूर्वं निखिलजननीमूर्त्तिनिर्माणयत्नात्
सर्वैवास्त प्रतिकृतिरतीवोत्तमा निर्विशेषम् ।
या या दृष्टा जनपदजनैर्मण्डपे मातृमूर्त्तिः
शिल्पोत्कर्षात् समसुनिपुणास्तत्कुलालाः प्रतीताः ॥५१॥

तस्मिन्नेकः पटहनिनदस्तीव्रतीक्ष्णोऽन्तरीक्षे
वायुं भित्वा भवति तुमुलः शङ्खघण्टादिनादैः
निर्विच्छेदं समयमखिलं प्रातरारभ्य रात्रिं
यावन्नादः प्रतिरवशतं व्यश्नुते दिग्दिगन्तान् ॥५२॥

गीतं क्वापि क्वचिदभिनयो रूपकाणां वराणां
नृत्योल्लासः क्वचन सुखदः कौतुकञ्चान्यरूपम् ।
तस्मिन् काले समसुपनतं तत्र मोदाय सर्वम्
सर्वान् लोकान् सुखजलनिधौ मज्जयत्याधिबाधम् ॥५३॥

गीताद् वाद्याज्जनकलकलात् स्तोत्रमन्त्रादिपाठाद्
वीचिस्तोमादिव जनगणात्तत्र देवीं दिदृक्षोः
शोभाधानाद् भवनवपुषां ज्ञातिमित्रादिसङ्गाद्
दुःखं भीत्या व्रजति किमहो तत्पुराद् दूरदूरम् ॥५४॥

वर्षे वर्षे सुविपुलमहश्चैत्रसंक्रान्तिकाले
स्थाने स्थाने समसुदयते यत्र चित्रः स्वतन्त्रः ।
जात्या नीचा अपि नरगणास्तत्र नार्यश्च काश्चित्
व्यालम्बन्ते यतिजनगणाचारदीक्षां सुभक्त्या ॥५५॥

आस्ये तेषां 'जय जय महादेव'-रावोऽत्युदात्तः
सर्वत्राङ्गे गहनमनिचितः पुण्यगन्धप्रलेपः ।
कण्ठे हस्तेऽपि च परिहिता स्थूलरुद्राक्षमाला
वासः सौम्यं यतिसमुचितं गैरिकाभ्यक्तरक्तम् ॥५ ॥

भित्त्वा जिह्वां भजति गिरिशं कोऽप्ययःसायकेन
पार्श्वं भित्त्वा रचयति रसात् सूत्रनृत्यञ्च कश्चित् ।
पृष्ठं भित्त्वा वडिशमयसस्तत्र कश्चित् प्रवेश्य
रज्ज्वा बद्धो वियति परितो घूर्णते स्तम्भशीर्षे ॥५७॥

हस्ते तस्य भ्रमति परितो हृष्यतो वेत्रगुच्छो
वेगेनातः परमपि च मां घूर्णयेत्याननेवाक् ।
हस्तोत्क्षेपश्चरणयुगलोत्क्षेपणञ्चापि तीक्ष्णं
शैवी भक्तिर्वितरति परां शक्तिमेभ्यो विचित्राम् ॥५८॥

कश्चिद् भक्तः पतति निशिते खड्गशूलादिमध्ये
देहे शम्भोरमितकृपया नो क्षतिः कापि तस्य ।
पट्टस्याधः क्षरितसलिलस्नातदेहा निशान्ते
बन्ध्याप्याशु प्रभवति मुदा सूतये सत्सुतानाम् ॥५६॥

नानाच्छन्दोमयसुरवचःप्राकृतस्तोत्रपद्यै-
र्धूपाद् धूमः प्रसरति यदा दारुपट्टाग्रभागे ।
नृत्यारम्भो भवति हि तदा दृश्यमानो जनौघै-
र्देवेनाधिष्ठितमतिजडं वस्तु चैतन्यमेति ॥६०॥

किञ्चित्कालात् परमपि भृशं स्पन्दितो दारुपट्टः
सिन्दूराक्तं गमयति मुहुः शीर्षमूर्ध्वं तथाधः ।
अग्रे गन्तुं रयमुपगतः सोऽथ शम्भोर्नियोगा-
न्नालं सोढुं तमुदितरयं मस्तके पट्टधारी ॥६१॥

शीर्षे कृत्वा तमथ रयिणं सम्बलद्दारुपट्टं,
शम्भोः पूजागृहमभि भृशं धावति क्षीवतुल्यः ।
गत्वा गत्वा गिरिशसदनप्राङ्गणं सम्प्रपन्नः,
सोऽयं भूमौ पतति सहसा मूर्च्छितः पट्टधारी ॥६२॥

मूर्च्छां तस्य व्यपगमयितुं मूर्ध्नि नेत्रे ललाटे,
नैके लोका विदधति परं नीरवातोपचारम् ।
वीते काले कियति च नृणां यत्नसिद्धोपचारात्,
संज्ञां सोऽयं सपदि लभते मोदभूत्यै जनानाम् ॥६३॥

तस्मिन् शैवोत्सवसमुदये वस्तुजालैर्विचित्रा,
संख्यातीतैर्जनरतिकरैर्जायमाना निषद्या ।
बालान् वृद्धानपि युवगणान् कर्षति प्रीतिदानाद्,
दूरश्रव्या जनकलकलैः क्रीडनाद्यैश्च हृद्या ॥६४॥

श्रीरन्ध्रं वदनमरुता पूरयन् कोऽपि बालो,
मानन्यान् किल मुरलिकाः क्रेतुकामान् करोति।
क्रीडावस्तुक्रयविधिरतान् वीक्ष्य बाला दरिद्रा,
स्मोत्सुकया. स्वजननिवहं तत्क्रयायार्थयन्ते ॥६५॥

दृष्ट्वा हृष्टं धनिकतनयं स्वेप्सितं क्रीतवन्तं,
दीनो बाल. सजलनयनो याचते मातरं स्वाम्।
दीना वस्तुक्रयमनुचितद्रव्यदानासमर्था,
दुःखेनाहो रचयति सुतं स्वाश्रुभिः क्लिन्नकायम् ॥६६

दोलारूढाः क्वचन शिशवः कौतुकायत्तचित्ता,
ऊर्ध्वंचाधो विदधति गतिं लोकभाग्यानुकारम्।
नानादृश्यं जनधनहरं केऽपि सन्दर्शयन्तः,
कर्षन्त्यन्तः पटमयगृहस्यातिकौतूहलाढ्यान् ॥६७॥

क्रीणन्त्येकाः किल युवतयो भूषणं काचसृष्टं,
काश्चित् स्वर्णद्युति सुघटितं भूषणञ्चारकूटम्।
श्रृङ्गाज्जातं रजतजनितं दन्तिदन्तादिजातं,
काश्चिच्चान्या, निजनिजदशा काममेदे शरण्या ॥६८।

नानाकारप्रतिकृतिकुलं पार्थिवं तैजसं वा,
काचं दारुप्रभवमपि वा दन्तिदन्तादिजातम्।
संविक्रेतुं विपणिनिचयस्तत्र सन्तिष्ठमानो,
विश्वाकारं गमयति किमेकत्र तत्रोपयातान् ॥६९॥

विन्दत्यस्ताचलमथ रवौ स्वस्वगेहं यियासु-
र्लोकश्रेणी स्वकमभिमतं वस्तु हस्ते दधाना।
मार्गं याता जलरयसमा व्यक्तकोलाहलत्वाद्,
दूरस्थानामपि पिशुनयत्यापणस्यावसानम् ॥७०॥

यस्मिन्नल्पायत-नदवरो घर्घरो वाति नित्यं,
वाणिज्यार्थं प्रचुरतरणिश्रेणिभिः शोभमानः ।
वर्षे वर्षे त्रिदिवतटिनी यत्र सङ्गत्य भक्तैः,
स्वां मङ्गल्या सपदि वृणुते व्यायतां भक्तपूजाम् ॥७१॥

दूरात्तीर्थाभिषवविधये तत्र लोकाः समेता,
भागीरथ्या विजयनिनदैः शून्यमापूरयन्ति ।
स्रोतःक्षिप्तैर्विविधकुसुमैरन्तरं नीयमाने
यन्माहात्म्यं भवति विदितं दूरदेशे वसद्भिः ॥७२॥

सिद्धः शास्त्रे किल नदवरो घर्घरस्तेन मान्यं
तत्रोत्पन्नैरपि बुधगणैर्बुद्धिविद्याप्रसिद्धैः ।
लोके जातं बहुपरिचितं पत्तनं कोटलाख्यम् ,
मन्दाकिन्यादिभिरिव पुरं पावनं देवतानाम् ॥७३॥

यत्र प्रायः प्रतिजनगृहं वापिका स्वच्छनीरा,
वाप्यां वाप्यामपि कुमुदिनी पद्मिनी चातिहृद्या ।
प्रातः पद्मे कुमुदनिचये चापि भृङ्गाः प्रदोषे,
पीत्वा पुष्पासवमतिसुखं गुञ्जनं व्यञ्जयन्ति ॥७४॥

रम्या वापीतटपरिगताः पादपाः सप्रसूना,
आदर्शाभे सुविमलजले द्रष्टुकामाः स्वमूर्त्तिम् ।
स्वीयच्छायामविकलतया वासरे पातयन्ति,
स्वीयं रूपं समभिलषितं सर्वजीवस्य लोके ॥७५॥

जीवा एव स्वकृतिवशाद् वृक्षभूयं भजन्ते,
संज्ञामन्तर्दधति किल ते कुर्वते चापि भोगम् ।
तस्मादेव प्रसरति सुखे वासना कापि तेषां,
द्वेषो दुःखेऽपि च तत इदं युज्यते निर्विकल्पम् ॥७६॥

श्यामः कश्चिज्जनयति नगो रक्तवर्णं प्रसूनं,
कश्चिच्चान्यः सितमथ परः पीतमन्योऽपि कृष्णम् ।
कार्य्ये हेतोर्गुणसमुदयो नीतिरेषा मृषा किं ?
नैषा मिथ्या यदिह धरणी सप्तरूपैन हेतुः ॥ ७७॥

वापीनीरं सितमपि भुवोपाधिना यत्र नीलं,
शोभा धत्तेऽसितमणिमयादर्शवत् स्पर्शशीतम् ।
ग्रीष्मे सन्तर्पणमपि खरोत्तापतप्त खरांशोः,
सन्तापाय प्रभवति परस्पर्शवीतस्वभावम् ॥७८॥

ग्रीष्मे तीव्रैस्तपनकिरणैरुष्णतां सम्प्रपन्ने,
वापीनीरे जगति नितरां जातवत्यर्द्धशुष्के ।
मेघोत्सृष्टं शिशिरसलिलं प्राप्य वर्षाद्यपाते,
तीरं सर्पन्त्यनुगतगणा यत्र मीनाः कवय्यः ॥७६॥

दृष्ट्वा नीरात्तटमुपगतास्ताः समुत्साहवन्तो,
वृष्टौ सत्यामपि परिगृहीतातपत्रा भवन्तः ।
दक्षा बाला अपि सुतरुणा मत्स्यधानीं दधानाः,
संगृह्णन्ति प्रियकवयिका स्वाद्वम्मीनभक्ताः ॥८०॥

भुक्त्वा भूमे रसमतिखरं तृसमात्मप्रियायाः,
,सूरं काले जलधरगणाश्छादयित्वा हि तस्याम् ।
हर्षाद् वर्षासमुचितरसं निक्षिपन्त्यप्रमादं,
भीत्येवान्तः स्वरसविगमापाण्डुदेहा विटाभाः ॥८१॥

वर्षाकालप्रकृतिवशतो यत्र जीमूतसङ्घे,
सत्यप्यम्भःक्षरणविमुखे प्रोच्छ्रसद्वारिधारा ।
खातं क्षेत्रं जनपदपथं सर्वमाप्लावयन्ति,
काले तस्मिन् नहि तरिमृते क्वापि यानं जनानाम् ॥८२

ग्रामप्रान्तस्थित-सुविततक्षेत्रमालाम्बुमग्ना,
यस्मिन् वर्षाविभवसमये सागराभा विभाति ।
तस्या रूपं र्हा रमकरोत् पद्मकह्लारमाला,
वातक्षोभादपि समुदितस्तत्र वीचिप्रपञ्चः ॥८३॥

यत्र क्षेत्रे निरवधिजलप्लाविते प्रेक्ष्यमाणा,
दृष्टिः पश्यत्यमलसलिलान्नान्यदब्धिप्रमाणे ।
दृष्ट्वा स्वच्छं सलिलममितं कौतुकादुल्लसन्त-
स्तर्य्यां चर्य्यां तरुणनिकराः काममायोजयन्ति ॥८४॥

स्पर्द्धाविद्धास्तरिमुपगता यत्र दृप्ता युवानो,
नौकामन्यां जवपरिगता जेतुमात्मीयनावा ।
यावच्छक्य द्रुतमतितरा क्षेपणी पातयन्तः
प्रोतसाहार्थं स्वकृतिसुहृदां वाचमावर्त्तयन्ति ॥८५॥

तत्र क्षेत्रे भवति पयसो यावती नित्यवृद्धिः,
शस्यस्तम्बा अपि विदधते तावतीमात्मवृद्धिम् ।
तस्मान्नीरोच्छ्वसनजनिता न क्षतिः कापि यत्र,
स्वीये वीर्य्ये रिपुबलसमे नो पराभूतिशङ्का ॥८६॥

केदाराणां जलगततया भूमिभेदो न लक्ष्यो-
धान्याग्राणामपि सुमिलनाद भूमियुग्मस्य यस्मिन ।
धान्यच्छित्तेरुचितसमये सारयित्वा तदग्रं,
स्व स्वक्षेत्रात् कृषकनिकराः स्वस्वशर्म्म भजन्ते ॥८७॥

पक्वं शस्यं सुनिपुणशुकाः संग्रहीतुं सयत्ना,
यावच्छस्योपरि विदधति न्यस्तगात्माङ्घ्रियुग्मम् ।
शस्यस्तम्बावनमनवशादासितुं नो समर्थाः,
स्वल्पं चञ्च्वा सपदि दधतः शस्यमूर्ध्वं पतन्ति ॥८८॥

मन्दाक्रान्तावृत्तम्

शालिस्तम्बा नमितशिरसः शस्यभारेण भूयो-
निम्नाभागा विनयमवतां साम्यमासादयन्ति ।
नालं क्षोभं भवति पवनस्तान् विनम्रोत्तमाङ्गान्,
लोके योग्या विनयघटना दातुमन्यानुकूल्याम् ॥८९॥

दीना मग्नं पयसि सदनं वीक्ष्य वंशैरथान्यैः,
कृत्वा मञ्चं तदुपरि नरा यत्र कुर्वन्ति वासम् ।
केचिद्दीनाः स्वजनसहिताः कष्टमाश्रित्य नौकां,
दीर्घं वर्षासमयमुदितं यापयन्ते कथञ्चित् ॥९०॥

निम्नक्षोणीकृतवसतयो जन्तवो जम्बुकाद्याः,
स्वप्राणार्थं जलदसमये प्रोन्नतां यान्ति भूमिम् ।
स्थाने स्थाने भुजगनिवहा गेहरन्ध्रेषु लीनाः,
कृष्णा गूढाना मनुजविपदं भाविनीं सूचयन्ति ॥९१॥

एकीभूते सकलसलिले वार्षिकोच्छ्वासहेतो-
र्मीना यस्मिन् सुखवसतये दीर्घिकाः संश्रयन्ते ।
वर्षाकालात् परमथ बहिस्तोयराशौ विशुष्के
नास्वाबद्धाः सुनिपुणधृता जीवनं हा त्यजन्ति ॥९२॥

ग्रीष्मे भानोः किरणनिकरैः प्लुष्टकायाः प्रकामं,
मेघाम्भोभिः शिरसि सलिलैरुच्छ्वसद्भिश्च मूले ।
सिक्ता यस्मिन्नवरसभरैः पादपाः स्निग्धपर्णा,
रोगक्षीणा इव सुतरुणा भेषजैराप्तवीर्य्याः ॥९३॥

वात्यावेगाद् भुवि निपतिते पादपे शीर्णमूले,
यस्मिन् वल्ली तदुपरिगता लुण्ठिता भूमिपृष्ठे ।
गाढं दुःखं जनयतितरामन्तरे सज्जनानां,
पत्यौ प्रेते विकलकरणा मूर्च्छितेवार्त्तपत्नी ॥९४॥

एकं वृक्षं परतरुशिरस्यात्मशाखाप्रताने-,
र्वात्याक्षोभादतिगुरुतरामाहतिं माधयन्तम् ।
मत्वा निष्कारणमपकृतिव्यापृतं वीरमानी,
सोऽसौ तुल्यो रिपुरिव कराघाहतिं तस्य शीर्ष ॥९५॥

अत्युद्दामः सपदि पवनः काननान्तद्रुमाणां,
पुष्पं पक्वं फलमपि लघु प्रापयन् दूरदेशम् ।
भूमौ कस्याञ्चन विसृजति प्रौढदस्युर्यथा स्वं,
शोच्यास्तेन प्रसवरहिता हन्त निःस्वा इवामी ॥९६॥

नालं हर्त्तुं प्रसवनिचयं मत्तवात्या तु येषां,
ते निस्तब्धप्रकृतिमुदिता व्यक्तशुभ्रप्रसूनाः ।
हास्येनेव प्रसवरहितं मूढमासूचयन्ति,
लिप्ताधीशः परमवहितो नैति चौराद् विपत्तिम् ॥९७॥

यस्मिन् कृष्ट्वा कृषकनिकराः शस्यभूमिं स्वकाले,
सारं क्षिप्त्वा क्षितिपरिमितां वीजराजिं वपन्तः ।
नीरोच्छ्वासे प्रकृतिसुलभे वार्षिके सव्यपेक्षा,
नैको हेतुः फलति रहितो हेतुभिर्यावदन्यैः ॥९८॥

सार्द्धं शस्याङ्कुरसमुदयेनोद्गता उद्भिदो ये,
वृद्धौ वाधां विदधति परां जातशस्याङ्कुराणाम् ।
तेषामुत्सारणविधिकृते कर्षकाः क्षेत्रमध्ये,
मत्वा तुच्छं मिहिरकिरणं श्रान्तिसीमां सहन्ते ॥९९॥

यत्र प्रातः पतिमतिगुरुं सर्वतः कामिनीनां,
साध्वी श्रद्धाकलितहृदया सादरं बन्दमाना ।
तूर्णं शय्यां परिहृतवती सूरसूतं ह्यनूरुं,
दृष्ट्वोद्यन्तं सुरपतिदिशि व्योमभागे नमन्ति ॥१००॥ (क्रमशः)

# कृतकालगणनायाः कारणान्यनुशीलनञ्च

[ निबन्धकः—पद्मभूषण-श्रीसूर्यनारायणव्यासः]

( पूर्वानुवृत्तम् )

विजयोत्सवस्य च परम्परा अद्य यावत् प्रचलिताऽस्ति। अयं कार्तिक कृत्तिकात आरभ्यतेऽतः "कृतः" इति सङ्केतो भवितुं शक्नोति। एवमेव श्रीमदल्तेकरैरन्या अपि धारणाः स्थापिताः—तेषां विचारोऽयमस्ति—"कृतनामकेन केनापि राज्ञाऽथवाऽधिनेत्रा अस्यारम्भः कृतः, तस्मादेवास्याभिधानं 'कृत' इति जातम् ( नाग. प्र. प. व, ४८ अ. १-४ )। परमयं कृतः को राजा अधिनेता च भवितुमर्हतीत्यस्मिन् विषये किमपि स्पष्टं मतं स्थिरीयितुं ते नापारयन्। तेषां कथनमस्ति यत्—गतेषु १००० अथवा १५०० वर्षेषु कृतनामकः कोऽपि शासको नाभूत्। यदा स्वयमेते महोदयाः शिलालेखानामनुसारेण अस्यामेव शताब्द्यां कृतशब्दस्योल्लेखं स्पष्टतया पश्यन्ति, तदा १५०० वर्षेषु 'कृत' नामकस्य कस्यापि नेतुरुत्पत्तेः कोऽप्यर्थो न भवति। अवश्यमेव कृत इतः पूर्ववर्ती कोऽपि विशिष्टो जन इति मन्तव्यं, तैः पुराणेष्वनेकेषां "कृत"नामकानां प्रचारो दृष्टः। विश्वेदेवानां 'कृत'स्य, रोहिणी-वासुदेवयोरेकस्य सूनोः कृतस्य, हिरण्यनाभशिष्यस्य कृतस्य, उपरिचरपितुः कृतस्यापि विचाराः कृताः। न इदमपि स्वीकुर्वन्ति ते यत् प्राक्तने काले इदं नाम सुष्ठुरूपेण प्रचलितमप्यभूत्, तथापि तेऽनेन कृतवत्सरेणोचितां सङ्गतिं साधयितुं नाशकन्। उचितमप्यस्ति, यतो हि तैः सूचितस्य कस्यापि कृतस्य मालवैः सह संयोजनमावश्यकं भविष्यति, किञ्च समयेन सहापि सुसङ्गतं कारणं भविष्यति, किन्तु उपर्युक्त एकोऽपि 'कृतः' मालवकृतकालगणनया कदापि योजयितुं न शक्यते, तथा न शासकोऽथवा गणतान्त्रिक इति कथयितुं पार्यते। त इदम् ऐतिहासिकं सत्यं स्वीकुर्वन्ति यद् ईशवीयवत्सरात् पूर्वं ६० वर्षाणां निकटप्रायैः शकैरुज्जयिनी

१५ शतकादारम्भो मानितः। चीनदेशीया आरबदेशीयाश्चापि कृत्तिकायै महत्त्वं ददति, कारणादस्मात् 'कृत' शब्दे कृत्तिकायाः कार्तिकस्य च समावेशो भवेत्, तर्हि साधारणरूपेणासङ्गते सन्देहस्य च नावकाशः। द्वितीयश्च सन्देहः 'कृतयुग' (सत्ययुग) स्य विषयेऽपि प्रचलितोऽस्ति। अस्योपर्यपि प्रसङ्गवशादत्र विचारणं न भविष्यत्यनुचितम्। प्रायो युगानां विषये परःसहस्र वर्षवती धारणाऽस्माकं मनसि सन्देहानुत्पादयन्ती तिष्ठति। कृतोऽर्थात् सत्ययुगस्य समयः परःसहस्राणां वर्षाणामवमत। परमेतद् व्यवहारदृष्ट्या नास्ति सुसङ्गतम्। मानवयुग ऋग्वेदानुसारं --'तदृचुषे मानुषे मा युगानि' तथा 'विश्वे ये मानुषा युगा यान्ति (५.५२।४२) स्पष्टरूपेण दर्शित', तथा तस्यायु' 'जीवेम शरदः शतात' कथितम्। अयं मानवयुगः सहस्राणां वर्षाणां समविष्यच्चेत् 'शरद शतात' इत्यस्य शतायुषो वार्ता कथं सुसम्बद्धाऽभ्यास्यत्? एवमेव मामतायाः पुत्रो दीर्घतमा दशमे युगे कथं वृद्धोऽभविष्यत्? दशमो युगस्तु प्रतियुगं १० वर्षात्मक इति मन्महे तर्ह्येव १०० वर्षेषु पूर्णो भवितुमर्हति। अयं दीर्घतमा अपि वैदिक एवास्ति। 'दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे'—(ऋ० १।१५८।६) तथा देवेभ्यस्त्रियुगं पुरा' इत्यत्र सायणस्य मतानुसारं वसन्त-वर्षा-शरद एतान् त्रीन् ऋतून् यावदेव परिमितो भवति। अवश्यमेव तैत्तिरीयब्राह्मणे (१-४-१०) तथा (३-११-४) संवत्सर-परिवत्सर-इदावत्सरानुवत्सरेद्वत्सरा एवं पञ्च वर्षा एव मानिताः। अतएव वार्षिकसंवत्परिवर्तनक्रमस्यास्य स्वीकारात्पूर्वं देशेऽस्मिन् युगपद्धतेरेव प्रचार आसीत्। सङ्कल्पः ५-१० वा वर्षाणामेवावर्तत, अथच सूर्यसिद्धान्तकारेण नवीनायाः पद्धतेः प्रचारात् पूर्वं सम्भवतस्तस्यैव कृतयुगस्य स्वल्पावशिष्टतायाः स्पष्टः सङ्केतः कृतो भवेत्। इदं स्वाभाविकमेव। इयं ई० पूर्वेषां ५७ वर्षाणां नैकटिकी घटना भवितुमर्हति यदा मालवस्य कृतस्य वैक्रमस्य वा गणनापद्धतेः प्रारम्भः कृतः स्यात्। इदं तु स्पष्टमेव यद् शुङ्गानां कोऽपि वासरः स्वतन्त्ररूपेण न मिलति। दिग्विजयानन्तरमपि नैतादृशः समुल्लेखो मिलति, अवश्यमेव तेन 'गणशतपरिवृत्तै' इत्यनुसार'

एकशतानां गणानां संग्रहो दिग्विजयाय कृतोऽभवत् । तस्मिन्नेव मालव-प्रभाव. परिणतोऽभून् तथाऽग्रे मालवसंवत्सरारम्भस्य कारणतां गतम् । अल्तेकराणां मतानुसार तु ईशवीयवत्सरस्य प्रथमद्वितीयशतकयोरस्मिन् क्षेत्रे मालवानां प्रभावावस्थितिर्मान्या भवति । किन्तु ये जना मालवानामागमनं तेषा बहो. कालादनन्तरं मन्वते तैरिदमावश्यकं विचारणीयं भविष्यति यद् शुङ्गाग्निमित्रयोरन्तिके विदिशायां "मालविका" ईशवीयवत्सरात् पूर्वं प्रथम-शतके स्वनाम्ना सह 'मालव' शब्दं कथं योजयेत् ? विदर्भराजकुमारीत्वे-ऽपि तस्या विदिशाया "मालविका" नामरक्षणं निश्चयेन सन्देहस्य विचारस्य च विषयतामेति । तत्र च 'कृत' शब्दहेतौ व्यक्तेरन्वेषणे श्रीअल्तेकरमहोदयैः पुराणेष्वोऽनकानि नामानि गवेषितानि, परं तेषां ध्यानं सम्भवत एकं प्रसिद्धं पौराणिक प्रभावशालि मालवं कार्तवीर्यं कृतवीर्यं च प्रति न गतं, अयं प्रतापशालो नेताऽपि देशे राज्यविस्तारकर्मणि संलग्न आसीत्; आसीदयं नर्मदातटवर्तिन्या माहिष्मत्याः, किञ्चेयं नाभूदतिप्राक्तनकालिकी घटना बौद्धयुगे गोविन्दसुत्त-दीर्घनिकाय ( १९।३६ ) सदृशयोः पालीग्रन्थयोर्यस्योल्लेखो माहिष्मत्या राजधानीति रूपेण कृतः । एतदनन्तरमेव शुङ्गाना सत्ता विदिशाया स्थापिताऽभूत् तथा ते पूर्वमालवसंज्ञया मानिताः । कालिदासेन स्वस्य. मेघदूते विदिशा प्रख्यातराजधानी ( शुङ्गकालिको )ति कथिता । यथा— "तेषा दिक्षु प्रथितविदिशालक्षणां राजधानीम् ।"

कालिदासेनावन्ती "श्रीविशालां विशालाम्" इति गदिता ॥

राजधानी क्वापि नोक्ता । यद्यपि कालिदासो बौद्धकालिकं प्रद्योतम् अवन्तीनरेश-रूपेण जानाति स्म— 'प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे, हैमं तालद्रुम-वनमभूदत्र तस्यैव राज्ञः ।' तथापि राजधानीरूपे तत ऊर्ध्वकालिकी विदिशैव प्रदर्शिता । शुङ्गश्च क्वापि संवत्प्रवर्तनं न कृतम् । यतो हि तेषामन्तिमस्य विलासिनरेशस्य ( देवभूतेः ) समये स्वल्पे समये एव शुङ्गसत्ता समाप्तिङ्गताऽऽसीत् । एतेन प्रमाणितं भवति यत् माहिष्मत्याः शासनस्य प्रभावो बौद्धानां युगेऽपि स्थितोऽभूत् माहिष्मत्याः कार्तवीर्यः-कृतवीर्योऽस्ति, एतेनोत्तरभारतस्य

विशाले भूभागे प्रभुत्वं स्थापितं, तस्य ज्ञानं निकटस्थघटनावशात् महाकवेः श्रीकालिदासस्याप्यभवत् तेन रघुवंशे इन्दुमत्याः स्वयंवरसमये माहिष्मतीनरेशस्य वर्णनम् अतीव प्रभावशालिभिः शब्दैः कृतम् —तेन प्रदर्शितम् - अष्टादशसु द्वीपेषु कार्तवीर्यस्य विजयस्तूपा ( विजयस्तम्भा ) निखाता अभूवन् , तथा तेन सह यो राजशब्दः संयुक्त आसीत् सः "अनन्यसाधारण" आसीदिति ।

"संग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥" रघु. ६-३

( क्रमशः )

# पुस्तकालोचनम्

प्रेयांसो विद्वांसः, यत्किञ्चित् प्रियमद्य वा विनिवेदयामः । अस्माकमतिप्रियेण **श्रीयुक्तदीननाथत्रिपाठि**नवतीर्थमहाभागेनात्मन आश्रमिकेण **मेधाचैतन्यनाम्ना** सद्यः सम्पादितमास्ते **श्रीकृष्णयज्वकृत मीमांसापरिभाषा**नामकं पुस्तकम् । यद्यपि सन्ति नाम मीमांसापरिभाषापुस्तकस्य बहूनि संस्करणानि भिन्नभिन्नेभ्यः प्रतिष्ठानेभ्यः प्रकाशितानि, परं तैस्तैः पुस्तकैः शिक्षार्थिना यावानुपकारः सम्भवति, ततोऽपि महत्तमः समुपकारो भवितानेनाभिनवेन संस्करणेन विशेषतो बङ्गीयानां शिक्षार्थिनामिति नो हृदयम् । पुस्तकेऽस्मिन् सरलैर्वङ्गानुवादैः दुरूहस्थलेषु सम्पादकरचिताभिष्टिप्पणीभिश्च महद् वैशिष्ट्यमस्ति । स्वभावजटिलं खलु मीमांसाशास्त्रम् । गुरुकृपया कथञ्चिदस्य पठनपाठने भवितुमर्हतः । परं निपुणतयाध्ययने यावान् कालो व्ययितो भवति, तावान् कालः कथंकारमतिकरालेऽस्मिन् काले क्षेपयितुं शक्यः स्यात् ? तस्मादर्थसारल्यसम्पादनमस्य ग्रन्थस्यासीदत्यावश्यकम् । तदेतत् सम्पादयता सम्पादकमहोदयेन मीमांसाशास्त्रसमालोचनतत्पराणां परः समुपकारः संसाधित इति नाधिकोक्तिः । आशास्महे सम्पादनदिशा ग्रन्थस्यास्य गुणान् संगृह्य दोषान् सकृपं परिहरेयुर्विद्वज्जनाः । अन्ते चैतद्ग्रन्थसम्पादकमहोदयानां सुदीर्घमायुः परमेशं निकषा कामयामहे तदीयभविष्यत्कर्मपद्धतिमुत्प्रेक्षमाणा इति शम् । **श्रीरामधनशास्त्रिणः**

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph. D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; (Out of stock).

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; (Out of stock).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members). –

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada of Tarkacharya. Rs. 2 ; (Out of stock).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 P ·62 P ( for members ).

24. **Satarانja Kutuhalam**—Ed. by Prof. Chintaharana Chakravarti Kavyatirtha M. A. ·50 p.

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5.

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 P ; Rs. 1·25 P ( for members ).

27. **Manavaka-gauravam**—(Drama) by M M Kalipada Tarkacharya, Rs. 2·50 P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya Rs. 1·50 P and Rs. 1·25 P (for members).

29. **Brahmana-Sarvasva**—(A Pre-Sayana Vedic Commentary) of Halayudha, Ed. Prof. Durgamohan Bhattacharya. Rs. 25/-

30. **NatakaparibhasA** of Singabhupala—Ed. by Prof. Dr. Kalikumar Datta Sastri, Rs. 3 ; (Rs. 2 for members).

31. **Daridra-Durdaivam**—(Prahasana) by Pt. Srijiva Nyayatirtha, Rs. 3 ; (Rs. 2 for members).